त्यमिदं ज्ञानं कश्चन गुणः। ज्ञानजन्यः विवेक इति व्यवह्रियमाणः अतिशयविशेषः एभिः संविदिति व्यवह्रियमाण इव।

(च) ज्ञानस्वरूपविषये त्रिष्वपि मतेषु नैयायिकमतमेव उचितम्। अनुभवानुरोधित्वात्। "घटविषयकज्ञानवानहम्" इत्याद्यनुव्यवसायगम्यत्वस्य सर्वानुभवसिद्धत्वात्। भाट्टाभ्युपगतज्ञातताखण्डनम्, अनुमानगम्यत्वनिरासश्च विस्तरभिया नात्र प्रस्तुतौ।

पटः १

| वादिनः | ज्ञानपर्यायाः | प्रमाणम् |
|---|---|---|
| नैयायिकाः | बुद्धिः, उपलब्धिः, ज्ञानं, प्रत्ययः | मानसप्रत्यक्षगम्यम् |
| भाट्टाः | बुद्धिः, ज्ञानम्, संवित् | ज्ञाततालिङ्गकानुमानगम्यम् |
| प्राभाकराः | ज्ञानम्, संवित्, संवित्तिः | अपरोक्षम्, स्वयंप्रकाशम् |

**०-२ ज्ञानविभागः - स्मृत्यनुभवादिः**

०-२·१ **न्यायसिद्धान्तः** - ज्ञानं तावद् न्यायदर्शने गौतमसूत्रेषु नैव विभक्तम्। कणादेन महर्षिणा वैशेषिकसूत्रेषु विद्या-अविद्याभेदेन द्वैविध्यं तत्रोपन्यस्य[1] लक्षणविभागादिकमपि

1. अदुष्टं विद्या; इन्द्रियदोषात् संस्कारदोषाच्चाविद्या [वै. द. ९-२-१३-९-२-११]

विहितम् । तन्मतानुरोधं संशय-विपर्यय-अनध्यवसाय-स्वप्नभेदेन अविद्या चतुर्विधा । विद्या च प्रत्यक्ष-लैङ्गिक-स्मृत्यार्षभेदेन चतुर्विधा[1] ।

सर्वप्रथमतया स्मृत्यनुभवभेदेन बुद्धिविभागं कृतवान् दशमशतकवासी शिवादित्यः सप्तपदार्थ्याम्[2] । तेनैव अनुभवस्यापि प्रमा-अप्रमाविभागः ऐदम्प्राथम्येन कृतः । विषयेऽस्मिन् वैशेषिकाणां नैयायिकानां च जागर्ति अल्पीयान् भेदः । यथार्थायथार्थभेदेन नैयायिकमते द्विविधो ह्यनुभवः । प्रत्यक्ष-अनुमिति-उपमिति-शाब्दभेदेन यथार्थानुभवः चतुर्विधः । अयथार्थानुभवश्च संशय-विपर्यय-तर्कभेदेन त्रिविधः । द्विविधानुभवभिन्नतया ज्ञानविभागतया नैयायिकैः निर्दिष्टा स्मृतिः वैशेषिकैः विद्याविभागे परिगणितेति न्यायवैशेषिकयोर्भेदः[3] ।

विश्वनाथेन कारिकावल्याम् अनुभूति-स्मृतिभेदेन बुद्धेः द्वैविध्यमुपदर्शितम् । ततः अनुभूतिः प्रत्यक्षानुमित्युपमिति-शाब्दभेदेन चतुर्धा विभक्ता[4] । अन्नंभट्टेनापि अयमेव पन्थाः

---

1. तस्याः सत्यप्यनेकविधत्वे समासतो द्वे विधे विद्या चाविद्या चेति । तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा; विद्यापि चतुर्विधा, प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । [प्र. भा. ८४; ९४]

2. बुद्धिरपि स्मृतिरनुभवश्च । [सा. प. २९]

3. विद्यापि चतुर्विधा, प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । [प्र. भा. ९४]

4. ------------------ -बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ।। [कारि. ५१]

अनुसृतः[1] । प्रथमतः स्मृत्यनुभवभेदेन ज्ञानं द्विविधम् । अनुभवः यथार्थायथार्थभेदेन द्विविधः । यथार्थानुभवोऽपि प्रत्यक्ष-अनुमिति-उपमिति-शाब्दभेदात् चतुर्विधः । अयथार्थानुभवः संशय-विपर्यय-तर्कभेदात् त्रिविधः । एवं बुद्धिवंशः सुमहान् नैयायिकैरभ्युपगतः दरीदृश्यते ।







०-२-२ **भाट्टसिद्धान्तः**— इदं च ज्ञानं भाट्टमतानुरोधं चतुर्विधम्, अयथार्थ - स्मरण - अनुवाद - यथार्थभेदेन

---

1. सा द्विविधा । स्मृतिरनुभवश्चेति । संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तद्भिन्नं ज्ञानमनुभवः । [त. स. २२-२३]

इति (मा. मे. २५२)। तत्र भ्रमसंशयादीनां अयथार्थज्ञानेऽन्तर्भावः (मा. मे. ४)। सर्वदर्शनकौमुद्याम् अप्रामाण्यं त्रिधा विभक्तम्, मिथ्यात्वाज्ञानसंशयभेदेन[1]।

०-२-३ प्राभाकरसिद्धान्तः— प्राभाकरसिद्धान्तानुरोधं संविदपरपर्यायं ज्ञानं स्मृत्यनुभवभेदेन द्विविधम्। ज्ञानस्यैवं साक्षाद् विभागः प्राभाकरग्रन्थेषु यद्यपि न्यायनिबन्धेष्विव नोपलभ्यते। तथापि प्रमाणप्रकरणस्थवाक्येभ्य एवं विभागः न तेषामनिष्ट इति प्रतीयते। यथा च तन्त्ररहस्येऽभ्यधायि—

"अतः सर्वं ज्ञानं यथार्थम्। याथार्थ्येऽपि स्मृतिरप्रमाणम्। अनुभूतिः प्रमाणमिति सिद्धम्।" (त. र. ४) इति।

एतत्पंक्तिदर्शनेनेदमस्माभिः ज्ञायते यद् याथार्थ्यस्वभावं सर्वं ज्ञानं स्मृत्यनुभूतिभेदेन द्विधा विभिन्नमिति। अनुभव एवानुभूतिः। तथा तैरेव व्यवहृतत्वात् (त. र. २)।

तन्त्रसिद्धान्तरत्नावल्यां तु, ज्ञानमेतेषां मते यथार्थायथार्थभेदेन द्विविधमित्युक्तम्। अयथार्थज्ञानं भ्रमात्मकं नाङ्गीकुर्वन्त्येते। किन्तु भेदाग्रहनिबन्धन एव भ्रान्तिव्यवहार इति तेषामभिप्रायः।

तथा हि - शुक्तिकाशकलं कश्चित् पश्यति। तत्रास्य स्फुरितं रजतसादृश्यं फालफल्यरूपं शुक्तेराकारं तिरोदधाति; रजतं च स्मारयति। तस्मिन्नवसरे शुक्तिरजतयोर्भेदः नैव

1. अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः। [स. कौ. ५२]

गृह्यत इति तादात्विकं ज्ञानं भ्रम इत्युच्यते। वस्तुगत्या तत्र तदा नैकं ज्ञानम्; किन्तु ज्ञानद्वयम्। एकं 'इदम्' इति प्रत्यक्षात्मकम्। अन्यच्च 'रजतम्' इति स्मरणरूपम्। शुक्तिविषयकप्रत्यक्षं नैवायथार्थम्; रजतविषयकं स्मरणमपि न खल्वयथार्थमिति, कस्य पुनरत्रायथार्थता प्रतिपादयितुं शक्येति (त. सि. र. १७३)। अतः अख्यातिवादिनामेतेषां मते सर्वस्यापि ज्ञानस्य यथार्थतया स्मृत्यनुभवभेदेन ज्ञानं द्विविधमिति सारांशः[1]।

०-२-४ **समीक्षणम्**— ज्ञानविभागविषये प्राभाकरैः नैयायिकानां मतमेवानुसृतम्। किन्तु भाट्टैस्तावद् ज्ञानम् अयथार्थ-स्मरण-अनुवाद-यथार्थभेदेन चतुर्धा विभक्तम्। अत्र भाट्टमते न कोऽपि नूतनांशोऽस्ति। एतदपेक्षया नैयायिकमत एव औचित्यं वर्वर्ति। तथा हि - प्रथमतः ज्ञानं द्विविधम्, स्मृतिः अनुभवश्चेति। अनुभवश्च द्विविधः, यथार्थायथार्थभेदेन। अनुवादानां यथायोगं यथार्थेऽयथार्थे वाऽन्तर्भावः। अतः भाट्टमतापेक्षया नैयायिकानां पन्थाः साधीयान्।

अत्र वैशेषिकैः स्मृतेः विद्यापरपर्याये यथार्थज्ञानेऽन्तर्भाव उक्तः। स न समीचीनः। अनुभवानुरोधेन स्मृतेर्यथार्थतायाः वा अयथार्थतायाः वा निर्णीयमानत्वात्। अतः अनुभवविभिन्नतया स्मृतेः, ज्ञानप्रभेदतया विभाग एव समुचितः।

---

1. स्मृतिव्यतिरिक्ता च संविदनुभूतिः। स्मृतिश्च संस्कारमात्रजं ज्ञानमिति। [त. र. ८]

## ०-३. प्रमालक्षणम्

०-३-१ न्यायसिद्धान्तः— प्रमा, प्रमितिः, यथार्थानुभवः, विद्येति पर्यायाः । प्रमीयत इति प्रमा । सूत्रकारेण गौतमेन प्रथमसूत्रान्ते 'तत्त्वज्ञानात् निःश्रेयसाधिगमः' इति निःश्रेयसोपायतया तत्त्वज्ञानमुपदिष्टम् । तदनु द्वितीयसूत्रे निःश्रेयसप्राप्तिप्रकारोपवर्णनपरे तत्त्वज्ञानात् मिथ्याज्ञाननाशस्योपदिष्टतया तत्त्वज्ञानं प्रमात्मकं ज्ञानमेवेति सूत्रकारस्य आशय इति सुदृढमस्माभिर्ज्ञायते[1] । भ्रमात्मकं मिथ्याज्ञानं प्रमात्मकेन तत्त्वज्ञानेन निवर्त्यंत इति कथनेन प्रमालक्षणघटकं याथार्थ्यमिति प्रतीयते ।

वात्स्यायनेन भाष्ये 'उपलब्धिसाधनानि प्रमाणानि' इत्यत्र उपलब्धिपदं बुद्धिपरतया सूत्रकारप्रयुक्तं (न्या. द. १-१-१५) प्रमापरतया प्रयुक्तम् । ज्ञानस्य निर्विषयकस्याभावाद् अत्रोपलब्धिपदेन अर्थविषयकज्ञानत्वरूपप्रमात्वमेव भाष्यकृता स्वीकृतमित्युपलभ्यते । अत एव प्रथमसूत्रभाष्ये अर्थविषयकज्ञानस्य प्रमात्वमसूचि भाष्यकृता[2] । उपलब्धिहेतोः प्रमाणत्वमभ्युपगच्छता वार्तिककारेणापि प्रमायाः अर्थविषयकज्ञानत्वमित्यसूचि (न्या. वा. ९) । टीकाकारेण वाचस्पतिमिश्रेण अर्थविषयकज्ञानत्वमेव प्रमेत्युक्ते, अप्रमायाम् स्मृतौ चातिव्याप्तिमुद्वीक्ष्य 'अर्थाव्यभिचारि स्मृतिभिन्नं ज्ञानं

---

1. 'प्रमाणप्रमेय ......तत्त्वज्ञानान्निःश्रेयसाधिगमः' । 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' । [न्या. द. १-१-१,२]
2. यत्तदर्थविज्ञानं सा प्रमितिः [न्या. भा. २]

प्रमे'ति प्रमालक्षणं परिष्कृतम् । अर्थाव्यभिचारित्वं नाम यथावस्थितार्थविषयकत्वम्[1] । टीकापरिशुद्धौ उदयनाचार्येण अविपरीतानुभवः प्रमेति प्रमालक्षणमुक्तम्[2] ।

न्यायकुसुमाञ्जलावुदयनाचार्यः महता आग्रहेण प्रमाविचारं प्रवर्तयामास । तत्र यथार्थानुभवत्वमेव प्रमाया लक्षणमिति प्रपञ्चितम् । आविष्कृताश्चानधिगतार्थविषयकप्रमालक्षणे बहवो दोषाः[3] । न्यायदर्शनप्रथमसूत्रान्ते 'तत्त्वज्ञानाद्' इत्युक्ततया, प्रत्यक्षसूत्रे 'अव्यभिचारि' इति प्रयुक्ततया च यथार्थानुभव एव प्रमेति लक्षणं नैयायिकैरभ्युपगम्यते[4] । सम्यगनुभवापरपर्यायः तत्त्वानुभवः प्रमेति शिवादित्यः (स. प. ६८) । न्यायमञ्जरीकारेण जयन्तभट्टेन अव्यभिचारिणी संशयभिन्ना चार्थोपलब्धिः प्रमेति प्रमालक्षणं सूचितम्[5] ।

वैशेषिकैः प्रमापर्यायतया विद्यापदं प्रयुज्यते । भ्रमपर्यायतया चाविद्यापदम् । दोषाजन्यज्ञानत्वम्[6] अथवा विशेष्या-

---

1. लोकाधीनावधारणो हि शब्दार्थसम्बन्धः । लोकश्च स्मृतेरन्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे । [ता. टी. ३५]
2. प्रमा चाविपरीतोपलब्धिः । अतोऽविपरीतानुभवजनकत्व लक्षणमव्यभिचारित्वमेव प्रमाणमित्यर्थः । [परि. ७९]
3. अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक् ।
   यथार्थानुभवो मानमनपेक्षतयेष्यते ।। [न्या. कु. ४-१]
4. यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्यन्ति । तत्त्वज्ञानादिति सूत्रणात् । अव्यभिचारि ज्ञानमिति च [न्या.कु.४२८]। मितिः सम्यक् परिच्छित्तिः । [तत्रैव. ४-५]
5. अव्यभिचारिणीमसंदिग्धामर्थोपलब्धि विदधती बोधाबोधस्वभावा सामग्री प्रमाणम् । [न्या. म. १२]
6. अदुष्टं विद्या [वै. द. ९-२-१२]

वृत्त्यप्रकारकज्ञानत्वम् (प्र. भा. टी. ८४) विद्यायाः लक्षणं कथ्यते । मणिग्रन्थे प्रमायाः अष्टलक्षणानि अनूद्य खण्डितानि । अन्ते सिद्धान्तरूपाणि सप्तलक्षणानि प्रतिपादितानि । यथा—

(क) कुसुमाञ्जल्युक्तं 'यत्र तदस्ति तत्र तस्यानुभवः प्रमा' इति लक्षणं स्वीकृत्य 'तद्वति तत्प्रकारकानुभवो वा प्रमा' इति प्रमालक्षणमुक्तम् (त. चि. प्र. ४३८) ।

(ख) विषयताश्रयावृत्त्यप्रकारकानुभवः प्रमा (तत्रैव ४५४) ।

(ग) यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकानुभवः स्वप्रकारसमानाधिकरणविषयताकोऽनुभवो वा प्रमेति लक्षणद्वयम् (तत्रैव ४५४) ।

(घ) विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोगी अनुभवः प्रमा (तत्रैव ४५५) ।

(ङ) विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयत्वप्रतियोगी अनुभवः प्रमा (तत्रैव ४५५) ।

(च) विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वानिरूपकोऽनुभवो वा प्रमा (तत्रैव ४५५) ।

(छ) विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयतानिरूपकोऽनुभवो वा प्रमा (तत्रैव ४५५) ।

उक्तपूर्वेषु लक्षणेषु "इमौ घटपटौ" इति समूहालम्बनप्रमायामव्याप्तिः भवति । सा च घटत्वावच्छिन्नायां विषयतायां स्वसमानाधिकरणात्यन्ताभावप्रतियोगिपटत्वानवच्छिन्न-

त्वम्, पटत्वावच्छिन्नायां विषयतायां च तादृशघटत्वानवच्छिन्नत्वं वर्तत इति तादृशविषयताद्वयनिरूपकत्वमुक्तप्रमायामक्षतमिति रीत्या वारणीया[1]।

विश्वनाथेन प्रमालक्षणद्वयमुक्तम्-

(क) भ्रमभिन्नत्वे सति ज्ञानत्वं प्रमाया लक्षणम्।

(ख) तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वं प्रमाया लक्षणम्[2]।

प्रथमलक्षणे शुक्तिरजतयोः इमं रजते इति ज्ञानं, रजते रजतविषयकत्वांशे प्रमेति युज्यते। किन्तु तत्र भ्रमभिन्नत्वं नास्तीति तत्र प्रमात्वं न स्यात् इति भवत्यनुपपत्तिः। अतः द्वितीयलक्षणमुक्तम्।

प्रमापरपर्यायस्य यथार्थानुभवस्य तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं लक्षणमिति अन्नंभट्टः[3]। यथा रजते इदं रजतमिति ज्ञानम्।

**०-३-२ भाट्टसिद्धान्तः—** प्रमा, प्रमितिः, यथार्थानुभव इत्यनर्थान्तरम्। धर्मे चोदनायाः प्रामाण्यं व्यवस्थापयद्भिः पूर्वमीमांसासूत्रकारैः अव्यतिरेकः, अर्थस्यानुपलब्धत्वं, पुरुषनिरपेक्षत्वं इति हेतुत्रितयमुपदर्शितम्। यथा—

---

1. समूहालम्बने च विषयताभेदान्न प्रमाप्रमालक्षणे अव्याप्त्यतिव्याप्ती।
[त. चि. प्र. ४५६]

2. भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा।
अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम्।
तत्प्रमा - - - - - - - - - - - - ॥ [कारि. १३४,१३५]

3. तद्वति तत्प्रकारकानुभवो यथार्थः। [त. स. २३]

"अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्य अनपेक्षत्वात्" (मी० द० १-१-५) इति। तत्राबाध्यत्वमव्यतिरेक इत्यनेन पदेनोच्यते। प्रमाणान्तराज्ञातत्वं अर्थस्यानुपलब्धत्वमित्यनेन अभिधीयते। भ्रमविप्रलिप्सादिकारणदोषराहित्यं पुरुषनिरपेक्षत्वमित्यनेन प्रतिपाद्यते। अर्थात् अज्ञातविषयकं करणदोष-बाधकज्ञानरहितं ज्ञानं प्रमेति सूत्रकाराभिमतं प्रमालक्षणं[1] फलितम् (शा० दी० ४४-४५)। तत्र स्मृतावतिव्याप्तिवारणाय अज्ञातेति। भ्रमे संशये च तद्वारणाय करणदोषेति विशेषणम्। अत एव दृढं ज्ञानान्तरेण संवादरहितं यदुत्पन्नं ज्ञानं तत्प्रमाणमिति कुमारिलभट्टेनापि श्लोकवार्तिके न्यरूपि प्रमास्वरूपम्[2]। अत्र प्रमाणमिति शब्दः कुमारिलभट्टेन भावार्थकतया प्रमापरत्वेन प्रयुक्तः।

भाट्टचिन्तामणिकारेण गागाभट्टेन यथार्थानुभवत्वमेव प्रमात्वमित्युक्त्वा, अज्ञातविषयकं बाधकज्ञानरहितं ज्ञानं प्रमेति तत्परिष्कृतम्[3]। मानमेयोदयकारः नारायणोऽपि अज्ञाततत्त्वार्थज्ञानमेव प्रमेति तल्लक्षणमलिलक्षत्[4]। अत्र लक्षणघटकेन अज्ञात-

---

1. प्रमा च अज्ञातयथावस्थितवस्तुविषयकं ज्ञानम् [त. सि. र. ३२]

2. तस्माद् दृढं यदुत्पन्नं नच संवादमृच्छति।
ज्ञानान्तरेण तद् ज्ञानं प्रमाणमिति मीयताम्॥ [श्लो. वा. ६६]

3. किं प्रमात्वम्? उच्यते - यथार्थानुभवत्वम्। याथार्थ्य च तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वम्। अनुभवत्वं च स्मृतिभिन्नज्ञानत्वम्। स्मृतिजनकतावच्छेदकजातिविशेषो वा। स्मृतित्वं च ज्ञातविषयकज्ञानत्वम्, संस्कारजन्यज्ञानत्वं वा। एवं चाज्ञातविषयकं बाधकज्ञानरहितज्ञानं प्रमेति फलितम् [भा. चि. १०-११]

4. प्रमा चाज्ञाततत्त्वार्थज्ञानमेवात्र भिद्यते। [मा. मे. २]

पदेन ज्ञातविषययोः स्मृत्यनुवादयोः निरासः। भाट्टमते अनुवादादीनां प्रामाण्यं नाङ्गीक्रियते। तार्किकैः तदङ्गीक्रियत इत्यन्यदेतत्। अनुवादे हि नाम पूर्वस्मात् ज्ञानात् न तावत् कश्चिद् विशेषो दरीदृश्यते अर्थपरिच्छेदे व्यवहारे वा। प्रमाणानि हि फलार्थं स्वीक्रियन्ते। एवं च फलविशेषस्यानुवादवाक्येषु खपुष्पायमानतया स्मृतिवदनुवादानामपि न प्रामाण्यमभ्युपगन्तव्यम्।

नन्वस्तु यदि अज्ञातावगतिरपि प्रमालक्षणघटकं, तर्हि 'घटोऽयम्', 'घटोऽयम्' इति धारावाहिकज्ञानेषु द्वितीयादिज्ञानानाम् अप्रमात्वापत्तिरिति चेत् – मैवम्। तत्रापि 'अयम् अयम्' इति उत्तरेषां कालांशानां प्रागज्ञातानाम् अवगमनात्, उत्तरक्षणसम्बन्धिघटसद्भावस्य पूर्वज्ञानेनानाकलनात् (मा. मे. २)। लक्षणघटकेन तत्त्वपदेन भ्रमसंशयादीनि अयथार्थज्ञानानि निरस्यन्ते। एवं च भाट्टमते अज्ञाततत्त्वार्थज्ञानमेव प्रमेति सिद्धान्तः। नयेऽस्मिन् प्रमाशब्देन लक्षणया तत्कार्यभूतं प्राकट्यमपि प्रतिपाद्यत इति प्राकट्यरूपप्रमाकरणतया ज्ञानस्यापि प्रमाणत्वमुपपद्यते। अत एव भाट्टाः फलप्रमाणवादिन इति प्रथन्ते (मा. मे. ४-६)।

**०-३-३ प्राभाकरसिद्धान्तः—** प्राभाकरमते अयथार्थः अनुभव एव नास्ति। अतः यद्यनुभवः सः अवश्यं यथार्थ एवेति उनुभूति-

रेव प्रमा[1] । सा चानुभूतिः स्मृतिभिन्ना । स्मृतेरनुभवत्वाभावात् स्मृतिः न प्रमाणम्[2] ।

०-३-४ **समीक्षणम्**—नैयायिकैः ज्ञानं द्विधा विभक्तम् स्मृतिरनुभवश्चेति । अनुभवः पुनः यथार्थायथार्थभेदेन द्विधा विभक्तः । एतद्विभागविषये भाट्टाः नैयायिकाननुसरन्ति । तैरप्यनुभवद्वैविध्यमङ्गीकृतम् । तद्विलक्षणा च स्मृतिरूरीकृता । परन्तु प्राभाकराणामपि स्मृत्यनुभवभेदेन ज्ञानं द्विविधमित्यत्र न कापि विप्रतिपत्तिः । किन्तु अनुभवद्वैविध्यमेव तेषामनिष्टम्, तेषां मते अयथार्थस्यैवानुभवस्याभावात् । अतस्तेषां मते सर्वोऽप्यनुभवः यथार्थ एवेति प्रमैव भवितुमर्हति ।

नैयायिकैः प्रमा, प्रमितिः, यथार्थानुभव इति पदानि प्रमापरतया प्रयुक्तानि । भाट्टैस्तु तान्येव पदानि परिगृहीतानि । वैशेषिकैः पुनः प्रमापर्यायतया विद्यापदं प्रयुक्तम् । प्राभाकरैश्च प्रमापर्यायतया प्रमाणपदमपि प्रयुक्तम्[3] । प्रमीयते यद् ज्ञानं तत्प्रमाणमिति तेषां मते व्युत्पत्तिः । साधनपरतयापि

---

1. अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥
न प्रमाणं स्मृतिः पूर्वप्रतिपत्तेरपेक्षणात् ।
अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः ॥ [प्र. प. १०४]

2 See Pūrvamīmāṃsā in its Sources (PMS), pp. 69-70: What then is this valid cognition ? The answer is, valid cognition is apprehension and it is something different from remembrance, which latter cannot be valid in as much as it stands in need of a previous cognition.

3. प्रमाणमनुभूतिः [प्र. प. १०४]

प्रमाणपदं तैः प्रयुज्यते । प्राभाकराः स्मृतेरप्रामाण्याङ्गीकारे नैयायिकानां पक्षमेवानुवर्तन्ते । किन्तु अयथार्थानुभवाङ्गीकारे न्यायविरुद्धं पक्षमाश्रयन्ते[1] ।

नैयायिकैः बहूनि प्रमालक्षणानि प्रतिपादितानि । तेषु सर्वेष्वपि लक्षणेषु निर्दुष्टं परिष्कृतं लक्षणं - 'तद्वति तत्प्रकारकानुभवः प्रमे'ति । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठ-प्रकारताशालिज्ञानं प्रमेति तस्य सारः । एवमेव भाट्टैरपि तत्र तत्र ग्रन्थेषु बहूनि प्रमालक्षणानि उक्तानि । गागाभट्टेन यथार्थानुभव एव प्रमेत्युक्त्वा, अज्ञातविषयकम्, बाधकज्ञानरहितं च ज्ञानं प्रमेति तत् परिष्कृतम् । मानमेयोदयकारस्तु अज्ञात-तत्त्वार्थज्ञानमेव प्रमेति तामलिलक्षत् । प्रभाकरमीमांसाप्रकाशकेन शालिकनाथेन तु अनुभूतिरेव प्रमेति प्रकरणपञ्चिकायाम् अभिहितम् ।

अत्र प्रतिपादितेषु त्रिष्वपि मतेषु नैयायिकमतमेव साधीयः । तथा हि — भाट्टोक्तलक्षणे अज्ञातपदं निरर्थकम् । धारावाहिकज्ञानेषु द्वितीयादिज्ञानानां पूर्वज्ञानावगतार्थविषयकतया अप्रमात्वापत्तेः । नच पूर्वपूर्वज्ञानाविषयीभूतक्षणविशेष-विषयकतया तेषां प्रमात्वस्याक्षतत्वमपि वाच्यम् । परमसूक्ष्माणां कालकलांशानां पिशितलोचनैः ग्रहीतुमशक्यत्वात् । क्षणस्यातीन्द्रियतया प्रत्यक्षविषयता च नोपपद्यते (ता. टी. ३५) ।

---

1. Vide PMS. p. 69 : Prabhākara thus regards all remembrances as invalid (agreeing in this with the Naiyāyika) and all apprehension as valid (differing in this from the Naiyāyika).

भाट्टोक्तलक्षणेऽस्मिन् अन्यः कश्चन दोषः । संसारेऽस्मिन् अनादौ 'यजेत स्वर्गकामः' इत्यादिवेदवाक्यार्थानां यस्मिन् कस्मिन्नपि जन्मनि गृहीतत्वावश्यम्भावेन तादृशबोधस्य कदाप्यगृहीतग्राहकत्वरूपप्रमात्वं नैव घटते । न च वाच्यं प्रकृतजन्मावच्छेदेनैवागृहीतग्राहित्वं प्रमात्वमुद्दिष्टम् । एवं च अन्यस्मिन् जन्मनि ज्ञातत्वेऽपि न कश्चिद्दोष इति । एवं तर्हि अस्मिन्नेव जन्मनि येन वा वेदार्थो ज्ञातः, रोगादिभिः विस्मृतश्च पुनः श्रुतः, तत्र पुनःश्रवणरूपस्य शाब्दबोधस्य ज्ञातविषयकतया अज्ञातविषयकत्वमसम्भवीति भाट्टोक्तप्रमालक्षणस्य अव्याप्तिः दुरुद्धरेति । अतः नेदं लक्षणमुपादेयम् ।

एवमेव प्राभाकरोक्तम् अनुभूतिः प्रमेति लक्षणमपि न समीचीनम् । अव्याप्त्यतिव्याप्तिदोषदुष्टत्वात् । तथा हि - प्राभाकरमते हि सर्वस्मिन्नपि ज्ञाने, ज्ञानं - ज्ञाता - ज्ञेयम् इति त्रिपुटी भासते । तत्र ज्ञातृज्ञानांशयोः प्रमात्वं प्रत्यक्षत्वं च तेषामिष्टम्[1] । एवं च स्मृतेरपि पूर्वोक्तत्रितयविषयकतया तत्रापि स्वांशे ज्ञात्रंशे च प्रमात्वमवश्यं सिध्येत् । तत्तु न सिध्यति; स्मृतेरनुभवरूपत्वाभावात् । एवमेव अनुवादवाक्यार्थज्ञानस्यापि अनुभवरूपतया प्रमात्वप्रसक्त्या तेषां वाक्यानां प्रामाण्यं प्रसज्यत इति प्रमालक्षणस्यातिव्याप्तिः भाट्टैराशङ्किता (शा. दी. ४५) ।

---

1. सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥ [प्र. प. १०४]

अतः नैयायिकोक्तं तद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेति लक्षणमेव इतरमतापेक्षया निर्दुष्टं लक्षणमिति फलितम्। मुक्तावलीकारः विश्वनाथः प्रमालक्षणे मणिकारावधिप्राचीन-नैयायिकैः प्रयुक्तम् अनुभवपदं परित्यज्य ज्ञानपदमेव प्रयुङ्क्ते, नानुभवपदं कुत्रापि (कारि. १३४-१३५)। एवं च तदुक्तस्य लक्षणस्य यथार्थस्मृतौ अतिव्याप्तिराशङ्किता। स्वय-मेव मुक्तावल्यां 'स्मृतेरपि प्रमात्वमिष्यत एव' इति (मुक्ता. ७३) समाधानमप्युक्तम्। एवं च नातिव्याप्तिः। तथा च अनुभवघटितस्यैव प्रमाणलक्षणस्य प्रतिपादनात् स्मृतिकरणस्य पञ्चमप्रमाणस्यापत्तिश्च नास्ति। अत एव सूत्रकारेणापि प्रमा-ज्ञानपर्यायतया 'तत्त्वज्ञानम्' इति स्मृतिसाधारणं ज्ञानपदमेव प्रयुक्तम्, न त्वनुभवपदम्। अतः यथार्थस्मृतेः प्रमात्वाङ्गी-कारेऽपि न कापि हानिरिति भावयामः।

०-४ ख्यातिविचारः

०-४-१ न्यायसिद्धान्तः— अप्रमा, अयथार्थानुभवः, भ्रमः, विपर्ययः, मिथ्याज्ञानम्, ख्यातिरित्यनर्थान्तरम्। जायमानं समस्तं ज्ञानं प्रमैवेति वक्तुं न शक्यते। यद्येवं तर्हि वादे कस्मिंश्चित् वादिना सह प्रतिवादिनो ज्ञानमपि प्रमैव भवेत्। प्रत्यधिकरणं धर्मनियमरूपा 'इदमित्थम्' इत्याकारकेत्थम्भाव-व्यवस्थैव च्छिन्नमूला बोभवीति; विजयेत तावत् प्रतिवादी च। अन्ततः एवमव्यवस्थाविकले लोके व्यवहारसरणिरेव क्लिश्येत।

एवमेव जायमानं सर्वमपि ज्ञानमप्रमैवेत्यपि वक्तुं न शक्यते। एवं सति य. वादे विजयी तस्यापि ज्ञानमप्रमैवेति तदधिगतस्य विजयस्यापि हानिः। अवश्यम्भावी च तस्य पराजयः। अतः विवेकिभिः सर्वैरपि प्रमात्मकमप्रमात्मकज्ञानमभ्युपेयम्। तत्र भ्रमात्मकज्ञाने बहुधा विप्रतिपद्यन्ते शास्त्रकाराः। नैयायिकैः अन्यस्य अन्यथाभानात्मिका अन्यथाख्यातिरभ्युपगम्यते। इयं चान्यथाख्यातिः प्राचीनैः नैयायिकैरपि भिन्नैः शब्दैः व्यवहृतेति तेषामिष्टैवेति वक्तव्यम्।

सूत्रकारेण गौतमेन 'तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या. द. १-१-१) इत्युक्त्वा द्वितोयसूत्रे 'मिथ्याज्ञानात् संसार' इति तन्नाशद्वारैव अपवर्गप्राप्तिरित्युक्तम् (तत्रैव १-१-२)।

तथैव प्रत्यक्षसूत्रे (तत्रैव १-१-४) अव्यभिचारिपदेन व्यभिचारिभिन्नं ज्ञानमुक्तम्। भाष्यकारेण वात्स्यायनेन तु मिथ्याज्ञानस्यानेकप्रकारकत्वं सम्यग् विवृतम्। तत्र अतस्मिंस्तदिति ज्ञानं मिथ्याज्ञानमिति प्रतिपादितं बहुभिः दृष्टान्तैः। यथा आत्मनि तावन्नास्तीति, अनात्मनि आत्मेति, इत्यादि (न्या. भा. १५०)। एवं प्रत्यक्षसूत्रस्थाव्यभिचारिपदव्याख्यानावसरेऽपि भाष्यकारः अतस्मिंस्तदिति ज्ञानं व्यभिचारिज्ञानमिति निरूपयति। एतावता किमायातम्? अन्यस्मिन् अन्यतादात्म्यज्ञानं भ्रम इति सूत्रकार-भाष्यकारसम्मतमिति।

वार्तिककारेणापि अतस्मिंस्तदिति ज्ञानमेव भ्रम इति विपर्ययशब्देन व्यवारि[1]। अस्यैव विपर्ययस्य पश्चात्काले

1. कः पुनरयं विपर्ययः? अतस्मिंस्तदिति प्रत्ययः [न्या. वा. १५३]

अन्यथाख्यातिरिति व्यवहारः समजनि। वाचस्पतिमिश्रेणापि उक्तपूर्वविपर्ययग्रन्थव्याख्यानावसर एव इदंप्रथमतया अन्यथाख्यातिपदं तत्पर्यायतया प्रयुक्तम्[1]। अतः टीकाकारमारभ्य नैयायिकानां पक्षः अन्यथाख्यातिपक्षः अजनिष्टेति महती प्रसिद्धिः। कणादेन अयमेव पक्ष आश्रित इति स्पष्टमविद्याप्रतिपादकाभ्यां सूत्राभ्यामवगम्यते[2]। प्रशस्तपादभाष्ये विपर्ययशब्दः अतस्मिंस्तदिति प्रत्ययपरतया व्यख्यातः[3]।

इदमन्यथ ख्यातिस्वरूपं संक्षेपेण - रजतार्थी खलु प्रवर्तते पुरोवर्तिनि द्रव्ये। सा च प्रवृत्तिः न केवलं भेदाग्रहसहितग्रहणस्मरणरूपज्ञानाभ्यामेव भवतीति वक्तुं शक्यते। नहि नाम रजतप्रतिपादकार्थमात्रस्मरणमात्रेण जायते प्रवृत्तिः। रजतार्थी खलु इदङ्कारास्पदाभिमुखी प्रवर्तते। अतः इदङ्कारास्पदविषयकेच्छामन्तरा सा प्रवृत्तिः नोपपद्यते। इदङ्कारास्पदे रजतत्वज्ञाने सत्येव सा इच्छा भवितुमर्हति। अतः इदङ्कारास्पदविशेष्यक-रजतत्वप्रकारकप्रत्ययरूपा अन्यथाख्यातिपदव्यपदिष्टाद् विशिष्टज्ञानादेव भ्रमात्मकस्थले प्रवृत्तिरुपजायत इति अन्यथाख्यातिरवश्यमभ्युपगन्तव्या[4]।

---

1. केचित् स्वाकारबाह्यत्वविषयं ज्ञानं विपर्यय इत्याचक्षते। अन्ये असद्विषयं ज्ञानम्। .....अन्यथाख्यातिं तु वृद्धाः॥ [ता. टी. १६०]
2. इन्द्रियदोषात् संस्कारदोषाच्चाविद्या। [वै. द. ९-२-१०]; तद् दुष्टज्ञानं। [तत्रैव ९-२-११]
3. अतस्मिंस्तदिति प्रत्ययो विपर्ययः, यथा गव्येवाश्व इति। [प्र. भा. ८८]
4. सोऽयमुभयतो भेदाभेदग्रहसारूप्यात् प्रवृत्तिनिवृत्तिभ्यां युगपदाकृष्यमाणः प्रतिपत्ता कष्टां दशामावेशितः प्रज्ञाशालिभिः, अतिव्याख्यया; [ता. टी. १६३]

एवं च पुरोवर्तिपदार्थे रजतभेदाग्रहात् 'इदं रजतम्' इति रजतत्वारोपात्मकः प्रत्ययो जायते। पश्चात् रजतजातीयेष्टसाधनतास्मृत्या इदङ्कारास्पदे रजते चेष्टसाधनतामनुमाय तत्र रजतार्थी प्रवर्तत इति तत्स्वरूपम्। मणिकारेण अन्यथाख्यातिसाधकानि अनुमानानि प्रदर्शितानि। तानि च यथा—

(क) "विसंवादिप्रवृत्तिः विशिष्टज्ञानजन्या; प्रवृत्तित्वात्, संवादिप्रवृत्तिवत्"। संवादिप्रवृत्तौ विशिष्टज्ञानस्य हेतुत्वोपगमेन विसंवादिप्रवृत्तावपि तस्य हेतुत्वमनपलपनीयम्।

(ख) "रजतेच्छाजन्यशुक्तिविषयप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं शुक्तिविशेष्यकम्; शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वात्, शुक्तौ शुक्त्यर्थिप्रवृत्तिप्रयोजकज्ञानवत्।"

(ग) "विवादास्पदं शुक्तिविशेष्यकं ज्ञानं रजतत्वप्रकारकम्, रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात्, सत्यरजतज्ञानवत्" (त.चि.प्र.४७८)।

एवमेव शुक्ताविदं रजतमिति भ्रमानुपदमेव 'इदं रजततया जानामि' इत्यनुव्यवसायो जायते; इदंविशेष्यकरजतत्वप्रकारकव्यवसायं विना तादृशानुव्यवसायस्यानुपपत्तेः। अतः अनुव्यवसायात्मकप्रत्यक्षवशादपि अन्यथाख्यातिरङ्गीकार्येति गङ्गेशोपाध्यायः (तत्रैव ५५०)।

शशधराचार्यः न्यायसिद्धान्तदीपे शुक्तौ रजतमेव प्रतीयत इति, तत्र चेष्टसाधनताज्ञानमनुमाय रजतार्थी प्रवर्तते न तु

रजतभेदाग्रहासादितेष्टसाधनभेदाग्रहेणेति न्यरूरुपत्। (न्या॰ सि. दी. ५५८)

मुक्तावल्यां विश्वनाथः प्रमालक्षणघटकतद्वद्विशेष्यकत्व-विशेषणसार्थक्यनिरूपणावसरे एवमेव अन्यथाख्यातिस्वरूपम् व्यवरीत्[1]। अन्नम्भट्टस्तु तदभाववन्निष्ठविशेष्यतानिरूपित-तन्निष्ठप्रकारताशालिज्ञानम् अयथार्थानुभव इत्युवाच[2]। एवं चान्यथाख्यातिपक्षः नैयायिकानामिति सुष्ठु विज्ञायते।

०-४-२ भाट्टसिद्धान्तः— भाट्टैस्तावद् भ्रमज्ञाने अन्यस्य अन्यथाभानात्मिका ख्यातिः अन्यथाख्यातिरिति काचन ख्याति-रूरीक्रियते[3]। अथ केयमन्यथाख्यातिर्नाम? अन्यस्यान्यरूपेण प्रतीतिः। सा च प्रतीतिरन्यस्य क्वचित्सत्तायामेवोपपद्यते, नात्यन्तासत्त्वे। अत्यन्तमसतः पदार्थस्य प्रतीतिविषयतैव दूरा-पास्ता।

लोके हि प्रवर्तते च रजतार्थी द्रव्ये पुरोवर्तिनीति सर्वा-नुभवः। सा च प्रवृत्तिः न कदापि भेदाग्रहसहिताद् ग्रहणस्मर-णात्मकज्ञानद्वयमात्राद् भवितुमर्हति। नहि नाम रजतप्राति-पदिकार्थमात्रस्मरणं तादृशप्रवृत्त्यौपयिकमिति वक्तुं शक्यम्। इदङ्कारास्पदवस्त्वभिमुखं खलु प्रवर्तन्ते रजतार्थिनः। इदङ्का-

---

1. इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणम्, 'रङ्गं रजततया अवेदिषम्' इत्यनुभवात्। [मुक्ता. ७५८–७६४]
2. तदभाववति तत्प्रकारकोऽनुभवः अयथार्थः। [त. स. २३]
3. तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते।
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्॥ [श्लो. वा. २४५]

रास्पदे वस्तुनि प्रवृत्तिः इदङ्कारास्पदविषयकेच्छामन्तरेण नोत्पत्तुमर्हति। इदङ्कारास्पदे रजतत्वज्ञानं विना तद्विषयकेच्छा न भवितुमर्हति । न च वाच्यम् रजतत्वेन इदङ्कारास्पदमजानतोऽपि इदङ्कारास्पदे रजतत्वज्ञानाभावमात्रादेव प्रवृत्तिः सुवचेति । तथा सति रजतत्वेन इदङ्कारास्पदस्याज्ञानात् कुतो वा न निवृत्तिः ? एवं च इदङ्कारास्पदविशेष्यक-रजतत्वप्रकारक-ज्ञानरूपाद् अन्यथाख्यातिपदव्यवहृतात् विशिष्टज्ञानादेव अप्रमास्थले प्रवृत्तिरुपपादनीया, नान्यः पन्था इति अन्यथाख्यातिरवश्यमभ्युपगन्तव्येति भाट्टनयः[1] ।

शास्त्रदीपिकायामियमेवान्यथाख्यातिः पार्थसारथिमिश्रेण विपरीतख्यातिरिति व्यवहृता[2] ।

अथ 'इदं रजतम्' इत्याद्यप्रमास्थले आपणादिगतस्य रजतस्य इन्द्रियसन्निकर्षाभावात् कथं नाम भानम्? भानानुपपत्तौ च अन्यत्र वर्तमानस्य अन्यत्र प्रतीतिरूपा अन्यथाख्यातिश्च कथमुपपादयितुं शक्यत इति चेत्, न । तत्त्वार्थानाकलननिबन्ध-

---

1. तस्माद् भ्रान्तिरपि त्वेषां कल्पयत्यर्थमेव नः ।
कल्पयत्यन्यथासन्तं न त्वात्मानं व्यवस्यति ।।
ततश्च बाधकज्ञानाद् बाचोयुक्तिरियं भवेत् ।
अर्थेऽन्यथापि सत्येष धियाकारः प्रतीयते ।। [श्लो. वा. २२८]

2. सर्वत्र संसर्गमात्रमसदेवावभासते । संसर्गिणस्तु सन्त एव । सेयं विपरीतख्यातिरुच्यते मीमांसकैः । शुक्तिरजतवदनेऽपि विद्यमानैव रजतत्वजातिः विद्यमानस्यैव शुक्तिशकलस्य अनात्मभूतैव आत्मतया अवगम्यते । तथा वन्ध्यासुतादिष्वपि विद्यमान एव सुतशब्दार्थो वन्ध्यान्वितया तत्पदसंनिधिदोषादवगम्यते । (शा. दी. ५८)

नत्वादाक्षेपस्य । तथा हि – सर्वत्र भ्रमात्मकज्ञाने दोष एव कारणम्, नैवेन्द्रियसंयोगः ।

ननु अन्यवस्तुसंयुक्तेनेन्द्रियेण कथमन्याकारं ज्ञानं भवितुमर्हति? यद्यपि भवेत्, कथमन्यांशे प्रत्यक्षं घटेत इति चेत्, न । प्रत्यक्षप्रमोत्पत्तावेव इन्द्रियसंनिकर्षस्य अवश्यम्भावनियमात् । तदाभासे तु अन्यवस्तुसंयुक्तमपीन्द्रियं दोषविशेषसहकृतम् अन्यदेव ज्ञानं जनयितुमीष्टे । स्वप्ने हि मनोदोषवशाद् अवर्तमानमपि वर्तमानवदेवावभासते । अतः युज्यत एव अन्यथाख्यातिरिति[1] ।

०-४-३ **प्राभाकरसिद्धान्तः**— प्राभाकरैः खलु सर्वेषां ज्ञानानां यथार्थत्वमङ्गीक्रियते[2] । अत एव ते अख्यातिवादिन आख्यायन्ते । नास्ति तेषां मते अयथार्थं भ्रमात्मकं ज्ञानम् । न चैवं कथं भ्रान्ताभ्रान्तव्यवस्थोपपद्यत इति वाच्यम् । यथा अन्येषां ज्ञानत्वसामान्ये किञ्चिद् यथार्थं किञ्चिदयथार्थमिति व्यवस्था समुपपद्यते, तथैव ज्ञानस्य सर्वस्य यथार्थतायामपि भ्रान्ताभ्रान्तव्यवस्थाया उपपत्तिः । इयान् विशेषः—यदन्येषां ज्ञानस्वरूपबाधेनायथार्थत्वम्; एतन्मते तु व्यवहारबाधेन अयथार्थत्वम् । अतः यथार्थायथार्थभेदे यो हि नाम हेतुः स एव भ्रान्ताभ्रान्तविवेकेऽपि इति विज्ञेयम् । (प्र. वि. १६-१७)

1. नहि शुक्तिकायां रजतज्ञानं इन्द्रियसम्प्रयोगजम् । किं तर्हि? इन्द्रियसम्प्रयोगात् शुक्तिशकलं रजतसाधारणेन भास्वरत्वादिरूपेण गृहीतम् । असाधारणं तु शुक्तिकात्वमिन्द्रियदौर्बल्यादगृहीतम् । अनन्तरं च संस्कारोद्बोधात् रजतं स्मृतम् । ततः स्मृतरजतात्मना शुक्तिव्यक्तिर्दोषवशाद् गृह्यते । अतो नेन्द्रियसम्प्रयोगजं रजतविज्ञानम् । [शा. दी. ४९]

2. यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥ [प्र. प. ४३]

नन्वेवं नास्ति यदि भ्रमात्मकं ज्ञानम्, एवं खलु वक्तव्यम्–शुक्तौ रजतज्ञानं न जातमिति। तर्हि कथं नाम शुक्तिकायां रजतप्रवृत्तिः? इति चेत्, न। शुक्तावेव रजतज्ञानमङ्गीकार्यमिति को नियमः? रजते रजतज्ञानमात्रादेव शुक्तौ रजतप्रवृत्तिरुपपद्यते। यदि अन्यविषयकज्ञानात् प्रवृत्तिरन्यत्र असम्भावनीयेति चेत् - तर्हि अन्यावभासिनः ज्ञानस्य अन्यत्र जननमपि मृग्यमेव।

ननु यदि सर्वेषां ज्ञानानां यथार्थत्वमभ्युपगम्यते तर्हि केषाञ्चित् पुनः भ्रान्तित्वं नोपपद्यते। अतः अवश्यं भ्रान्तेरङ्गीकार्यतया अयथार्थज्ञानं अनपलपनीयम्। न च विवेकाग्रहणस्यैव भ्रान्तित्वमस्तु इति वाच्यम्। ग्रहणस्य हि भ्रान्तित्वेन अभ्युपगम्यमानत्वात्। यदि अग्रहणस्य भ्रान्तित्वमङ्गीकार्यं तर्हि सुषुप्त्यवस्थायां बाह्येन्द्रियैरुपरतैः सर्वभेदापरिग्रहात् तत्र अतिव्याप्तिः स्यात्। एवं 'स्थाणुर्वा पुरुषो वे'ति सन्देहे स्थाणुपुरुषोभयरूपस्यार्थस्याभावात् कथं नाम यथार्थत्वं तत्रोपपादयितुं शक्यते? अतः अयथार्थज्ञानमवश्यमभ्युपगन्तव्यमेवेति चेत्[1]–

मैवम्। ज्ञानानां विषयाव्यभिचारितया सर्वस्यापि उपपद्यमानत्वात्। तथा हि– को नाम विषयः? यस्मिन् ज्ञाने

---

1. 'इदं रजतमि'त्येषा या शुक्तिशकले मतिः।
सा चेद्यथार्था, भ्रान्तित्वं तदा तस्यास्तु कीदृशम्॥
विवेकाग्रहणं भ्रान्तिरिति चेन्नैतवीदृशम्।
सुषुप्तेऽपि भ्रमापत्तेः सर्वभेदापरिग्रहात्॥
'स्थाणुर्वा पुरुषो वे'ति सन्देहो योऽपि जायते।
अभावात्तादृशोऽर्थस्य स यथार्थः कथं भवेत्॥ [प्र. प. ४८]

सति यः खल्वर्थः तत्र भासते, स एवार्थः तस्य ज्ञानस्य विषयः । अर्थस्य हि प्रतीतिविषयत्वं भासनमेव; न व्यवहारयोग्यतापत्तिविषयत्वम् । निर्विकल्पस्य निर्विषयत्वप्रसङ्गात्[1] (प्र. वि. १७-१८) । स्वव्यवहारानुगुणायाः प्रतीतेः स्वस्मिन् वर्तनमेव भासनमुच्यते । व्यवहारश्चात्र मानस-कायिकभेदेन द्विविधः । बुद्धि-सुख-दुःखेच्छादिरूपः, वाचकशब्दप्रयोगो वा मानसः । कायिकश्च चतुर्विधेषु महत्सु द्रव्येषु उपादानादिरूपः । अतः 'इदं रजतम्' इत्यत्र शुक्तौ रजतमेव भासते, न तु शुक्तिः । तेन 'इदम्' इति ज्ञानं पुरोवर्तिनि व्यवहारानुगुणमेवेति यथार्थम् । 'रजतम्' इति ज्ञानं रजतत्वावच्छिन्ने व्यवहारानुगुणमेवेति तदपि यथार्थमेव । तथा चायं प्रयोगः - "शुक्ती रजतत्वेन न प्रकाशते, तद्रूपेणासत्त्वात् । यद् यद्रूपेण असत् तत् तेनाकारेण न प्रकाशते, यथा आकाशं पङ्कजरूपेणेति"[2] ।

न च तर्हि पुरःस्थितस्य अरजततया, देशान्तरस्थितस्य रजतस्य अत्र असंनिहिततया च रजतज्ञाने कारणं नास्तीति वाच्यम्, पुरःस्थितस्य शुक्तिशकलस्य भेदवर्जिततया गृह्यमाणत्वात् । शुक्तिकातः रजताद् भेदजनकाः विशेषाः दोषाभिभवात्

---

1. यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयः, नान्यः; तस्य तत्रानवभासात् । अनवभासमानस्य विषयत्वेऽतिप्रसङ्गात् । [त. र. २]

2. अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि विद्याद्वेद्यस्य लक्षणम् ।।
इदं रजतमित्यत्र रजतं चावभासते ।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ।। [प्र. प. ४८-४९]

न ज्ञाताः । सामान्यरूपता केवलं ज्ञाता । रजतसदृशशुक्तिदर्शनात् सामान्यमात्रग्रहणाच्च, रजते जायमाना स्मृतिः मानसदोषवशात् तदित्यंशेन रहिता, शुक्तेरविवेचिता समुत्पन्नेति[1] । अतः प्राभाकरमतेऽस्मिन् सर्वेषां ज्ञानानां याथार्थ्यनिबन्धनं प्रामाण्यमुपपद्यत एव । तथा च प्रयोगः - "सर्वे विगीताः सन्देहविभ्रमाः यथार्थाः, प्रत्ययत्वात्; इदं रजतमिति प्रत्ययवत्" (प्र. प. ५८) इति ।

ननु 'उष्णं जलम्', 'शीतश्शीतमयूखः', 'सुवर्णं गुरुतरम्' इत्यादौ व्यवहाराविसंवाददर्शनात् स्यादेव समीचीनत्वमिति चेत्, न । भेदाग्रहनिमित्तत्वात् तादृशज्ञानानाम् । विद्यमानापि भ्रान्तता न व्यवहारपदमुपनीता । अतः ज्ञानं सर्वमपि यथार्थमेवेति अयथार्थाभावात् अख्यातिवादसिद्धिः । (त. र. ३-४)

०-४-४ **समीक्षणम्** — श्रीशङ्करभगवत्पादावधि प्रसिद्धाः ख्यातयः पञ्च वर्तन्ते । ताश्च आत्मख्यातिः,असत्ख्यातिः,अख्यातिः, अन्यथाख्यातिः, अनिर्वचनीयख्यातिरिति[2] । तदनन्तरकालिकैः

---

1. नन्वेवं रजताभासः कथमेष घटिष्यति ।
उच्यते - शुक्तिशकलं गृहीतं भेदवर्जितम् ।।
शुक्तिकाया विशेषा ये रजताद् भेदहेतवः ।
ते न ज्ञाताः अभिभवाद् ज्ञाता सामान्यरूपता ।।
अनन्तरं च रजते स्मृतिर्जाता तथापि च ।
मनोदोषात् तदित्यंशपरामर्शविवर्जितम् ।।
रजतं विषयीकृत्य नैव शुक्तेः विवेचितम् ।
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ।। [प्र. प. ४९-५०]

2. आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
[तथाऽनिर्वचनीयख्यातिरित्येतत् ख्यातिपञ्चकम्] ?
परीक्षकाणां विभ्रान्तौ विवादात्मा विविच्यते ।। [वि. वि. १]

एतदपेक्षया विलक्षणाः यथार्थख्यातिः, अभिनवान्यथाख्यातिः, प्रसिद्धार्थख्यातिः, अलौकिकार्थख्यातिः, सदसत्ख्यातिः इति पञ्च ख्यातयः अभ्युपगताः ।

| ख्यातिः | वादिनः |
|---|---|
| १ आत्मख्यातिः | सौत्रान्तिकाः<br>वैभाषिकाः<br>योगाचाराः |
| २ असत्ख्यातिः | माध्यमिकाः |
| ३ अख्यातिः | प्राभाकराः |
| ४ अन्यथाख्यातिः | नैयायिकाः,<br>जैनाः, भाट्टाः |
| ५ अनिर्वचनीयख्यातिः | अद्वैतिनः |
| ६ यथार्थख्यातिः | विशिष्टाद्वैतिनः |
| ७ अभिनवान्यथाख्यातिः | द्वैतिनः |
| ८ प्रसिद्धार्थख्यातिः | चार्वाकाः |
| ९ अलौकिकार्थख्यातिः | केचित् |
| १० सदसत्ख्यातिः | साङ्ख्याः |

प्रकृते अन्यथाख्यातिवादिनः नैयायिकाः भाट्टाश्च । प्राभाकरास्तु अख्यातिवादिनः । नैयायिकैः भाट्टैरपि नरमतः अन्यथाख्यातिरङ्गीक्रियते । वस्तुगत्या उभयोरपि प्रक्रिया तु भिन्नैव । तथा हि - का नाम अन्यथाख्यातिः? न तावदन्यत्र सतः अन्यत्र प्रतीतिः । तथा सति खण्डे दृष्टस्य गोत्वस्य मुण्डे

दर्शनमपि भ्रमो जायेत । नापि बाधकज्ञानम् । तत्तु पुरोवर्तिनि असत्त्वम् अवगमयति, न तावद् अन्यत्र सत्तामपि । अतः अन्यत्रैव सता आकारेण पुरोवर्तिनः विशिष्टज्ञानं अन्यथाख्यातिरिति वक्तव्यम् ।

एवं च 'इदं रजतम्' इति भ्रमस्थले आपणादिगतस्य रजतस्य इन्द्रियसंयोगाभावात् भानं नोपपद्यत इति, रजतस्मृतिसहिताद् दुष्टाद् इन्द्रियाद् रजतस्य भानमिति न्यायमञ्जर्यां जयन्तभट्टः[1] । संस्कारसहिताद् दुष्टेन्द्रियात् रजतादिकम् अतस्मिन् भासत इति प्रशस्तपादः[2] । कन्दलीकारेणापि दोषसहकारि रजतसंस्कारसचिवमिन्द्रियमेव भ्रमात्मकज्ञानं जनयतीति अभिधीयते (न्या. क. १८१) । अन्ततः भ्रमे रजतज्ञानं प्रति रजतसंस्कारसहितः इन्द्रियसंयोगः कारणमिति नैयायिकानाम् अभिसन्धिरिति निश्चीयते ।

भाट्टमीमांसकास्तु भ्रमे रजतज्ञानं प्रति दोष एव कारणम्, इन्द्रियसंयोगः नेति वदन्ति[3] । नच अन्यसंयुक्तेनेन्द्रियेणान्याकारं

---

1. तस्माद्दोषकलुषितादिन्द्रियात् पुरोऽवस्थितधर्मिगतत्वादिविशेषणावमर्शकौशलशून्यात् सामान्यधर्मसहचरितपदार्थान्तरगतविशेषस्मरणोपकृताद् भवति विपरीतप्रत्ययः । उक्तमत्र सदृशपदार्थदर्शनोद्भूतस्मृत्युपस्थापितस्य रजतस्यात्र प्रतिभासनमिति । [न्या. म. १६८ - १७०]

2: प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्य अयथार्थालोचनाद् असंनिहितविषयज्ञानजसंस्कारापेक्षाद् आत्ममनसोः संयोगादधर्माच्च अतस्मिंस्तदिति प्रत्ययो विपर्ययः [प्र. भा. १७७] ।

3. नहि शुक्तिकायां रजतज्ञानमिन्द्रियसम्प्रयोगजम् । किं तर्हि? इन्द्रियसम्प्रयोगात् शुक्तिशकलं रजतसाधारणेन भास्वरत्वादिरूपेण गृहीतम् । असाधारणं तु शुक्तिकात्वमिन्द्रियदौर्बल्यादगृहीतम् । अनन्तरं च

ज्ञानं कथमुत्पद्यते? उत्पन्नमपि अन्यांशे प्रत्यक्षं कथं स्यात्? इति वाच्यम्। इन्द्रियसन्निकर्षः प्रत्यक्षप्रमायामेवापेक्षितः। प्रत्यक्षाभासविषये न तदावश्यकता। अन्यसंयुक्तमपीन्द्रियं दोषसहकृतम् अन्यज्ञानं जनयितुं प्रभवति। स्वप्ने खलु मानसदोषवशाद् अवर्तमानमपि वर्तमानमिव भासते (शा. दी. पृ. ४९)। एवमेवान्यथाख्यातिवादिभिः जैनैरपि संस्कारसहितः दोष एव रजतभानं जनयति इति प्रतिपाद्यते (प्र. का. मा. ५५)।

ख्यातिवादे प्राचीनग्रन्थेषु नैयायिकमतमेव मीमांसकैः कुमारिलभट्टप्रभृतिभिः अनुसृतम्। तदनन्तरं नव्यनैयायिकैः भाट्टमतमेवानुसृतं दरीदृश्यते। अत एव प्रथमतः संस्कारसहितात् दुष्टेन्द्रियात् भ्रमात्मकं ज्ञानमिति प्रशस्तपादसरणिम् अनुसृतवान् मणिकारः[1]। पुनः 'भ्रमोऽसत्यज्ञानमिति असन्निकृष्टमपि दोषाद् भासत इत्युपेयम्' (त. चि. प्र. ५४९) इति शास्त्रदीपिकाकारस्य पार्थसारथिमिश्रस्यैव मतमनुधावति। किञ्च तादृशस्य रजतज्ञानस्य प्रत्यक्षत्वोपपत्तये संस्कारः, तज्जन्या स्मृतिर्वा सन्निकर्ष इत्युक्तम्[2]। अत एव च विश्वनाथेनापि भ्रमस्य

---

संस्कारोद्बोधात् रजतं स्मृतम्। ततः स्मृतरजतात्मना शुक्तिव्यक्तिः दोषवशाद् गृह्यते। अतः नेन्द्रियसम्प्रयोगजं रजतविज्ञानम्। [शा. दी. ४९]

1. नच हेत्वभावः, प्रत्यभिज्ञानवत् संस्कारेन्द्रियाभ्यां विशिष्टधीसम्भवात्। [त. चि. प्र. ५४१]

2. संस्कारस्य स्मृतेर्वा संनिकर्षत्वाच्च। [तत्रैव ५४३]

प्रत्यक्षत्वनिर्वाहार्थं ज्ञानलक्षणाप्रत्यासत्तिरूपः अलौकिकः संनिकर्षः स्वीकरणीय इत्यसूचि[1]।

अख्यातिवादिभिः प्राभाकरैरपि इन्द्रियसंयोग-रजतस्मरण-पुरोवर्तिवस्तु-रजतयोः भेदाग्रह इत्येतावत्पर्यन्तं नैयायिकैः समानतयैव स्वीकृतम्। ततः विशिष्टज्ञानमुत्पद्यते, तत एव प्रवृत्तिरिति यत् नैयायिकैरभ्युपगतं, तत्तु नाङ्गीक्रियते। तादृशविशिष्टज्ञानं कारणतया अभिमताभ्यां, भेदाग्रहसहिताभ्यां, पुरोवर्तिप्रत्यक्ष-रजतस्मरणाभ्यामेव प्रवृत्तिरिति, विशिष्टज्ञानस्यावश्यकता नास्त्येवेति प्राभाकराणामाशयः।

प्रकृतयोः अख्यातिवाद-अन्यथाख्यातिवादयोः अन्यथाख्यातिवाद एव समीचीनः। अख्यातिपक्षस्तु नोपादेयः। तथा हि—प्राभाकरैः खलु 'इदं रजतम्' इत्यत्र 'इदम्' इत्यनुभवरूपम्, 'रजतम्' इति स्मरणात्मकमिति ज्ञानद्वयमङ्गीक्रियते। ग्रहणस्मरणविषययोः पुरोवर्तिरजतयोः भेदश्च न ज्ञायते। एवं च एतादृशभेदाग्रहसहकारेण परस्परं भिन्ने अपि ग्रहणस्मरणे 'इदं रजतम्' इत्यभेदव्यवहारं, रजतार्थिनः तत्र प्रवृत्तिं च जनयतः। तथा च बाधितव्यवहारहेतुत्वमेव भ्रमत्वम्, न बाधितविषयकत्वमिति। यथार्थत्वं च ग्रहणस्य स्मरणस्य वा अबाधितविषयकत्वादुपपद्यते। ततः सर्वमपि ज्ञानं यथार्थमेवेति प्राभाकराणां राद्धान्तः।

---

1. इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः। [मुक्ता. ७५९]

तन्न मनोरमम् । रजतार्थिनः पुरोवर्तिनि द्रव्ये इदङ्कारास्पदविशेष्यकरजतत्वप्रकारकज्ञानरूपाद् विशिष्टज्ञानादेव प्रवृत्तेः जायमानत्वात् । सैव अन्यथाख्यातिरिति अभिधीयते नैयायिकैः भाट्टैश्च । अयमत्र क्रमः । प्रथमम् पुरोवर्तिनि रजतभेदाग्रहात् 'इदं रजतम्' इति रजतत्वारोपात्मकं ज्ञानमुत्पद्यते । पश्चात् रजतजातीयेष्टसाधनतां स्मृत्वा इदङ्कारास्पदे रजतेऽपि इष्टसाधनतामनुमाय रजतार्थी तत्र प्रवर्तत इति । अख्यातिवादे इदङ्कारास्पदे रजतत्वज्ञानमन्तरा इष्टसाधनताज्ञानं नैव भवितुमर्हति । तथा चानुमानप्रयोगः – "विवादाध्यासितं रजतज्ञानं पुरोवर्तिवस्तुविशेष्यकम्; रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वात् । यद् यदर्थिनं नियमेन यत्र प्रवर्तयति तद् ज्ञानं तद्विशेष्यकम्, यथा उभयवादिसिद्धं समीचीनरजतज्ञानम् । तथा चेदं, तस्मात्तथेति" (ता. टी. १६३) । इति ।

अतः अख्यातिपक्षः नोपादेयः । अन्यथाख्यातिपक्षेऽपि दोष एव कारणम्, नेन्द्रियसंयोग इति वदतां भाट्टानां तदभ्युपगच्छतां नव्यनैयायिकानां च पक्ष एव साधीयान्[1] ।

०-५ **प्रमाणलक्षणम्**

०-५-१ **न्यायसिद्धान्तः—** प्रमीयते अनेनेति प्रमाणमिति करणव्युत्पत्त्या प्रमाकरणतया प्रमाणं सिध्यति । तत्त्वज्ञानात् पदप्रयोगवशात् यथार्थज्ञानं प्रमेति सूत्रकाराभिमतः पक्ष इति प्रागवोचाम । तत्साधकं प्रमाणमिति तस्येष्टमिति तर्क्यते ।

---

1. दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ [कारि. १३१]

वात्स्यायनेन तु कण्ठरवेणोक्तं उपलब्धिसाधनम् अर्थात् प्रमा-साधनं प्रमाणमिति[1]। वार्तिककारेणापि भारद्वाजोद्द्योतकारेण स्पष्टमुक्तम् उपलब्धिसाधनं प्रमाणमिति[2]। वाचस्पतिमिश्रः स्मृतिभिन्नामर्थाव्यभिचारिणीं प्रमां निरुच्य तत्साधनं प्रमाण-मियुक्तवान्[3]। भासर्वज्ञः न्यायसारे अनुभवपदघटकं समीचीना-नुभवस्य साधनं प्रमाणमिति प्रमाणलक्षणं न्यरूपयत[4]।

जयन्तभट्टस्तु न्यायमञ्जर्याम् उक्तपूर्वलक्षणविलक्षणतया संशय-विपर्ययविरहितार्थबोधसन्धायिनी सामग्री प्रमाणमिति प्रमाणलक्षणं निबबन्ध[5]। अन्यच्च लक्षणम् अव्यभिचारिणी अस-न्दिग्धार्थोपलब्धिजननी बोधाबोध-स्वभावा सामग्री प्रमाणमिति तेनैवोक्तम्[6]। टीकापरिशुद्धिकारः उदयनाचार्यः अविपरीतोप-लब्धिं प्रमामभिलक्ष्य तद्घटकं प्रमाणलक्षणमुक्तवान्[7]। न्याय-कुसुमाञ्जलौ यथार्थानुभवसाधनत्वेन प्रमाणलक्षणं तेनैवाभि-

---

1. उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्यात् बोद्धव्यम्। [न्या. भा. १८२]
2. उपलब्धिहेतुः प्रमाणम्। [न्या. वा. १]
3. प्रमासाधनं हि प्रमाणम्। नच स्मृतिः प्रमा। लोकाधीनावधारणो हि शब्दार्थसम्बन्धः। लोकश्च संस्कारमात्रजन्मनः स्मृतेरन्यामुपलब्धिम् अर्था-व्यभिचारिणीं प्रमामाचष्टे। तस्मात् तद्धेतुः प्रमाणमिति। [ता.टी.३५]
4. सम्यगनुभवसाधनं प्रमाणम्। [न्या. सा. ११]
5. कर्तृकर्मविलक्षणासंशयविपर्ययरहितार्थबोधविधायिनी बोधाबोधस्वभावा सामग्री प्रमाणम्। [न्या. म. १४]
6. अव्यभिचारिणीम् असन्दिग्धामर्थोपलब्धिं विदधती बोधाबोधस्वभावा सामग्री प्रमाणम्। [तत्रैव १२]
7. अविपरीतानुभवजनकत्वलक्षणमव्यभिचारित्वमेव प्रमाणमित्यर्थः। [परि. ७१]

हितम्[1] । चिन्तामणिकृता सप्त प्रमालक्षणानि उक्तानि । तत्र सर्वेषामुपरि साधनपदयोजनेन तानि प्रमाणलक्षणानि भवेयुः । यथा – "तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञान-करणं प्रमाणम्" इति । एवमेवान्यान्यपि लक्षणानि सुलभानि ।

०-५-२ **भाट्टसिद्धान्तः**— पूर्वमीमांसासूत्रकारः जैमिनिः चोदना धर्मे प्रमाणमिति निरूपयन् प्रमाणलक्षणमेवं सूचितवान् । यथा-"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" (मी. द. १-१-५) इति । अत्र अव्यतिरेक इत्यनेनाबाध्यत्वम्, अर्थस्य अनुपलब्ध इत्यनेन प्रमाणान्तराज्ञातत्वम्, अनपेक्षत्व-मित्यनेन भ्रमविप्रलिप्सादिकरणदोषराहित्यं च प्रतिपाद्यते । अर्थात् "करणदोषबाधकज्ञानरहितागृहीतग्राहि ज्ञानमाधनं प्रमाणम्' इति प्रमाणलक्षणं फलितम्[2] ।

भाट्टचिन्तामणौ गागाभट्टेन तु प्रमाकरणत्वमेव प्रमाणत्वमिति प्रतिपादितम्[3] । अध्वरमीमांसाकुतूहलवृत्तिकारेण वासुदेवदीक्षितेन अनधिगतार्थगन्तृत्वमेव प्रमाणत्वमिति न्यरूपि[4]।

---

1. यथार्थानुभवो मानमनपेक्षतयेष्यते । [न्या. कु. ४-१]
2. नत्र साक्षाद् बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते । अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति अर्थेऽनुपलब्धे इत्यनेनोक्तम् । एतच्च विशेषणत्रयमुपाददानेन सूत्रकारेण करणदोषबाधकज्ञानरहितमगृहीत-ग्राहि ज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितम् । [शा. दी. ४४]
3. किं नाम प्रामाण्यम्? प्रमाकरणत्वम् [भा. चि. ९]
4. अनधिगतार्थगन्तृत्वमेव प्रमाणलक्षणमादर्तव्यम् । ..... तस्माद् अनधिगतार्थगन्तृत्वमेवानुभवत्वम् । [आ. कु. वृ. ६]

मानमेयोदये नारायणः प्रमाकरणत्वरूपं प्रमाणलक्षणं नैयायिकानामिव अभ्युपगम्य अज्ञाततत्त्वार्थज्ञानमेव प्रमेति प्रमालक्षणम् परिष्कृतवान्[1] । एवं च अज्ञाततत्त्वावगमरूपप्रमायाः करणतया इन्द्रियसंनिकर्षादीनां प्रमाणता सूपपादा । अतः सिद्धं प्रमाकरणं प्रमाणम् । प्रमा च अज्ञातयथावस्थितवस्तुविषयकं ज्ञानम् । एवं च अनधिगताबाधितार्थविषयकज्ञानजनकं प्रमाणमिति ।

०-५ ३ **प्राभाकरसिद्धान्तः**— प्राभाकरमतानुरोधम् अनुभूतिः प्रमाणम् । अनुभूतिर्नाम स्वरूपपरिच्छित्तिः । सा चानुभूतिः स्मृतेरन्या । स्मृतिश्च पूर्वानुभूतसंस्कारमात्रजन्या । अनुभूतिः अनुभवः । एवं च संस्कारातिरिक्तकारणजन्यं संस्काराजन्यं यद् ज्ञानं तत्कारणत्वं प्रमाणसामान्यलक्षणमिति फलितम्[2] ।

तन्त्ररहस्यकारोऽप्येवमेव प्रमाणलक्षणं न्यरूरुपत् । अनुभूतिः प्रमाणम् । स्मृतिविभिन्ना च संविद् अनुभूतिः । संस्कारमात्रजन्यं ज्ञानं स्मृतिः । स्मृतेः याथार्थ्येऽपि नैतन्मते सा प्रमाणम् । याथार्थ्यस्य प्रामाण्यनिमित्तत्वाभावात् । तस्य सर्वज्ञानसाधारणत्वात् । अनुभूतित्वमेव प्रमाणत्वम् । पूर्वानुभूतार्थावगाहिनी स्मृतिः न प्रमाणं भवितुमर्हति । (त. र. २)

---

1. प्रमाकरणमेवात्र प्रमाणं तर्कपक्षवत् ।
प्रमा चाज्ञाततत्त्वार्थज्ञानमेवात्र भिद्यते ॥
तस्मादज्ञाततत्त्वार्थज्ञानसाधनमेव नः ।
प्रमाणमिति निर्णीतं तद्विशेषानथ ब्रुवे ॥ [मा. मे. २]

2. अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥ [प्र. प. १०४]

प्रभाकरविजये नन्दीश्वरः प्रमाणलक्षणमेवं विचारयामास, यथा- अनुभूतिः प्रमाणम् । अत्र प्रमाणशब्दः प्रमापर्यायः । स्वतन्त्रपरिच्छित्तिः अनुभूतिः । स्वातन्त्र्यं च बुद्ध्यन्तरानपेक्षत्वम् । स्मृतेस्तु पूर्वानुभूतापेक्षा अस्तीति न प्रामाण्यम् (प्र. वि. २४-२५) । एवं च प्राभाकरमते अनुभूतिरूपप्रमाकरणं प्रमाणमिति लक्षणं फलितम् ।

• ५-४ **समीक्षणम्** — प्रमीयते अनेनेति करणवाची खलु प्रमाणशब्दः । इदं च प्रमाणपदं नैयायिकैः भाट्टैश्च प्रमासाधनपरतयैव प्रयुज्यते । प्राभाकरैः तावत् न केवलं प्रमासाधनपरतया, किन्तु प्रमापरतयापि । यथा नैयायिकैः अन्यैश्च दार्शनिकैः प्रत्यक्षशब्दः प्रमा-प्रमाणयोः समानतया प्रयुज्यते, यथा-प्रत्यक्षमिति प्रमा, प्रत्यक्षमिति प्रमाणं च[1] ।

नैयायिकास्तावत् प्रमाकरणं प्रमाणमिति अभ्युपगच्छन्तः तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानरूपप्रमाकरणतया प्रमाणमङ्गीकुर्वन्ति । भाट्टाः पुनः सामान्यतः प्रमाणलक्षणनिर्वचने प्रमाकरणं प्रमाणमिति पर्यन्तं नैयायिकानामेव मतमनुसरन्ति । किन्तु प्रमानिर्वचनावसरे स्वातन्त्र्यमुद्वहन्ति । तन्मते खलु अज्ञाततत्त्वार्थज्ञानमेव प्रमा ।

प्राभाकरास्तु अयथार्थमनुभवमेव नाङ्गीकुर्वन्तः अनुभवस्य प्रामाण्यमूरीकुर्वन्ति । अर्थात् अनुभूतिरूपप्रमाकरणं प्रमाणमिति

1. दृश्यतां डा. वे. वरदाचार्यः, "न्यायविशिष्टाद्वैतमतयोः प्रमाणविचारः," सा. सुषमा २२ (३-४) पृ. ३०६–३१९.

तेषामपि इष्टमेवेति ज्ञायते। अतः स्थूलदृष्ट्या प्रमाकरणं प्रमाणमिति तावत् भाट्टैः प्राभाकरैश्च नैयायिकमतमेव स्वीक्रियत इति वक्तुं शक्यते। प्रमानिर्वचने तावत् भाट्टाः प्राभाकराश्च नैयायिकमतं परित्यज्य विभिन्नां सरणिमनुसरन्ति।

त्रिष्वपि मतेषु नैयायिकमतमेव साधीयः; अज्ञातपदघटितस्य भाट्टोक्तप्रमालक्षणस्य निरस्तत्वात्। एवमेव अयथार्थानुभवस्यापि अङ्गीकृततया अनुभवकरणत्वस्यैव प्रमाणसामान्यलक्षणत्वे, अयथार्थानुभवस्यापि तदन्तःपातितया भवत्यतिव्याप्तिः। अतः नैयायिकोक्तं लक्षणमेव सर्वथा रमणीयमिति भावः।

## ०·६ प्रमाणविभागः

०-६-१ **न्यायसिद्धान्तः**— नैयायिकैः प्रत्यक्ष-अनुमान-उपमान-शब्दाख्यानि चत्वारि प्रमाणान्यभ्युपगतानि। सूत्रकृता महर्षिणैव कण्ठरवेण तानि प्रतिपादितानि[1]। प्रत्यक्षयामि, अनुमिनोमि, उपमिनोमि, शब्दयामि, इत्यनुव्यवसायान्यथानुपपत्त्या चत्वारि प्रमाणानि उपगम्यन्ते।

ननु अर्थापत्त्यनुपलब्धि-ऐतिह्यादीनां प्रमाणान्तराणां विद्यमानतया कथं चत्वार्येव प्रमाणानीत्युच्यते इति चेत्[2] - मैवम्। अर्थापत्त्यनुपलब्ध्योः अनुमाने, ऐतिह्यस्य च शब्देऽन्तर्भा-

1. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि [न्या. द. १-१-३]
2. न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात [तत्रैव २-२-१]

वात् न प्रमाणचतुष्टयादुपदिष्टात् पृथक् तेषां प्रमाणत्वमिति[1]।

वैशेषिकैस्तावत् प्रत्यक्षमनुमानमिति प्रमाणद्वयमेवाङ्गीक्रियते। शब्दोपमानयोः प्रशस्तपादेन क्रमशः अनुमाने आप्तवचने च अन्तर्भाव उक्तः[2]।

किन्तु मुक्तावलीकारेण विश्वनाथेन वैशेषिकमते शब्देन सह उपमानस्यापि अनुमानेऽन्तर्भाव इति अनुमानप्रयोगश्चैवं प्रदर्शितः – "गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्। असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति च वृत्त्यन्तरे वृद्धैः यत्र यत्प्रयुज्यते तत्र तत्प्रवृत्तिनिमित्तकम्। यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्। यद्वा गवयपदं सप्रवृत्तिनिमित्तकम्। साधुपदत्वात्" (मुक्ता. ८४) इति। एवं च प्रत्यक्ष-अनुमिति-उपमिति-शाब्दरूपयथार्थानुभावानां चतुर्णां सर्वजनीनतया लोकेऽनुभूयमानतया तत्करणत्वेन प्रत्यक्ष-अनुमान-उपमान-शब्दाः चत्वारि प्रमाणानि नैयायिकैरभ्युपगम्यन्ते।

०-६-२ **भाट्टसिद्धान्तः**— भाट्टनये अभ्युपगतानि प्रमाणानि-प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्थापत्ति-अनुपलब्ध्याख्यानि षट्। तत्र नैयायिकैरिव प्रत्यक्ष-अनुमिति-शाब्दबोध-उपमिति-करणतया चत्वारि प्रत्यक्षादीनि प्रमाणानि तैरपि अङ्गीकृतानि।

---

1. शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसंभवाभावानर्थान्तरभावाच्चाप्रतिषेधः। [न्या द. २-२-२]

2. शब्दादीनामपि अनुमानेऽन्तर्भावः। समानविधित्वात् आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रतिपादनात् उपमानमाप्तवचनमेव। [प्र. भा. १०६–१०९]

उक्तपूर्वासु प्रमितिषु अनन्तर्भूतं प्रमितिद्वयम् उपलभ्यत इति बलवदनुभवानुरोधं तत्करणतया अर्थापत्तिः, अनुपलब्धिः इति पृथक् प्रमाणद्वयमूरीकृतम् ।

इयमर्थापत्तिः । प्रमितस्यार्थस्य अर्थान्तरमन्तरेण अनुपपत्तिरिति तदुपपत्त्यर्थम् अर्थस्य कल्पनम् । यथा देवदत्तस्य जीवने प्रमाणान्तरेण निश्चिते सति, जीवतः गृहे अनवस्थितस्य तस्य बहिर्भावकल्पनं विना जीवनमनुपपन्नमिति जीवनेन बहिर्भावः कल्प्यत इति सा अर्थापत्तिः । अत्र उपपाद्यं जीवनं करणम् । उपपादकः बहिर्भावः फलम् । सा चेयं अर्थापत्तिः न पूर्वोक्तप्रमाणचतुष्के अन्तर्भवितुमर्हतीति पृथक् प्रमाणतया अङ्गीकृता[1] ।

सा च दृष्टार्थापत्तिः, श्रुतार्थापत्तिः इति भाट्टमते द्विधा भिद्यते । एतल्लक्षणपरीक्षादिकं उपरिष्टात् पञ्चमाध्याये अर्थापत्त्यधिकारे साधु विवेचयिष्यते । एतावता निरूपितानि पञ्च प्रमाणानि भावपदार्थमात्रगोचराणि । नैतानि प्रभवन्ति अभावमपि उपसङ्ग्रहीतुम् । अतः अभावसङ्ग्रहार्थं प्रमाणान्तरं अनुपलम्भापरपर्यायम् अभावम् अङ्गीकार्यमिति भाट्टानामभिसन्धिः[2] । एवं च भाट्टनये प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्था-

1. अन्यथानुपपत्त्या यदुपपादककल्पनम् ।
तदर्थापत्तिरित्येवं लक्षणं भाष्यभाषितम् । [मा. मे. ११८]

2. प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ।। [श्लो. वा. ४७३]
अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् ।
अभावाख्यं प्रमाणं स्याद् अभावस्यावबोधकम् ।। [मा. मे. १३२]

पत्ति-अभावाख्यानि षट् प्रमाणानि अभ्युपगतानि इति निष्कर्षः। षट्प्रमाणवादस्यास्य वाल्मीकिवचनं उपष्टम्भकमिति प्रतिपादयन्ति भाट्टाः[1]। एवं भाट्टाः षट्प्रमाणवादिनः आख्यायन्ते[2]। तत्तत्प्रमाणगताः विशेषाः तत्तदधिकारेषु विशेषतः चर्चापदं नेष्यन्त इति सङ्क्षेपः।

०-६-३ **प्राभाकरसिद्धान्तः—** प्राभाकरमतानुरोधं पञ्च प्रमाणानि प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्थापत्त्याख्यानि[3]। तत्र अर्थापत्तावपि प्राभाकरैः दृष्टार्थापत्तिरेकैवाङ्गीक्रियते, न तु श्रुतार्थापत्तिरपि। भाष्यस्य "दृष्टः श्रुतो वा" इत्यनेन गोबलीवर्दन्यायेन उपलब्धपरता व्याख्येयेति एतेषां मतम्। भाट्टैरप्यत्र गोबलीवर्दन्यायेनैव अर्थापत्तिद्वैविध्यमुपवर्ण्यते। इयान् विशेषः - यद् भाट्टमते न्यायस्यास्य सङ्कोचः, प्राभाकरमते तु असङ्कोच इति। अतः दृष्टार्थापत्तिं केवलामङ्गीकुर्वन्ति इमे इति सूपपादम्। विस्तरस्तु अर्थापत्त्यधिकारे विवेचयिष्यते। अभावस्य अधिकरणात्मकतया स प्रत्येकप्रमाणत्वेन प्राभाकरैः नाङ्गीक्रियते। अतः पञ्चैव प्रमाणानि। तत्तत्प्रमाणविषयकः विशेषविचारः उपरिष्टात् तत्तदधिकारे करिष्यते।

---

1. राम! षड् युक्तयो लोके याभिः सर्वोऽनुदृश्यते। [श्री. रा. ३. ७२-८]
2. प्रत्यक्षमनुमानं च शाब्दं चोपमितिस्तथा।
   अर्थापत्तिरभावश्च षट् प्रमाणानि मादृशाम्॥ [मा. मे. ७]
3. तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा।
   शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम्॥ [प्र. प. १०४]
   तच्च पञ्चविधं प्रत्यक्षानुमानोपमानार्थापत्तिशब्दभेदात्। [त. र. ८]

०-६-४ **समीक्षणम्**— नैयायिकैः प्रत्यक्ष-अनुमान-उपमान-शब्दाख्यानि चत्वारि प्रमाणानि अभ्युपगतानि। तेषां चतुर्णामभ्युपगमे अनुव्यवसायसद्भावम् अन्येषामनभ्युपगमे च तदसद्भावं उपपत्तिरूपेण प्रदर्शयन्ति ते। भाट्टैस्तावत् प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्थापत्ति-अनुपलब्ध्याख्यानि षट् प्रमाणानि अङ्गीक्रियन्ते। प्राभाकरास्तावत् प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्थापत्तिरूपाणि पञ्च प्रमाणानि अभ्युपगच्छन्ति। अत्रैतदस्माभिः सावधानं द्रष्टव्यम्। समानेष्वपि अन्येषु प्रमाणेषु भाट्टैः प्राभाकरैश्च शब्द इति नैयायिकैरङ्गीकृतं प्रमाणं शास्त्रमित्युपपाद्यते। शाबरभाष्यादारभ्य स एव सम्प्रदायः तैः परिपाल्यते। वयं तत्रेदं कारणमुत्पश्यायः। सर्वस्यापि वेदस्य शास्त्रमिति व्यवहारः शासनादुपजातः। तादृशवेदार्थविचारप्रवृत्तस्य मीमांसाशास्त्रस्य शब्दविषये अन्यदर्शनापेक्षया चकास्ति महद्वैलक्षण्यम्। वेदस्यैव शब्दप्रमाणतया तैः शब्दमपि शास्त्रमिति व्यवह्रियते। अन्तश्चात्र अस्माभिः मनसि निधेयः विशेषः यत् मीमांसकाः अनुमानप्रमाणानन्तरं तृतीयप्रमाणतया शास्त्रमभिषिञ्चन्ति। तदनन्तरमेव उपमानं परिगणयन्तीति।

नैयायिकास्तु अनुमानोपमानयोः प्रत्यक्षोपजीवकतया बहुवादिसम्मततया प्रथममनुमानं निरूप्य पश्चात् उपमानं निरूपयन्ति (कारि. ५३९)। अनुमाननिरूपणानन्तरमुपमाननिरूपणस्य च, प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अवश्यवक्तव्यत्वरूपावसरसङ्गतिं प्रदर्शयन्ति। उपमानानन्तरं शब्दनिरूपणस्यापि शब्दोपमानयोः स्वरूपतः उपजीव्योपजीवकभाव-

रूपां उपपत्तिं निरूपयन्ति ते (कारि. ५४५)। अतः नैयायिकैः अनुसृतः क्रमः समीचीनः। शब्दस्य शास्त्रमिति व्यवहारेऽपि न तेषां काचन हानिरिति तूष्णीं स्थीयते।

प्रमाणविभागावसरे प्रत्यक्ष-अनुमान-शब्दपर्यन्तं नैयायिकमतमेव भाट्टैः प्राभाकरैश्च बहुषु अंशेषु स्वीकृतम्। तेषु अवान्तरविभागादिकमपि नैयायिकोक्तदिशैव कुर्वन्ति ते। अधिकतया भाट्टाः अर्थापत्तिम् अनुपलब्धिं च, प्राभाकराश्च केवलं दृष्टार्थापत्तिं प्रमाणकोटावभिषिञ्चन्ति। नैव सहन्ते तावदिदं नैयायिकाः प्रमाणचतुष्कवादिनः।

उपर्युक्तेषु त्रिष्वपि मतेषु प्रमाणचतुष्टयवादिनैयायिकमतमेव सर्वथा समीचीनम्। अर्थापत्त्यनुपलब्ध्योः पृथक् प्रमाणतायाः पञ्चम-षष्ठाध्याययोः निराकरिष्यमाणत्वात्।



## उपोद्घाते निरूपितः

### सिद्धान्तभेदः

| | न्यायप्रस्थाने | भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
| --- | --- | --- | --- |
| १ | ज्ञानं मानसप्रत्यक्षवेद्यम् | ज्ञानमनुमेयम्, ज्ञाततालिङ्गकानुमानेन | ज्ञानं स्वयंप्रकाशम् |
| २ | ज्ञानं स्मृत्यनुभवभेदेन द्विविधम् | ज्ञानम् अयथार्थ-स्मरण-अनुवाद-यथार्थभेदेन चतुर्विधम् | ज्ञानं स्मृत्यनुभवभेदेन द्विविधम् |
| ३ | तद्वति तत्प्रकारकानुभवः प्रमा | अज्ञाततत्त्वार्थज्ञानमेव प्रमा | अनुभूतिरेव प्रमा |
| ४ | अन्यथाख्यातिवादः | अन्यथा (विपरीत) ख्यातिवादः | अख्यातिवादः |
| ५ | अन्यथाख्यातौ इन्द्रियसंयोगः कारणमिति प्राचीनाः, दोष एव कारणमिति नव्याः | अन्यथाख्यातौ दोष एव कारणम्, नैन्द्रियसंयोगः | --------- |
| ६ | यथार्थानुभवसाधनं प्रमाणम् | अनधिगताबाधितार्थविषयकज्ञानजनकं प्रमाणम् | अनुभूतिरूपप्रमाकरणं प्रमाणम् |
| ७ | प्रत्यक्ष-अनुमान-उपमान-शब्दाश्चत्वारि प्रमाणानि | प्रत्यक्ष अनुमान-शास्त्र-उपमान-अर्थापत्ति-अनुपलब्ध्याख्यानि षट् प्रमाणानि | प्रत्यक्ष-अनुमान-शास्त्र-उपमान-दृष्टार्थापत्तिरूपाणि पञ्च प्रमाणानि |

# प्रथमाध्यायः

## १ प्रत्यक्षाधिकारः

### १-१ प्रत्यक्षलक्षणम्

१-१-१ **न्यायसिद्धान्तः**— इन्द्रियस्यार्थेन सह संनिकर्षात् यद् ज्ञानमुत्पद्यते तत् प्रत्यक्षम् । तथा च गौतमसूत्रम्— "इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" (न्या. द. १-१-४) इति । ज्ञानसामान्यकारणसामग्र्यां आत्ममनःसंयोग-मनइन्द्रियसंयोगादिरूपायां सत्याम् अस्य प्रत्यक्षज्ञानासाधारणतया अनुमानादिभ्यः भेदमुपदर्शयत् अत्रैवं लक्षणमुक्तम् । न तावता एतावदेव प्रत्यक्षकारणमिति मन्तव्यम् ।

चक्षुःसंनिकृष्टेषु मरूमरीचिषु जायमानस्य उदकमिति ज्ञानस्य भ्रमात्मकस्य प्रत्यक्षत्ववारणाय अव्यभिचारीति पदम् । अतस्मिंस्तदिति ज्ञानं व्यभिचारि । तस्मिंस्तदिति ज्ञानमव्यभिचारि । एतेषां मते अनुभवस्य प्रमात्वेन अप्रमात्वेन च द्वैविध्याङ्गीकारात् प्रत्यक्षज्ञानस्य यथार्थानुभवविषयत्वाच्च अव्यभिचारिणा तेन भाव्यमिति नियमः ।

अत्र सुखादिव्युदासार्थं ज्ञानपदम् । अन्यथा इन्द्रियार्थसंनिकर्षात् भवतोः सुखदुःखयोः अतिव्याप्तिः स्यात् । अत्र सूत्रस्थाव्यपदेश्यपदेन निर्विकल्पकप्रत्यक्षं व्यवसायात्मकमित्यनेन सविकल्पकप्रत्यक्षं चोच्यत इति वाचस्पतिमिश्रः । तत्तु अन्यैः

नाङ्गीकृतम् [I.T.K. 73] । अत्र ज्ञानग्रहणं विशेष्यनिर्देशार्थम् (न्या. म. ७४) इति यत् इन्द्रियार्थसंनिकर्षोत्पन्नत्वादीनां विशेष्यतया ज्ञानग्रहणमिति न्यामञ्जर्यां जयन्तभट्टेनोक्तं तत् नोचितं प्रतिभाति । सुखादिष्वतिव्याप्तिवारकत्वरूपस्य विशिष्टप्रयोजनस्य विद्यमानत्वात् । ज्ञानस्य विशेष्यतया अन्वयश्च कथञ्चिदपि अनपलपनीयः ।

इन्द्रियार्थसंनिकर्षोत्पन्नत्वादिविशेषणैः न स्वरूपं, नापि सामग्री वा विशिष्यते, किन्तु फलमेव (न्या. म. ६५) । यत इत्यध्याहारेण तस्य सुसाधत्वात् । यतः एतादृशविशेषणविशिष्टं ज्ञानाख्यं फलमुत्पद्यते तत् प्रत्यक्षं प्रमाणमिति सूत्रार्थसंगमनं सुकरमेव[1] ।

अथ तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायः इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं अव्यभिचारीति प्रत्यक्षलक्षणेऽस्मिन् आत्मानुमितिस्मृत्योः ज्ञानमात्रे चातिव्याप्तिम्, ईश्वरप्रत्यक्षे अव्याप्तिं च समुद्भाव्य, अन्यानि च प्रत्यक्षलक्षणानि उपन्यस्य, निरस्य चान्ते "प्रत्यक्षस्य साक्षात्कारित्वं लक्षणम्, चाक्षुषादिज्ञाने साक्षात्करोमीति अनुगतबुद्धेः बाधकं विना जातिविषयत्वात्" (त. चि. प्र. ५७०) इत्यादीनि चत्वारि प्रत्यक्षलक्षणान्युक्त्वा, तत्र प्रसक्तानि दूषणानि परिहरन् परिष्कृतं लक्षणमेवम् अभिदधाति स्म "ज्ञानाकरणकं ज्ञानमिति तु वयम्" (त. चि.

1. श्रीराम पाण्डेयः, "प्रत्यक्षज्ञानमीमांसा" सा. सुषमा, १९ (४) पृ. ३४५–५४, २० (२) पृ. ७९–९४, २१ (१) पृ. ३८–५३

प्र. ५९५) इति । विशेषणज्ञानस्य विशिष्टप्रत्यक्षे व्यापारा-भावान् न करणत्वम्, किन्तु कारणत्वमेव । एवं च विशेषण-ज्ञानकारणके विशिष्टप्रत्यक्षे ज्ञानकरणकत्वाभावात् नाव्याप्तिः ।

केशवमिश्रस्तु तर्कभाषायां साक्षात्कारिप्रमाकणं प्रत्यक्षम् इति प्रमाणलक्षणम् अलिलक्षत् । प्रत्यक्षप्रमां च तदनुरोधमेव सः व्यवारीत्[1] । तत्कारणत्वं च तेन इन्द्रिय-इन्द्रियार्थ-संनिकर्ष-ज्ञानानां चाङ्गीकृतम्[2] ।

१-१-२ **भाट्टसिद्धान्तः**— मीमांसासूत्रकारस्य भगवतो जैमिनेः मतानुरोधम् इन्द्रियाणां विषयैः सति संयोगे पुरुषस्य जायते या बुद्धिः तत्प्रत्यक्षमुच्यते । तथा च सूत्रम्—"सत्सम्प्रयोगे पुरुष-स्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भ-त्वात्" (मी. द. ११४) इति । यथाश्रुतसूत्रात् एवमवगम्यते इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति । तथा सति भ्रमात्मक-ज्ञानेऽपि प्रत्यक्षलक्षणस्यातिव्याप्तिः स्यात् । पुरोवर्तिपदार्थस्य चक्षुषा सह संयोगे सति हि भ्रम उपजायते । अतः अत्र तत्सतोः व्यत्ययं कृत्वा स एवं वारितः । यथा—"तत्संप्रयोगे पुरुषस्ये-न्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्" (शा. दी. ४८) इति । अत्र तदिति तृतीयान्तमव्ययम् । तेनेति यावत् । नच साक्षात्सम्प्रयोग-जत्वोक्तावेव कुत्रापि व्यभिचारासंभवात् तत्सतोर्व्यत्ययः अना-वश्यक इति वाच्यम् । पीतशङ्ख-द्विचन्द्रादिज्ञाने अतिव्याप्तिवार-कतया तत्र सार्थक्यसम्भवात् ।

---

1. साक्षात्कारिणी च प्रमा सैवोच्यते येन्द्रियजन्या । [त. भा. ६ ]
2. तस्याः करणं त्रिविधम् । कदाचित् इन्द्रियम्, कदाचिदिन्द्रियार्थसंनिकर्षः, कदाचिद् ज्ञानम् । [तत्रैव ७ ]

मानमेयोदयकारः नारायणस्तु "तत्र इन्द्रियसंनिकर्षजं प्रमाणं प्रत्यक्षम्" (मा. मे. ८) इति प्रत्यक्षलक्षणमभ्यधात् । इदं च प्रमाणाभिप्रायेण । गागाभट्टस्तु भाट्टचिन्तामणौ त्रीणि लक्षणानि प्रत्यक्षप्रमाया उक्तवान् । यथा–

क) इन्द्रियार्थसम्बन्धजन्यं ज्ञानं प्रत्यक्षमिति सूत्रकारः ।

ख) ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ।

ग) जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा (भा. चि. १५) इति । नवीनैरन्यैरपि मीमांसकैः भाट्टमतावलम्बिभिः एवमेव प्रत्यक्षप्रमालक्षणं प्रतिपादितम्[1] ।

१-१-३ प्राभाकरसिद्धान्तः— प्राभाकरैः नैयायिकोक्तं प्रत्यक्षलक्षणम् नाभ्युपगतम् । तत्रैवं तैः दोषा उद्भाविताः । "इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यं अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" (न्या. द. १-१-४) इति खलु प्रत्यक्षस्य लक्षणं नैयायिकैरुच्यते । तत्र किं नामाव्यपदेश्यपदस्य सार्थक्यमुक्तम्? यदा खल्वयं रूपं रूपं इति जानाति, रसं रस इति जानाति तदानीं शब्दसंजल्पः संभवतीति कस्यचित् स्यात् शाब्दत्वशंकेति तन्निरासाय अव्यपदेश्यमिति[2] ।

---

1. तत्र विषयेन्द्रियसम्प्रयोगजन्यं ज्ञानं प्रत्यक्षम् । सम्प्रयोगश्च साक्षात्सम्बन्धः [त. सि. र. ३२]

2. So Vātsyāyana concludes that the Sūtrakāra through this characteristic has established that the apprehension of objects produced by the contact of the sense organs with them is not verbal [I.T.K. 72-73]

इदं खलु नोपपद्यते । कुत इति चेत् - लक्षणमिदं हि प्रत्यक्षस्य । सजातीयविजातीयभेदकं हि नाम लक्षणम् । शाब्दाद् भेदस्य इन्द्रियार्थसंनिकर्षजं प्रत्यक्षमित्यनेनैव सिद्धत्वात् नात्र तत् प्रस्तावमर्हति । शाब्दस्य सर्वस्य अनुमानशंका यथा शब्द-परीक्षाप्रकरणे प्रतिविधीयते तथा शब्दसंजल्पनानुविद्धस्य प्रत्य-क्षस्य शाब्दत्वशङ्कापि तत्रैव निराकरणीया । अतः निरर्थकमत्र प्रत्यक्षलक्षणगतमव्यपदेश्यपदमिति (प्र. प. १३४) । एवमेवा-व्यभिचारिपदमपि विपर्ययदूषणायेति नैयायिकमतं नैव घटते । प्राभाकरमते सर्वज्ञानानाम् अव्यभिचारिरूपत्वात् ।

अपिच तन्मते संशयवारकं व्यवसायात्मकपदमपि निरर्थकम् । 'स्थाणुर्वा पुरुषो वे'ति हि स्मृतिरूपज्ञानद्वयम् । नेद-मिन्द्रियार्थसन्निकर्षजमिति नैव तस्य प्रत्यक्षत्वप्रसक्तिः । किंच अव्यभिचारिपदेनैव संशयव्युदासस्य सुलभतया पुनस्तन्निरासाय व्यावसायात्मकमिति पदं नैयायिकमते गौरवावहम् । वस्तुतस्तु अव्यभिचारत्वम्, व्यवसायात्मकत्वं चेतीदं दलद्वयं न प्रत्यक्ष-लक्षणे आवश्यकम् । किन्तु प्रमाणलक्षणे अवश्यम्भावि । एवं च यदि तद्विरहितया केवलमिन्द्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्ष-मित्येव लक्षणमुच्यते, तर्हि तदापि अनुमानादिप्रमितिः स्वात्मनि प्रमातरि च नैव प्रत्यक्षा भवितुमर्हति । अनिन्द्रियजन्या हि सेति (प्र. प. १३६) । अतः नैयायिकोक्तं लक्षणं नास्माभिरभ्युप-गम्यते ।

अस्मन्मते तु –

"साक्षात्प्रतीतिः प्रत्यक्षम्" (प्र. प. १४६) इति प्रत्यक्ष-लक्षणम्। नचैवं भावनाप्रकर्षपर्यन्तजा स्मृतिरपि साक्षात्कार-वतीति सापि प्रत्यक्षं प्रसज्येत इति वाच्यम्। प्रमाणाधिकार-बलात् तद्वारणस्य सुलभत्वात्। तथा हि अनुभूतिः प्रमाणम्, तद्विशेषं च प्रत्यक्षमिति स्मृतेः तत्राप्रवेशात् न प्रत्यक्षत्वापत्तिः। अनुभूतेः स्मृतिव्यतिरिक्तायाः प्रागेव व्यवस्थापितत्वात्। प्रभा-करविजये नन्दीश्वरस्तावत् साक्षात्त्वमिदं प्रत्यक्षलक्षणघटकं त्रिधा व्याचख्यौ। यथा –

क) "साक्षात्प्रतीतिः स्वरूपप्रतीतिः। स्वस्यैव रूपं स्वरूपम्, असाधारणरूपमित्यर्थः"।

ख) "यद्वा, अव्यवहितप्रतीतिः साक्षात्प्रतीतिः। अव्यव-हितत्वं नाम स्वविषयानन्तर्गतज्ञानान्तराव्यवहितत्व-मभिप्रेतम्"।

ग) "साक्षात्त्वं स्वकालाकलितवस्तुसत्त्वावबोधकत्वं, यत्कालीनं ज्ञानं तत्कालसम्बन्धिवस्तुविषयमित्यर्थः" (प्र. वि. २६) इति।

अत्रायं विशेषः। चोदना प्रमाणमिति नियमप्रतिष्ठाप-नार्थं लौकिकवाक्याप्रामाण्यं, सर्वज्ञानयथार्थतावादम्, अथवा अख्यातिवादम् उपस्थापयन्ति प्राभाकराः। प्रमाणत्वेन तथा अभ्युपगता चोदनैव धर्मे प्रमाणमिति सिद्धान्तव्यवस्थापनार्थं च धर्मे प्रत्यक्षस्य अप्रामाण्यं प्रतिपिपादयिषूणाम् एवं साक्षात्प्रतीतिः प्रत्यक्षमिति तल्लक्षणकरणाभिनिवेश इति। तन्त्ररहस्यकारस्तु–

"साक्षात्प्रतीतिः प्रत्यक्षम् । साक्षात्त्वं चापरोक्ष्यं विशदावभास इति । तच्च सर्वसंवित्तीनाम् आत्मस्वात्मांशयो." (त. र. ९) इत्येवं व्यवारीत् प्रत्यक्षलक्षणम् ।

१–१ ४ समीक्षणम्— अथ लोके प्रत्यक्षं ज्ञानं, प्रत्यक्षा क्रिया, प्रत्यक्षो घटः इति प्रत्यक्षादस्य ज्ञानपरतया विषयपरतया बहुधा प्रयोगाः समुपलभ्यन्ते । एवं तर्हि कथं प्रत्यक्षशब्दः अस्माभिर्व्युत्पादनीयः? अत्र अव्ययीभावसमासपक्षः, गतिसमासपक्षः अथवा प्रादिसमासपक्ष इति पक्षद्वयमुपलभ्यते ।

तथा हि– टच्प्रकरणे "अव्ययीभावे शरत्प्रभृतिभ्यः" (अष्टा. ५-४-१०७), "प्रतिपरसमनुभ्योऽक्ष्णः" इति सूत्राभ्यां प्रति, पर, सम्, अनु इत्येतत्पूर्वकाक्षिशब्दान्तात् अव्ययीभावात् टच्प्रत्ययो विधीयते । एवं च 'अक्षिणी प्रति' इति विग्रहे "लक्षणेनाभिप्रती आभिमुख्ये" (अष्टा. २-१-१४) इत्यव्ययीभावे टचि, प्रत्यक्ष इति जाते, "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" ( अष्टा. २-४-८३ ) इत्यनेनामादेशे च 'प्रत्यक्षम्' इति रूपं निष्पद्यते । एवं च व्युत्पत्तिः 'प्रत्यक्षम्' इति ज्ञानपरतया प्रयोगे युज्यते । किन्तु 'प्रत्यक्षो घटः', 'प्रत्यक्षा क्रिया' इति विषयपरतया प्रयोगे तु विशेष्यसमानलिङ्गतया कथमुपपद्यत इति संशयः । ज्ञानपरात् प्रत्यक्षशब्दात् 'अर्शआदिभ्योऽच्' (अष्टा. ५-२-१२७) इति सूत्रेण मत्वर्थीये अच्प्रत्यये कृते प्रत्यक्षवदर्थकः प्रत्यक्षशब्दः विशेष्यसमानलिङ्गकः भवितुमर्हतीति किञ्चित् समाधानम् ।

गतिसमासपक्षे तु प्रतिगतमक्षं प्रत्यक्षमिति 'कुगतिप्रादयः' (अष्टा. २-१-१८) इत्यनेन प्रत्यक्षशब्दव्युत्पत्तिः। अक्षशब्दोऽत्र इन्द्रियपरः। प्रतिगतं प्राप्तमित्यर्थः। एवं च ज्ञानं साधनत्वेन, विषयश्च ज्ञापकत्वेन इन्द्रियं प्राप्नोतीति ज्ञानविषयोभयसाधारणः प्रत्यक्षशब्दः विशेष्यसमानलिङ्गकः सिध्यति। (I.T.K. 67-68) नच तत्पुरुषसमासाश्रयणे अक्षशब्दस्य नपुंसकत्वात् परवल्लिङ्गता[1] भवेदिति समासे नपुंसकत्वमेव अवश्यम्भावीति वाच्यम्। "द्विगुप्राप्तालम्पूर्वगतिसमासेषु" इति वार्तिकेन परवल्लिङ्गतायाः गतिसमासे प्रतिषिद्धत्वात्। अयं गतिसमासपक्षः प्रशस्तपादभाष्य[2]-न्यायकन्दली[3]-किरणावलीप्रभृतिषु[4] ग्रन्थेषु समाश्रितः।

वस्तुतस्तु अव्ययीभावपक्ष एव साधीयान्। अन्यथा टच्-प्रत्ययार्थशरत्प्रभृतिगणे पाठ व्यर्थ आपद्येत। अव्ययीभावपक्षे विशेष्यसमानलिङ्गता च मत्वर्थीयाच्प्रत्ययान्ततया सुसाधा। एवमपि अक्षिशब्दस्य चक्षुरिन्द्रियमात्रपरतया प्रत्यक्षपदेन चाक्षुषज्ञानमेव गृह्यते। नापीन्द्रियान्तरजन्यायां ज्ञानानां तेन संग्रहः। अतः चाक्षुषज्ञानवाची प्रत्यक्षशब्दः अव्ययीभावसमास-

---

1. परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। [अष्टा. २-४-२६]
2. अक्षमक्षं प्रतीत्योत्पद्यत इति प्रत्यक्षम्। [प्र. भा. १८६]
3. अक्षमक्षं प्रतीत्य प्राप्य यदुत्पद्यते, तत्प्रत्यक्षं प्रमाणम्। कुगतिप्रादय इति प्रादिसमासः। प्रतिगतमक्षं प्रत्यक्षमित्यनेन अस्याभिधेयलिङ्गता प्रत्यक्षं ज्ञानं, प्रत्यक्षा बुद्धिः, प्रत्यक्षः प्रत्यय इति। [न्या. क. १८८]
4. प्रत्यक्षमिति कुगतिसमासः। अव्ययीभावे हि परवल्लिङ्गतायां प्रत्यक्षा बुद्धिरिति न स्यात्। [किर. २७६]

विधया, इतरेन्द्रियजन्यज्ञानग्राहकः प्रत्यक्षशब्दश्च इन्द्रियसामान्य-वाचकाक्षशब्दघटिततत्पुरुषसमासविधया च परिग्राह्य इति (त. प्र. न. तु. १४७-५१)।

यद्यपि प्रथमतः वार्तिककार-टीकाकाराभ्यां 'अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति' भाष्यव्याख्यानावसरे अव्ययी-भावसमास एवोक्तः[1]। तथापि पश्चात् ताभ्यामपि गतिसमास-पक्ष एव नैर्भर्यं प्रदर्शितमिव प्रतिभाति[2]।

प्रत्यक्षलक्षणनिरूपणावसरे न्यायप्रस्थाने, भाट्टप्रस्थाने, प्राभाकरप्रस्थाने च मूलग्रन्थेषु प्रत्यक्षपदमिदं प्रत्यक्षप्रमापरतयैव प्रयुक्तम्। अत एव तात्पर्यटीका-न्यायमञ्जरीप्रभृतिषु 'यत' इत्यध्याहारः कृतः प्रमाणपरतया व्याख्यातुम्[3]। अर्वाचीनेषु

---

1. अयं च सूत्रविवक्षायां अव्ययीभावः समासः। [न्या. वा. १८४]
अक्षमक्षं प्रति वर्तत इति विगृह्याव्ययीभावे कृते सर्वेन्द्रियावरोधो भवति। [ता. टी. १८८]

2. कः पुनरत्र समासः ? प्रादिसामासोऽयं द्रष्टव्यः। प्रतिगतमक्षं प्रत्यक्ष-मिति। [न्या. वा. १८४]

प्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गप्रतिषेधात् अविधेयलिङ्गोपादा-नात् प्रत्यक्षवदर्थः, प्रत्यक्षा बुद्धिः, प्रत्यक्षं ज्ञानमित्यभिधेयलिङ्गता सिद्धा भवति। [ता. टी. १८८]

3. प्रत्यक्षप्रमायाः लक्षणे कथिते तत्साधनत्वं प्रत्यक्षप्रमाणस्य लक्षणमिति सुखेन बोद्धुं शक्यत इत्यभिप्रायेण सूत्रकारः प्रत्यक्षप्रमाया लक्षणमुक्तवा-निति मन्यमानेन वार्तिककारेण ज्ञानपरमेव प्रत्यक्षपदमत्र सूत्रे आश्रितम्। [त. प्र. न तु. १५१]

केषुचन ग्रन्थेषु साक्षात् प्रत्यक्षप्रमाणपरतया प्रत्यक्षपदस्य प्रयोग उपलभ्यते । एवं च त्रिष्वपि प्रस्थानेषु प्रमापरतया प्रमाणपरतया च एकमेव प्रत्यक्षपदं प्रयुक्तमिति विभाव्यते ।

नैयायिकोक्तं प्रत्यक्षलक्षणमेव भाट्टमीमांसकैः सर्वथा अनुसृतमिति वक्तुं शक्यते । तथा हि– न्यायसूत्रकारीयं लक्षणमुपजीव्यैव मानमेयोदयकारेण "तत्र इन्द्रियसंनिकर्षजं प्रमाणम् प्रत्यक्षम्" इति प्रत्यक्षलक्षणं न्यरूपि । तत्त्वचिन्तामणौ गङ्गेशोपाध्यायेन सिद्धान्ततया लक्षणमिदं प्रत्यपादि, यथा "ज्ञानाकरणकं ज्ञानं प्रत्यक्षमि"ति । भाट्टचिन्तामणौ गागाभट्टः 'इन्द्रियार्थसम्बन्धजन्यं ज्ञानं प्रत्यक्षमिति सूत्रकारः' इति गौतमोक्तं लक्षणम् उपपाद्य, 'ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्' इति चिन्तामणिकारोक्तमेव प्रत्यक्षलक्षणमभ्यधात् । प्राभाकरास्तु नैयायिकानां वा भाट्टानां वा मतमननुगच्छन्तः अन्यं पन्थानमनुसरन्ति ।

अथ भाट्टोक्तं प्रत्यक्षलक्षणं न समीचीनम् । कृतेऽपि तत्सतोर्व्यत्यये तच्छब्दस्य बोध्यपरामर्शित्वात् इन्द्रियसंयोगानन्तरं जायमानं ज्ञानं प्रत्यक्षप्रमेत्येव सम्पन्नम् । तत्र यदि बोध्यशब्देन बोधविशेष्यः परिगृह्यते, तर्हि 'इदं रजतम्' इति भ्रमेऽपि विशेष्येण पुरिवर्तिना सह इन्द्रियसंनिकर्षसत्त्वादतिव्याप्तिः स्यात् । यदि बोधप्रकारः बोध्यशब्दार्थः इत्युच्यते तर्हि प्रत्यभिज्ञायां विशेषणेन तत्त्वांशेन इन्द्रियसंयोगाभावात् अव्याप्तिरिति दोष इति तात्पर्यटीकायां स्पष्टीकृतम् (ता. टी. २४२) । न्यायमञ्जर्यामपि व्यत्ययव्याख्यानेऽपि संशयातिव्याप्तिः दुर्वारेत्यभ्यधायि (न्या. म. ९४) । संशये खलु 'अयं स्थाणुर्वा

पुरुषो वे'ति कोटिद्वयं भासते । तत्र विशेषणभूतेन अन्यतर-कोटिना इन्द्रियसंयोगः अस्त्येवेति भवत्यतिव्याप्तिः । अतः प्राचीनभाट्टमीमांसकोक्तलक्षणापेक्षया नैयायिकोक्तलक्षणमेव निर्दुष्टमिति युक्तमुत्पश्यामः ।

प्राभाकरोक्तं लक्षणं 'साक्षाद्धीः प्रत्यक्षम्' इत्यनूद्य, 'यज्ज्ञानं यद्विषयकत्वे सविकल्पकाजन्यं तत्तत्र साक्षाद्धीः 'इति परिष्कृत्य खण्डितवान् तत्त्वचिन्तामणौ गङ्गेशोपाध्यायः । किन्तु प्रभाकर-विजयाद्युक्तविधया यदि साक्षात्त्वं परिष्क्रियते, तर्हि न तत्र गङ्गेशदूषणस्यावकाशः । अतः प्राभाकरोक्तं लक्षणमपि इदं विद्वज्जनोपादेयमिव प्रतिभाति । प्रत्यक्षापरपर्यायसाक्षात्प्रतीति-साधनतया इन्द्रियं निर्दिशति वाचस्पतिमिश्रोऽपि[1] । तदपि उपयुक्तविषये अनुकूलमित्यवगन्तव्यम् ।

अत्र मणिकारोक्तप्रत्यक्षलक्षणे 'ज्ञानाकरणकं ज्ञान-मिति तु वयम्' इति 'वयमि'ति निर्देशात् इदं तदुपज्ञमिति भायात् । किन्तु लक्षणमिदं उदयनाचार्योपज्ञमिति दरीदृश्यते । तथा हि – "ज्ञानकरणजन्यत्वरहितज्ञानत्वम् अपरोक्षत्वम्" इति उदयनोक्तं निर्दुष्टं लक्षणं मत्वा गङ्गेश उपाददाविति तु वस्तु-गतिः ।

**१-२ प्रत्यक्षविभागः - निर्विकल्पकं सविकल्पकं च**

**१-२-१ न्यायसिद्धान्तः** — न्यायमतानुरोधं प्रत्यक्षं द्विविधं निर्विकल्पकसविकल्पकभेदेन । सूत्रभाष्ययोरभिप्रायेण प्रत्यक्ष-

---

1. 'साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति । [ता. टी. ४१२]

सूत्रस्थव्यवसायात्मकपदेन संशयव्युदासः, न सविकल्पकस्यापि ग्रहणम् । सूत्रेऽस्मिन् निर्विकल्पकस्यैव ज्ञानस्य प्रत्यक्षत्वं गौतम-वात्स्यायनयोः अभिप्रेतमिव प्रतिभाति[1] ।

वाचस्पतिमिश्रेण तु तात्पर्यटीकायां सविकल्पकस्यापि व्यवसायात्मकपदद्वारा सौत्रलक्षणान्तर्भावं प्रतिपादयता प्रत्यक्ष-द्वैविध्यं सूत्रादेव साधनीयमिति बहु प्रयतितम्[2] (I. E. 162) । व्यवसायः, विनिश्चयः, विकल्प इत्यनर्थान्तरमिति च सङ्गीर्यते। सविकल्पकान्तर्भावनपरं व्याख्यानमिदं त्रिलोचनगुरून्नीतमार्गानु-सारीति च कथयति वाचस्पतिमिश्रः तत्रैव[3] ।

गङ्गेशोपाध्यायस्तु चिन्तामणौ निर्विकल्पकवादारम्भे प्रत्यक्षद्वैविध्यमेवं प्रत्यपीपदत् ।

क) तच्च प्रत्यक्षं द्विविधम् निर्विकल्पकं सविकल्पकं चेति । तत्र नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकं निर्विकल्पकम् (त. चि. ८५७) ।

ख) सविकल्पकं च विशिष्टज्ञानम्, यथा गौरयमिति (तत्रैव ८८१) ।

---

1. श्रीमधुसूदनन्यायाचार्यः. "प्रत्यक्षप्रमाणविमर्शः," पृ. ३४६-३४७. *27th AIOC SP*; Kurukshetra, 1976.

2. अव्यभिचारिपदेनैव संशयज्ञाने निरस्ते सविकल्पकप्रत्यक्षावरोधार्थम् उपादीयमानं व्यवसायात्मकपदं साक्षात् सविकल्पकस्य वाचकमिति । [ता॰ टी. २२५]

3. त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः ।
यथान्यायं यथावस्तु व्याख्यातमिदमीदृशम् ॥ [तत्रैव २२६]

मणिकारानन्तरकालिकेन विश्वनाथन्यायपञ्चाननेनापि न्यायसूत्रवृत्तौ प्रत्यक्षव्याख्यानावसरे स्पष्ट्यकारि यत् अव्यपदेश्य-व्यवसायात्मकशब्दौ प्रत्यक्षविभागपराविति, अव्यपदेश्यं निर्विकल्पकं, व्यवसायात्मकं सविकल्पकमिति द्विविधं प्रत्यक्षमिति[1]। एवं च नवमशतकाब्दे वाचस्पतिमिश्रेण बीजरूपेण उपक्षिप्तोऽयमंशः त्रयोदशशतके मणिकारेण परिष्कृतः, पुनः सप्तदशशतके विश्वनाथेन न्यायसूत्रवृत्तौ सम्यगास्थित इति विज्ञायते ।

१-२-२ **भाट्टसिद्धान्तः**— भाट्टमतानुरोधं प्रत्यक्षमिदं निर्विकल्पक - सविकल्पकभेदेन द्विविधम् । बहुभिर्वादिभिः बहुधा निर्विकल्पक-सविकल्पकयोः अन्यतरत् खण्डितम् । किन्तु भाट्टैस्तावद् उभयमपि अङ्गयकारि ।

१-२-२-१ **निर्विकल्पकम्**— बालानां मूकादीनां च केनचन वस्तुना इन्द्रियसंनिकर्षे जाते 'इदमित्थम्' इति नामजात्यादिविशेषणानवगाहि संमुग्धाकारं यत् 'किंचिदिदमि'ति ज्ञानं जायते तदेव निर्विकल्पकमित्यभिधीयते । तथा चोक्तं श्लोकवार्तिके—

"अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥" (श्लो. वा. १४७) इति । अत्र 'शुद्धवस्तुजम्' इत्यनेन जात्यादिवैशिष्ट्यानवगाहिवस्तुमात्रविषयकम् इत्यर्थलाभो भवति । इदमत्र अस्मा-

---

1. तस्य विभागः अव्यपदेश्यं व्यवसायात्मकमिति, निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमित्यर्थः । [न्या. वृ. २२]

भिरवगन्तव्यम् यत् - दार्शनिकेषु सर्वेष्वपि निर्विकल्पकप्रत्यक्ष-मधिकृत्यैवम् इदम्प्रथमतया कुमरिलेनैव सोदाहरणं निरूपित-मिति । (I. E. 266)

एवमेव इन्द्रियसंप्रयोगात्परं सामान्यविशेषज्ञानानवगाहि केवलवस्तुमात्रग्राहकमालोचनाज्ञानं निर्विकल्पकपदेनाख्यायमा-नम् अस्मदनुभवगोचरं वरीवर्ति, यस्य वानन्तरं पूर्वतनजाति-संज्ञाविशेषान् संस्मृत्य पुरोवर्तिवस्तु तथा विकल्पयितव्यम् । अतः अवश्यं निर्विकल्पकज्ञानं सविकल्पकपूर्ववर्ति अवश्यमभ्युप-गन्तव्यमिति शास्त्रदीपिकायां पार्थसारथिमिश्रः[1] ।

सर्वत्र हि विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वम् इती-दमेव निर्विकल्पकसद्भावे प्रमाणमिति नैयायिकोपदर्शितमेव भाट्टानामपि सम्मतम् । वक्ष्यमाणश्लोकवार्तिकश्लोकपरिशील-नेनापि इदमेव स्पष्टीभवति ।

"न विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवावगम्यते ॥" (श्लो. वा. १४८) इति ।

---

1. प्रतीमो हि वयमक्षसन्निपातानन्तरम् अविभक्तसामान्यविशेषणविभागं संमुग्धवस्तुमात्रगोचरम् आलोचनाज्ञानम् । तदभावे तु विकल्प एव न जायेत । विकल्पयता हि पूर्वानुभूतं जातिविशेषं संज्ञाविशेषं चानुस्मृत्य तेन पुरःस्थितं वस्तु विकल्पयितव्यम् । नच अर्थमदृष्टवतः तत्स्मरण-माकस्मिकमेवोत्पद्यते । तस्मादस्ति निर्विकल्पकमिति ज्ञानम् । [शा. दी. ४०]

निर्विकल्पकज्ञाने जात्यादिकं नैव भासते किन्तु जात्याद्याधारभूता व्यक्तिरेव भासत इति अस्याभिप्राय: । उपर्युक्तशास्त्रदीपिकाकारोक्तिपरिशीलनेनापि जात्यादिकं विशेषणतया न भासते, व्यक्तिश्च जात्यादिविशेषणतया न भासते, किन्तु जात्यादिकं व्यक्तिश्च स्वरूपत: विशेष्यविशेषणभावं विना भासेते इति श्लोकवार्तिकस्य तात्पर्यमिति विज्ञायते[1] । अत एवं वक्तुं शक्यते यत् – अस्ति निर्विकल्पकप्रत्यक्षं किञ्चिदिदमिति वस्तुमात्रावगाहि ज्ञानमिति ।

गागाभट्ट: कथयति भाट्टचिन्तामणौ निर्विकल्पकस्वरूपमेवम्, यथा–"प्रकारताविशेष्यतादिविषयतारहितं ज्ञानं निर्विकल्पकम्" (भा. चि. १६) इति । तत्र इन्द्रियसंनिकर्षानुपदमेव केवलस्वरूपमात्रज्ञानं येन केनचिच्छब्देन वक्तुमशक्यं विशिष्टकल्पनाशून्यं यद् ज्ञानं जायते तत् निर्विकल्पकमिति मानमेयोदये नारायण: (मा. मे. १७) । उक्तपूर्वै: लक्षणैरिदं स्पष्टं भवति यत्–इन्द्रियसंनिकर्षानन्तरं जायमानं वस्तुस्वरूपमात्रावगाहि नामशून्यं संमुग्धज्ञानं निर्विकल्पकमिति ।

१–२·२-२ **सविकल्पकम्**— निर्विकल्पकानन्तरं 'गोविन्दोऽयम्' 'गौरयम्' 'शुक्लोऽयम्' इत्येवं विशेषणविशेष्यभावावच्छिन्नं यद् ज्ञानं नाम-जाति-गुण-द्रव्य-क्रियापञ्चकान्यतमप्रकारकं भवति तत्सविकल्पकम, यथा श्लोकवार्तिके कुमारिलभट्टैरभ्यधायि–

---

1. डा. एन्. एस्. रामानुजताताचार्य:, "निर्विकल्पकज्ञानविचार:", वासुदेवशास्त्र्यभिनन्दनग्रन्थ:, पृ. १५०-१६० । [दिल्ली, १९७३]

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिः यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता ।।" (श्लो. वा. १५०) इति ।

अत्र जात्यादीत्यादिपदेन द्रव्य-गुण-क्रिया-नाम्नां परिग्रहः। पञ्चधा हि विकल्पो भिद्यते । तादृशविकल्पसहितं सविकल्पकं प्रत्यक्षमित्युच्यत इति शास्त्रदीपिकायां पार्थसारथिमिश्रः[1] । निर्विकल्पकं तु अनेकाकारं वस्तु संमुग्धं गृह्णाति । सविकल्पकं तावत् एकैकाकारं जात्यादिकं प्रत्येकं विषयीकरोतीति तावद् द्वयोर्भेदः[2] ।

गागाभट्टेनापि पञ्चविधविकल्पविशिष्टतया समभिवर्णितमिदम्[3] । तन्मते लौकिकालौकिकसंनिकर्षजन्यत्वेनेदं द्विविधम् (भा. चि. २१) । संयोगसंयुक्ततादात्म्याख्यलौकिकसंनिकर्षजन्यम् आद्यम् । सामान्यलक्षणा-ज्ञानलक्षणाख्यालौकिकसंनिकर्षजन्यं द्वितीयम् ।

१-२-३ **प्राभाकरसिद्धान्तः**— प्राभाकरमते साक्षात्प्रतीतिः प्रत्यक्षमुच्यते । सा च प्रतीतिः सविकल्पकनिर्विकल्पकभेदेन द्विविधा । यथाऽभ्यधायि शालिकनाथेन -

---

1. यत् पश्चात् जातिद्रव्यगुणक्रियानामभिः पञ्चधा सविकल्पकेन विकल्प्यते गौरयम्, दण्डययम्, शुक्लोऽयं, गच्छत्ययम्, डित्थोऽयमिति [शा.दी.४१]
2. See Pant, A.S.V., "Epistemology - Pratyakṣa", P. 265. XXVIth Session, *AIOC*, SP, Ujjain : 1972.
3. सविशेष्यकं सप्रकारकं ससंसर्गकं वा ज्ञानं सविकल्पकम् । तच्च जाति-द्रव्य-गुण-क्रिया-नामविषयकतया पञ्चधा । [भा. चि. १७]

"सविकल्पाऽविकल्पा च प्रत्यक्षा बुद्धिरिष्यते ।
आद्या विशिष्टविषया स्वरूपविषयेतरा ॥" (प्र. प. १६०) इति ।

अत्र विकल्पः भेदको धर्मः जात्यादिः । तैश्च विकल्पैः सह वर्तत इति सविकल्पकम् । तच्च पञ्चधा भिद्यते, यथा— "घटोऽयम् शुक्लोऽयम्, गच्छति गौतमः, देवदत्तोऽयम्, दण्डी" चेति । (प्र. प. न्या. सि. १६१)

द्वितीयं प्रत्यक्षम् अविकल्पम्; अर्थात् निर्विकल्पकमिति। निर्गतः विकल्पः यस्मिन् इति निर्विकल्पकम् । विकल्पावस्था-प्राग्भवम् अक्षसंनिपातोत्पन्नं केवलवस्तुमात्रग्राहकं ज्ञानं निर्विकल्पकमुच्यते । अत्र यद्यपि छन्दोऽनुरोधं सविकल्पाऽविकल्पा चेति व्युत्क्रमेण संगृहीते । वस्तुतस्तु निर्विकल्पकं सविकल्पक-मित्येव क्रमः । तदेव द्वैविध्यं तन्त्ररहस्येऽप्युक्तम्, यथा - "तत्र वेद्यांशगोचरं प्रत्यक्षं द्विविधम् । निर्विकल्पक-सविकल्पकभेदात्" (त. र. ९) इति ।

१-२-३-१ **निर्विकल्पकम्** - निर्विकल्पकं हि प्रत्यक्षं 'स्वरूप-विषयेतरा' इत्यनेनोक्तं शालिकनाथेन । स्वरूपमात्रं हि द्रव्य-जातिगुणेषु प्रथमतः गृह्यते । तत्र स्वानुभव एव प्रमाणम् । विषयान्तरानुसन्धानशून्यः समाहितमनाः पुरुषः इन्द्रियसम्बद्धं वस्तु साक्षादेवोपलभत इति स्वज्ञानमेवात्र प्रमाणं भवतुमर्हति । नच निर्विकल्पकज्ञानस्य यदि वस्तुस्वरूपमात्रं विषय इत्युच्यते, यदि च तत्र न सामान्यवैशिष्ट्यं, तर्हि सौगतोक्तस्वलक्षण-

विषयस्वसमानयोगक्षेमं जायेत तावदिदमिति वाच्यम् । जात्याद्याकारावभासस्य तत्र स्पष्टत्वात् (प्र. प. १६२)। अतः निर्विकल्पकम् सामान्यविशेषविषयम् ।

तन्त्ररहस्यकारस्तु, 'निर्विकल्पकं स्वरूपविषयम् । प्रथमं हि स्वरूपमात्रज्ञानं जायेत द्रव्ये गुणे जातौ वा । तस्यां दशायां वस्त्वन्तरानुसन्धानशून्यतया जातेः अनुवृत्तिव्यावृत्तिबुद्धिः न भवति[1]' इत्यवोचत् ।

१-२-३-२ सविकल्पकम् - आद्या विशिष्टविषया इत्युक्ततया विकल्पसहितं ज्ञानं सविकल्पकमित्युक्तं भवति । एतच्च निर्विकल्पकपृष्ठभावि सामान्यं सामान्यरूपेण, विशेषं च विशेषरूपेण अवभासयति ।

ननु केवलं सम्बद्धार्थग्राहकत्वमेव इन्द्रियाणां युज्यते, न पुनः अनुवृत्तिव्यावृत्त्यनुसन्धानशक्तिरपि, इति लोकानुभवः । एवं च इन्द्रियसामर्थ्योत्पन्नं हि प्रत्यक्षमिति इन्द्रियाणां सामर्थ्याभावात् सामान्यविशेषयोः अनुवृत्तिव्यावृत्त्यंशौ कथं नाम प्रत्यक्षविषयौ भवेतामिति चेत् न । आत्मना तावत् इन्द्रियद्वारा संस्कारसहकारेण सामान्यविशेषात्मना वस्तु प्रत्येतुं शक्यत्वात् । इदं च यदि इन्द्रियाण्येव चेतनानि भवेयुः, अथवा ज्ञानानि वा,

1. तत्राद्यं स्वरूपविषयम् । तथा हि - इन्द्रियसम्प्रयोगानन्तरं प्रथमं द्रव्यगुणजातिषु स्वरूपमात्रज्ञानं जायते । तस्य च न द्रव्यमात्रं विषयः । जातिगुणयोरप्यवभासात् । अतः योग्यं सर्वमपीति निर्विकल्पकं स्वरूपविषयम् । [त. र. ९]

तदा नोपपद्यते[1]। निर्विकल्पकं सामान्यविशेषौ वस्तुद्वयं प्रतिपद्यते। तथापि तयोर्भेदस्तु न शक्यग्रहः। तस्य वस्तुभेदमात्रं न भेदबुद्धौ प्रयोजकम्। किन्तु धर्मान्तरज्ञानमपि तत्र सहकारि भवति। तन्त्ररहस्यकारस्तु एवमाह - "सविकल्पकदशायां तु तदनुसन्धाने पूर्वाकारावमर्शेन जातेरनुवृत्तिप्रतीतिः। अयं घटः, अयमपि घटः, न तु पटः इति विशिष्टप्रतीतिसंभवः" (त. र. ९) इति।

१-२-३-३ त्रिपुटीनिरूपणम्— "मेय-मातृ-प्रमासु सा" इत्यनेन प्राभाकरैः त्रिपुटीवादिभिः सा साक्षात्प्रतीतिः मेये यथा, तथा मातरि, प्रमायां च अङ्गीक्रियते। न केवलं प्रत्यक्ष एवेयं त्रिपुटी किन्तु स्मृत्यनुभवरूपेषु सर्वेषु ज्ञानेषु एते त्रिपुटीमङ्गीकुर्वन्ति, यथा घटमहं जानामि, घटमहं स्मरामि इति। अनुव्यवसायात्मकमेव ज्ञानमिति तेषां मतम्; न तु कदापि 'अयं घटः' इति।

ज्ञानमथवा मितिः, ज्ञाता अथवा माता, ज्ञेयमथवा मेयं चैतत् त्रितयं त्रिपुटीत्यभिधीयते। सर्वस्मिन् ज्ञाने आत्मनः कर्तृत्वमेव न तु कर्मत्वम्। परसमवेतक्रियाफलशालि खलु कर्म भवति। अतः आत्माजड इत्युच्यते। घटादिः विषयस्तु जड इत्यत्र नास्ति संशयः। यद्येवं ज्ञानस्यापि जडता स्यात्, तर्हि प्रसज्येत तावदान्ध्यं सर्वस्य जगतः। अतः ज्ञानस्य स्वप्रकाशत्वं अर्थात्मनोः प्रकाशकत्वं चाभ्युपेयम्। एवं च ज्ञानमाश्रयविधया-

1. भवेदेतदेवं यदीन्द्रियाण्येव चेतनानि स्युः, ज्ञानानि वा। आत्मा त्वेकः सर्वानुभवितव्यानुभविता संस्कारवशेन वस्त्वन्तरमनुसन्दधदिन्द्रियेण सामान्यविशेषात्मना वस्तु शक्नोत्येव प्रत्येतुम्। [प्र. प. १६४]

ऽस्मानं, विषयविधया घटपटादींश्च प्रकाशयेत् । अत एवोक्तं शालिकनाथेन प्रकरणपञ्चिकायाम् । यथा–

"सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥" (प्र.

प. १६७) इति । अयं भावः – ग्रहणस्मरणरूपप्रतीतिषु 'इदमहं जानामि', 'इदं स्मरामि' इति मात्रनुगमेन, कल्पनालाघवेन च प्रमातृ-प्रमिति-प्रमेयेषु त्रिष्वपि एकमेव ज्ञानम्[1] इति ।

१-२-४ समीक्षणम्— निर्विकल्पात्मकं एकमेव प्रत्यक्षमिति बौद्धाः, प्रत्यक्षं समस्तमपि सविकल्पात्मकमेवेति जैनाश्च सङ्गिरन्ते । सविकल्पकादतिरिक्ततया निर्विकल्पकं नास्तीति भर्तृहरिरप्येवमवादीत्, यथा –

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥"

(वा. प. १-१२३) इति । एवं च सति तद्विरुद्धतया नैयायिकैः भाट्टैः प्राभाकरैश्च निर्विकल्पकसविकल्पकरूपेण प्रत्यक्षद्वैविध्यं ऐककण्ठ्येनाभ्युपगतम् । विशेषतश्च नैयायिकोक्तप्रक्रियैव (I.E.250) अत्र मीमांसकैः आवश्यकपरिष्कारैस्सह अनुसृतेति वक्तुं शक्यते[2] । शाबरभाष्ये निरालम्बनप्रत्ययनिरसनप्रस्तावे

---

1. या काचिद् ग्रहणस्मरणरूपार्थप्रतीतिः. तत्र साक्षादात्मा भाति । न ह्यर्थविभासिन्यात्मनि अनवभासमाने विषया भासन्ते । सर्वा हि प्रतीतिरेवमुपजायते 'अहमिदं जानामी'ति; न पुनर्जानातीत्येवं काचिद् बुद्धिरस्ति । [प्र. प. १६८]

2. See Varadachari, V. "A note on the Nirvikalpaka and Savikalpaka perceptions in Indian Philosophy", S.V.U.O.J. Vol. VI. 1963.

अव्यपदेश्यपदं विभिन्नार्थे प्रयुक्तम् । न निर्विकल्पकप्रत्यक्षपरतयेति अस्माभिरवगन्तव्यम्[1] ।

अपि च भाट्टैः सविकल्पकनिरूपणावसरे नैयायिकापेक्षयाऽपि विशदतया पञ्च विकल्पाः नाम-जाति-गुण-द्रव्य-क्रियाख्याः अङ्गीकृताः सोदाहरणं प्रतिपादिताश्च (श्लो. वा. १५०), यतश्चेदं ज्ञानं सविकल्पकमित्याख्यायते प्राभाकरैः निर्विकल्पकं प्रत्यक्षम् अविकल्पप्रत्यक्षमिति व्यवहृतम् । सविकल्पके एभिरपि पञ्च विकल्पाः भाट्टाभ्युपगताः स्वीकृताः (न्या. सि. १६१) ।

अव्यपदेश्यादिपदाभ्यां सूत्रकारेणैव प्रत्यक्षविभागः कृत इति निरूपयतः वाचस्पतिमिश्रस्य अभिप्रायं डा. डी. एन्. शास्त्रिप्रभृतयः जयन्तभट्टानुरोधिनः नाभ्युपयन्ति । 'अव्यभिचारिपदस्य मध्ये प्रविष्टत्वात्' इति हेतुस्तैः प्रदर्शितः । स्वतन्त्रेच्छस्य सूत्रकारस्य सरणेः अनवगमननिबन्धनं हि तदिति नोपादेयम् । वाचस्पतेः पक्ष एवादर्तव्यः (I.T.K 73) ।

अथ तावत् प्राभाकरैः मेये, मातरि, प्रमायां च त्रिपुटीप्रत्यक्षमभ्युपगम्यते । न केवलं प्रत्यक्ष एव तैः त्रिपुटी प्रतिपाद्यते, किन्तु स्मृत्यनुभवरूपेषु सर्वेष्वपि ज्ञानेष्विति अन्यदेतत् । साम्प्रतं प्राप्तकालं तद्विचारमत्रैवमुपस्थापयामः ।

१-२-४-१ त्रिपुटीप्रत्यक्षविचारः— ननु ज्ञानस्य स्वयंप्रकाशत्वम् अङ्गीकुर्वन्ति प्राभाकरा इति न परोक्षं प्रेक्षावताम् ।

1. न चार्थव्यपदेशमन्तरेण बुद्धेः स्वरूपोपलम्भनम् । तस्मान्नाव्यपदेश्या बुद्धिः । अव्यपदेश्यं च नः प्रत्यक्षम् । [शा. भा. ८६-८७]

तेषां मते आत्मनः प्रत्यक्षत्वं स्वप्रकाशसंविदाश्रयत्वात् उपपद्यते इति चेत्[1], मैवम् । घटस्येवार्थस्य आत्मनोऽपि ग्राह्यत्वावश्यम्भावात् । यथा घटः इन्द्रियेण संयोगाख्यसंनिकर्षद्वारा गृह्यते तथा आत्मापि अर्थः आन्तरेणेन्द्रियेण मनसा संयोगरूपसंनिकर्षद्वारा गृह्यते[2] । नहि नाम आत्मनः स्वप्रकाशसंविदाश्रयत्वेन कुत्रापि प्रसिद्धिः । संविद एव स्वप्रकाशकत्वस्य असिद्धत्वात् । विषय-विषयिज्ञानेन आत्मनः भासमानतायाः अनुपपत्तेश्च । इदं खलु न सम्भवदुक्तिकम् यत् अन्यविषयज्ञाने अन्यस्य स्फुरण संभवतीति । स्फुरणे वाच्ये तदवेद्यत्वं प्रसज्येत । उक्तं हि शालिकनाथेन "यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयः" (प्र. प. ४०६) इति । लोके च 'घटज्ञानवानहम्' इति आत्मनः ज्ञानाश्रयत्वं सर्वानुभवसिद्धम् । अतः कुतः स्वप्रकाशत्वम्? इति । न 'चायं पुरुषः स्वयंज्योतिः' इत्यागमवचनात् सुस्थमेवात्मनः स्वप्रकाशकत्वमिति वाच्यम् । अनुभवविरोधेन ग्रावप्लवनादिवाक्यवत् उपचरितार्थत्वात् । अतः न त्रिपुटीप्रत्यक्षम् अभ्युपगन्तव्यमिति (त. भा. प्र. १२३)। एवं च त्रिष्वपि मतेषु निर्विकल्पकसविकल्पकभेदेन द्विविधं प्रत्यक्षमिति न कोऽपि विरोधः ।

---

1. सर्वाः प्रतीतयः 'इदमहं जानामि' इत्येवमाकाराः ज्ञातारं, ज्ञानं, ज्ञेयं चोल्लिखन्त्यो जायन्ते । तत्र आत्मा कर्तृत्वेन, ज्ञेयं कर्मतया, ज्ञानं क्रियात्वेन भासते । अतो ज्ञातृज्ञेयस्वविषयं ज्ञानमनुभूयत इति त्रिपुटीप्रत्यक्षवादिनः । [त चि. ८४३]

2. एवं मनसा आन्तरेणेन्द्रियेण यदात्मविषयं ज्ञानं 'जन्योऽहमिति' तत्रा मन इन्द्रियम्, आत्मार्थः । अनयोः संनिकर्षः संयोग एव । [त. भा. ३४]

## १-३ इन्द्रियलक्षणम्

१-३-१ न्यायसिद्धान्तः— भाष्यकारेण वात्स्यायनेन स्वविषयग्रहणलक्षणत्वम् इन्द्रियसामान्यलक्षणमित्युक्तम् (न्या. भा. ४११)। 'करणभावात् स्वविषयग्रहणलक्षणत्वम् इन्द्रियाणाम्' इति न्यायवार्तिके उद्द्योतकरेणाभिहितम् (न्या. वा. ४११)। तात्पर्यटीकाकारेण वाचस्पतिमिश्रेणाभ्यधायि यथा– "यत् शरीरेण संयुक्तं सत् कारकदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति सामान्यलक्षणं सूचितम्" (ता. टी. ४१२) इति।

इन्द्रियसूत्रावतरणिकायां वात्स्यायनेन 'भोगसाधनानि पुनः' इत्युक्तम् (न्या. भा. ३२)। इन्द्रियाणां साक्षात्प्रतीतिसाधनत्वे वक्तव्ये भोगसाधनतया तेषां निर्देशः निर्वेदौपयिकतयेति ज्ञातव्यम्। भोगो हि नाम सुखदुःखसाक्षात्कारः। घ्राणादीन्द्रियाणां परम्परया भोगसाधनत्वं, मनसस्तु साक्षात् तत्साधनत्वमिति यावत्।

जयन्तभट्टेनापि विषयोपलब्धिकारणत्वम् इन्द्रियसामान्यलक्षणम् इत्युदटङ्कि[1]। इन्द्रियसूत्रस्थेन्द्रियपदेन घ्राणाद्यन्यान्यत्वम् इन्द्रियसामान्यलक्षणमित्यपि सूत्रकारेण सूचितमिति विश्वनाथन्यायपञ्चाननः अभिप्रैति[2]। प्रत्यक्षजनकतावच्छेदकतया इन्द्रियत्वम् अखण्डोपाधिरूपमिति अन्येषां मतमपि तत्रैव न्याय-

---

1. अत्रेन्द्रियाणां विषयोपलब्धिकारणत्वं सामान्यलक्षणं प्रसिद्धमेव। [न्या. म. ४७६]

2 अत्र चैतानि इन्द्रियाणीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितम्। [न्या. सू. २३]

सूत्रवृत्तौ तेनानूदितम् (न्या. वृ. ३३)। "साक्षात्कारिज्ञानकरणमिन्द्रियम्" (स. प. २३) इति सप्तपदार्थ्यां शिवादित्यमिश्र: इन्द्रियलक्षणमभ्यधात्। उदयनाचार्येण तु लक्षणावल्याम् - 'शरीरसंयुक्तमपरोक्षप्रतीतिसाधनमतीन्द्रियमिन्द्रियम्' (लक्ष. ३) इत्यभाणि। चिन्तामणौ गङ्गेशोपाध्यायस्तु लक्षणद्वयम् इन्द्रियस्य सञ्चिरते स्म–'स्मृत्यजनकज्ञानहेतुमनःसंयोगाश्रयत्वम्'; "शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्" (त. चि. ५८७–५८९) इति।

१-३-२ भाट्टसिद्धान्तः— भाट्टमतानुरोधं स्वसंयुक्तार्थविज्ञानजनकक्षममिन्द्रियमिति इन्द्रियस्वरूपमभिवर्णितं शास्त्रकारैः। अलक्षि चैवमिदं पार्थसारथिमिश्रेण शास्त्रदीपिकायाम्– "यत् सम्प्रयुक्तेऽर्थे विशदावभासं विज्ञानं जनयति तदिन्द्रियम्" (शा. दी. ३६) इति। गागाभट्टेन तु भाट्टचिन्तामणौ त्रीणि इन्द्रियलक्षणानि अभिहितानि। यथा - "इन्द्रियत्वं सम्बद्धार्थविशदावभासकत्वम्; अपरोक्षज्ञानजनकद्रव्यत्वं वा; ज्ञानानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा" (भा. चि. २५) इति।

१-३-३ प्राभाकरसिद्धान्तः— नैयायिकानामिव एतेषामपि इन्द्रियाणां भोगसाधनस्वरूपं लक्षणमविरुद्धम्। प्राभाकरग्रन्थेषु विशेषतः इन्द्रियलक्षणादर्शनात् अत्र एतावता तूष्णीं स्थीयते।

१-३-४ समीक्षणम्— इन्द्रियलक्षणनिरूपणावसरे प्राचीनभाट्टैः प्राभाकरैश्च नैयायिकमतं स्वीकृतम्। नवीनेनापि भाट्ट-

मार्गानुयायिना गागाभट्टेन मणिकारमार्ग एव सामोदम् अन्वसारि ।

मणिकारोक्तलक्षणद्वयमन्तरा इतरल्लक्षणजातम् अन्योन्याश्रयदोषदुष्टमिति स्पष्टमेव तत्तल्लक्षणपङ्क्तिमात्रपठनेन सम्यगवगच्छामः । अत एव मणिकारेण अन्योन्याश्रयदोषरहितं निपुणतरं परिष्कृत्य प्रतिपादितं लक्षणद्वयं निर्दुष्टं सर्वेष्वपि लक्षणेष्विति प्रतिभाति ।

गागाभट्टेन भाट्टचिन्तामणावुक्तेषु त्रिष्वपि लक्षणेषु आद्यं द्वितीयं च अन्योन्याश्रयदोषग्रस्ते एव । द्वितीयं तु लक्षणं मणिकारोक्तद्वितीयलक्षणच्छायारूपमिति तत्रैवान्तर्भावमर्हति ।

एवं च नैयायिकप्रवरगङ्गेशोपाध्यायनिरूपितं लक्षणद्वितयम् इन्द्रियविषये समीचीनं सर्वसम्प्रतिपन्नमिति भावः ।

१–४ **इन्द्रियविभागः**

**१–४-१ न्यायसिद्धान्तः—** इन्द्रियाणि तावत् घ्राण-रसन-चक्षुः-त्वक्-श्रोत्रभेदेन पञ्चविधानि । तथा च गौतमसूत्रम्— "घ्राणरसनचक्षुस्त्वक्श्रोत्राणि इन्द्रियाणि भूतेभ्यः" (न्या. द. १-१-१२) इति । एतानि च बाहिराणि इन्द्रियाणि भूतप्रकृतिकानि । आन्तरस्य तु मनसः न तथाभावः । अत एव सूत्रकारेणापि इन्द्रियप्रकरणादन्यत्र मनसः प्रसङ्गः कृतः । न खल्वत्र मनसः कथापि कृता । आभ्यन्तरं हीन्द्रियं मनः, तच्चा-

भौतिकं सर्वविषयम् । शिष्टानि तावत् पञ्च बाह्येन्द्रियाणि प्रतिनियतविषयग्रहणपटूनि भौतिकानि[1] ।

पञ्चानामेतेषामिन्द्रियाणां कारणानि पुनः पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशानि[2] । यथाक्रमं पृथिव्यादिभूतगुणाः गन्ध-रस-रूप-स्पर्श-शब्दाः इन्द्रियार्थाः[3] । शास्त्रान्तरप्रथितानि वाक्पादादीनि कर्मेन्द्रियाणि नैयायिकैः नाभ्युपगम्यन्ते ।

पञ्चानामिन्द्रियाणामेषां विशेषलक्षणानि तु प्रमाणवत् समाख्यानिर्वचनसामर्थ्यात् बोद्धव्यानि । जिघ्रत्यनेनेति घ्राणम् । घ्रेयं गन्धं गृह्णातीति । अर्थात् गन्धोपलब्ध्यसाधारणकारणं घ्राणमिति सिद्धम् । रसयत्यनेनेति रसनम्; रसं गृह्णातीति । रसोपलब्ध्यसाधारणकारणं रसनम् । चष्टे अनेनेति चक्षुः रूपं पश्यतीति । रूपोपलब्ध्यसाधारणकारणं चक्षुरिति । स्पृशत्यनेनेति स्पर्शनम्; स्पर्शं गृह्णातीति । स्पर्शोपलब्ध्यसाधारणकारणं स्पर्शनम् । अथवा त्वक् । त्वक्प्रस्थानमिन्द्रियं त्वक् । तदुपचारः स्थानात् । शृणोत्यनेनेति श्रोत्रम् (न्या. भा. ३२) । एतानि चेन्द्रियाणि स्वस्वविषयमात्रग्रहणपटूनि इति प्रागवोचाम ।

---

1. इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात् । भौतिकानीन्द्रियाणि नियतविषयाणि, सगुणानां चैषां इन्द्रियभाव इति, मनस्त्वभौतिकम्, सर्वविषयं च । [न्या. भा. २१]

2. पृथिव्यप्तेजोवायुराकाशमिति भूतानि । [न्या. द. १-१-१३]

3. गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । [तत्रैव १-१-१४]

अत्र त्वगित्यनेन न केवलं बाह्यं चर्म विवक्षितम् । किन्तु सकलशरीरव्यापि चर्म । अत एव हिमशिशिरसलिलपानावसरे अन्तः हृदयेऽपि शीतस्पर्शोपलम्भः (न्या. म. ४७७) । एवमेव श्रोत्रेन्द्रियमपि आकाशैकदेशतया अनाश्रितमपि कर्णशष्कुल्यवच्छेदेन तथा व्यवह्रियते । इमानि चेन्द्रियाणि स्वविषयग्रहणपटूनि आत्मनो भोगसाधनानि भवन्तीति संसारकारणानीति हेतोः नैयायिकैः हेयकोटौ निविष्टानि ।

ननु कथं नाम पञ्चत्वमिन्द्रियाणामुपपद्य ? द्वे चक्षुषी, द्वे श्रोत्रे इति व्यवहारोपलम्भात् सप्तेन्द्रियाणीति चेत्, न । सव्येनेन्द्रियेण अनुभूतस्य तदितरेण प्रत्यभिज्ञानस्यानुभवसिद्धतया[1] चक्षुस्त्वजातेः, तथा श्रोत्रत्वजातेश्च एकत्वाभ्युपगमेन एकमेव चक्षुः, तथा एकमेव श्रोत्रमिति अङ्गीकारात्[2] । घ्राणवंशव्यवधानेन एकमेव चक्षुः द्विधा दृश्यत इति तथा भाक्तो हि व्यवहारः लोके दरीदृश्यते । तथा एकमेव श्रोत्रम्, कर्णविवरद्वयानुस्यूतमपि खलु आकाशं एकमेव । तत्कार्यमपि श्रवणरूपमद्वितीयम् । अतः द्वे श्रोत्रे इति शष्कुलीभेदात् भाक्तो व्यवहारः ।

एवं च बाह्यार्थग्रहणपटूनि इन्द्रियाणि पञ्चैवेति आन्तरं च एकमेवेन्द्रियं मन इति च सिद्धम्[3] । इमानि चेन्द्रियाणि

1. सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् । [न्या. द. ३-१-७]

2. तेनाधिष्ठानभेदेऽपि कार्यैकत्वस्य दर्शनात्
तत्सामान्यस्य चैकत्वादेकत्वं श्रोत्रचक्षुषोः ॥ [न्या. म. ४८२]

3. न्यूनाधिकत्वशमनादत इन्द्रियाणि पञ्चैव बाह्यविषयाधिगमक्षमाणि ।
अन्तः सुखादिविषयग्रहणोपयोगि षष्ठं मनस्तु कथयिष्यति सूत्रकारः ॥
[न्या. म. ४८४]

प्राप्यकारीणि। करणत्वात्। वास्यादिवत्। करणं वास्यादि प्राप्यकारि दृष्टम्। तथा चेन्द्रियाणि। तस्मात् प्राप्यकारीणीति (न्या. वा. २०३)।

१-४-२ भाट्टसिद्धान्तः— तच्चेदमिन्द्रियं भाट्टमतानुरोधमपि बाह्याभ्यन्तरभेदेन द्विधा भिद्यते। बाह्यं च घ्राण-रसन-चक्षुः-त्वक्-श्रोत्ररूपेण पञ्चविधम्। आभ्यन्तरमेकमेव मनः। तत्र घ्राणरसनचक्षुस्त्वचां चतुर्णामिन्द्रियाणां पृथिव्यप्तेजोवायुप्रकृतित्वं न्यायदर्शन इवात्राप्यभ्युपगम्यते[1]। आकाशात्मकतया नैयायिकैः प्राभाकरैश्चाभ्युपगतं श्रोत्रं भाट्टैस्तथा नाङ्गीक्रियते। नयेऽस्मिन् तस्य दिगात्मकत्वं निश्चप्रचम् (भा. चि. १५)। तथा हि–अध्रिगुप्रैषे हि तस्य दिश्येव लयः श्रूयते (तै. ब्रा. ३-५-६)। श्रुतिश्चैवं वर्तते, यथा- "दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" (त. सि. र. ३४) इति। वार्तिककारस्य कुमारिलभट्टस्यापि अयमेवाभिप्रायः[2]।

तैजसं चक्षुः, आप्यं रसनम्, पार्थिवं घ्राणम्, वायवीया त्वक्, दैशिकं च श्रोत्रमिति कश्चन पक्षः। नैयायिकानां प्राभा-

---

1. चक्षुर्नाम कनीनिकान्तरगतं तेजोऽथ जिह्वाग्रगः
तोयांशो रसनं क्षितेरवयवो घ्राणं च घोणोदरे।
सर्वाङ्गप्रसृताश्च मारुतलवाः त्वङ्नाम कर्णोदर-
व्योमैव श्रवणं मनस्तु विभु तद्देहे च कार्यावहम्॥ [मा. मे. ९]

2. तस्माद् दिग्द्रव्यभावो यः पुण्यापुण्यवशीकृतः।
कर्णच्छिद्रपरिच्छिन्नः श्रोत्रं संस्क्रियते च सः॥ [श्लो. वा.]

कराणां च तस्य श्रोत्रस्य आकाशात्मकत्वम् इत्यन्यः पक्षः (मा. मे, १०)।

इयान् विशेषः । बाहिराणामिन्द्रियाणां भूतात्मकत्वं दृष्टमिति, चतुर्णामिन्द्रियाणां पृथिव्यादिप्रकृतिकत्वे सिद्धे अवशिष्टस्याकाशस्यैव भूतस्य श्रोत्रत्वं परिशेषात् सिध्यतीति (मा. मे. १०)।

१-४-३ प्राभाकरसिद्धान्तः— इन्द्रियाणि तावत् प्राभाकरैः घ्राण-रसन-नयन-त्वक्-श्रवणानि पञ्च बाह्यानि, तथा मनः इत्यान्तरमेकं चाङ्गीकृतानि[1]। एषु चेन्द्रियेषु आद्यानि चत्वारि तावत् पृथिव्यप्तेजोवायुप्रकृतीनि इत्यत्र तार्किकाणां, भाट्टानां, प्राभाकराणां च नास्ति अभिप्रायभेदः। किन्तु पञ्चमे श्रोत्रे तावद्विरोधः। भाट्टैस्तावत् श्रोत्रस्य दिगात्मकत्वमभ्युपेयते। प्राभाकरास्तु नैयायिकैस्समं तस्य आकाशात्मकतामेवाङ्गीकुर्वन्ति। तन्मते शब्दस्य गुणत्वाभ्युपगमात्।

ननु शब्दः नैव गुणो भवितुमर्हति। द्रव्यत्वेन वादिभिरङ्गीकृतत्वात्। यथा चाहुः—

"वर्णात्मकाश्च ये शब्दाः नित्याः सर्वगतास्तथा।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः॥" (सा. त. कौ. ९२) इति।

---

1. कानि पुनरिन्द्रियाणि? घ्राण-रसन-नयन-त्वक्-श्रवणानि बाह्यानि, आन्तरं च मनः। (प्र. प. १४७)

एवं शब्दस्य द्रव्यत्वमेवेति चेत्, तन्मन्दम् । शब्दस्य एकेन्द्रियग्राह्यतया रूपादिवत् गुणत्वस्यैव सिद्धेः । एवं च शब्दगुणकं श्रोत्रमिति आकाशस्य शब्दगुणकस्यैव श्रोत्रत्वमिति सूपपादम् ।

१–४-४ समीक्षणम्— ज्ञानार्थकात् इन्द्रिशब्दात् समुद्भूत इन्द्रियशब्दः । इन्द्रियाणीमानि अहङ्कारप्रकृतिकानीति साङ्ख्यानां वेदान्तिनां च सिद्धान्तः[1] । रूपाख्यात् भौतिकद्रव्यात् इमानि जायन्त इति बौद्धानां पन्थाः (न्या. म. ४९) । जैनैश्चैवं चिन्त्यते यत् पुद्गलाख्यात् द्रव्यविशेषादिन्द्रियाणि समुत्पद्यन्त इति (न्या. म. ५३) । एतद्भिन्नतया नैयायिकैः मीमांसकैश्च भूतप्रकृतिकत्वम् इन्द्रियाणामभ्युपगतम् ।

इन्द्रियविभागविषयेऽपि दार्शनिकानां दृष्टिः नैकविधा । त्वगेकमेवेन्द्रियमिति वदन्ति केचन तत्त्वशास्त्रविदः[2] । साङ्ख्यैस्तावत् कैश्चिद्दश, द्वादश, त्रयोदश चेन्द्रियाणि अङ्गीकृतानि । ईश्वरकृष्णेन त्रयोदशेन्द्रियाणि अभ्युपगतानि[3] । अभिधर्मकोशे वसुबन्धुना द्वाविंशेन्द्रियाणि प्रतिपादितानि (अ. को. ४६१) । किन्तु कर्मेन्द्रियाणाम् इन्द्रियत्वमनभ्युपगच्छद्भिः नैयायिकैः

---

1. सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् । (सा. त. कौ. २५)

2. न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति; यया सर्वेन्द्रियस्थानानि व्याप्तानि, यस्यां च सत्यां विषयग्रहणं भवति, सा त्वगेकमिन्द्रियमिति । [प्र. भा. ३-१-५५, न्या. म. २. ५३]

3. करणं च त्रयोदशविधम् । [सा. त. कौ. ३२]

मीमांसकैश्च पञ्चैव ज्ञानेन्द्रियाणि बाह्यानि स्वीकृतानि। आन्तरं चैकं मनः। गौतमसूत्रेष्वेव इन्द्रियाणां स्पष्टतया निर्दिष्टत्वात् प्राचीनमीमांसाग्रन्थेषु तदुल्लेखस्यानुपलम्भात् तदनन्तरकालिकैः भाट्टैः प्राभाकरैश्च मीमांसकैः स एव पन्थाः अनुसृत इति वक्तुं शक्यते।

नैयायिकैः प्राभाकरैश्च श्रोत्रस्याकाशात्मकत्वं समास्थितम्। भाट्टैस्तु तस्य दिगात्मकत्वम् प्रतिपादितम्। बाहिराणाम् इन्द्रियाणां भूतप्रकृतिकत्वं तेषामपि इष्टमेव। चक्षुरादीनां चतुर्णामिन्द्रियाणां पृथिव्यादिभूतप्रकृतिकत्वे सिद्धे अवशिष्टस्य श्रोत्रस्य आकाशात्मकत्वमेवोचितमिव प्रतिभाति। अग्निगुप्रैषमन्तरा अन्यस्य प्रमाणस्य तस्य दिगात्मकत्वनिरूपकस्यानुपलम्भात्। अतः श्रोत्रमाकाशात्मकमेवेति सारः॥

## १–५ मनोनिरूपणम्

१–५-१ न्यायसिद्धान्तः— स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयः (न्या. भा. ३६) युगपद् ज्ञानानुत्पत्तिश्च (न्या. द. १-१-१६) मनसो लिङ्गम्। सत्स्वपि इन्द्रियार्थसंनिकर्षेषु ज्ञानानि तावत् युगपत् न संभवन्ति। तेनेदं ज्ञायते यत् अस्ति तत्तदिन्द्रियसंयोगि, सहकारि, निमित्तान्तरम् अव्यापि, यस्य संनिधेः ज्ञानमुत्पद्यते, असंनिधेश्च नोत्पद्यत इति। अपिच सुखसाक्षात्कारः सकरणकः, जन्यसाक्षात्कारत्वात्। तत्करणत्वं न बाह्येन्द्रियाणाम्। इतरबाधनिश्चयसहकृतादनुमानात् सुखसाक्षात्कारः क्लृप्तेन्द्रियादतिरिक्तेन्द्रियकरणक इत्यनुमितिर्भवति। तादृशविलक्षणेन्द्रियमेव मनः।

एवं सुखादिकं चासमवायिकारणकम्, भावकार्यत्वात्, घटवत् । तच्चासमवायिकारणं संयोगादतिरिक्तं न भवति । पृथिव्यप्तेजोवाय्वाकाशकालदिग्भिस्सह संयोगो न भवतीति, इतरबाधनिश्चयसहकृतादनुमानात् सुखादिकं पृथिव्यप्तेजोवाय्वाकाशकालदिग्वृत्तिसंयोगासमवायिकारणकम् इत्यनुमितिः भवति । संयोगस्य द्विनिष्ठतया तत्रैकं द्रव्यमात्मा । तद् द्वितीयं द्रव्यमेव मन इति[1] मनसः सिद्धिः ।

इदं च मनः न भौतिकम्, नच नियतविषयम् । सर्वविषयं चेदं मनः सकलबाह्येन्द्रियाधिष्ठानतया तदधिगम्यसुखादिविषयग्राहित्वाच्च । चक्षुरादिबाह्येन्द्रियाणां मनोऽधिष्ठितानामेव स्वस्वविषयग्रहणसामर्थ्यम् । अत एव इन्द्रियार्थैः रूपरसादिभिः इन्द्रियाणां सत्स्वपि संनिकर्षेषु युगपत् रूपरसादिज्ञानानामनुत्पत्तिः । एकस्मिन् क्षणे मनसः बहुभिरिन्द्रियैः संयोगस्यासंभवात् । अत एव चञ्चलानामिन्द्रियाणां सारथितया मनः प्रकीर्त्यते, हेयं चेदमित्युपदिश्यते[2] च ।

---

1. नन्विन्द्रियजन्यत्वं सुखादिप्रत्यक्षाव्यापकं प्रत्यक्षलक्षणमिति चेत् न । ज्ञातकरणाजन्यः सुखाद्यनुभवः इन्द्रियजन्यः जन्यप्रत्यक्षत्वात्, रूपप्रत्यक्षवत्, जन्यसाक्षात्कारस्य इन्द्रियजन्यत्वादिति तत्रापि तल्लक्षणसत्त्वात् । स्पर्शाद्यविषयत्वेन त्वगादिना नार्थान्तरम्, गन्ध-रस-रूप-स्पर्शेष्वेकैकमात्र-साक्षात्काराजनकत्वेन पृथिव्यादिभेदसिद्धौ निःस्पर्शत्वाद्यवात् निरवयवं च मनः । (त. चि. ८२३)

2. विदधत्सुखादिभोगं वहच्च तरलेन्द्रियाश्वसारथिताम् ।
बन्धनिमित्तं मन इति मनस्विना यत्नतो हेयम् ।। [न्या. म. ४९८]

प्रतिशरीरमेकैकं मनः अभ्युपगन्तव्यम् । यदि अनेकानि मनांसि प्रतिशरीरमङ्गीक्रियन्ते तर्हि ज्ञानयौगपद्यप्रसङ्गः । तच्च मनः क्रियावत्; निष्क्रियेण इन्द्रियाण्यधिष्ठातुमशक्यत्वात् । क्रियावत्त्वादेव च तत् मूर्तमित्युच्यते । नित्यं च तत् निरवयवमित्युच्यते । वेगवच्च तत् । अन्यथा आशु सञ्चारानुपपत्तेः । अचेतनं च तत्; तस्य करणत्वात् । एकस्मिन् शरीरे चेतनद्वयासमावेशात् (न्या. म. ४९८) ।

ननु मनः विभु, सर्वदा स्पर्शरहितद्रव्यत्वात्, विशेषगुणशून्यद्रव्यत्वात्, नित्यत्वे सत्यनारम्भकद्रव्यत्वात्, ज्ञानसमवायिकारणसंयोगाधारत्वात् इति चेत् - न । चतुर्णामपि हेतूनाम् एतेषां स्वरूपासिद्धत्वात् । तथा हि - सुखाद्युपलब्धिक्रियायाः करणतया हि मनोऽनुमितिः । तदा हि न द्रव्यत्वमस्य सिध्यति । अद्रव्यस्यापि करणत्वोपपत्तेः । अथ सुखाद्युपलब्ध्याः साक्षात्कारितया मनसः इन्द्रियतया अनुमितौ निरुपाधेः व्यापकस्य इन्द्रियत्वं नोपपद्यत इति उपाधिः कश्चन वक्तव्यः । यदि कर्णशष्कुलीवत् नियतस्य कस्यचनावयवस्य उपाधित्वं कल्प्यते, तदा तदवच्छेदेनैव वृत्त्युपपत्तिः । दृष्टे च तस्मिन्नवयवे भवेदवश्यं वृत्तिनिरोधः श्रवणेन्द्रियवत् । यदि शरीरं कृत्स्नमेवोपाधिः तर्हि तदवच्छेदेन वृत्तिलाभो ह्यनपलपनीयः । तदा 'शिरसि मे वेदना,' 'पादे मे सुखम्' इत्याद्यव्याप्यवृत्तित्वप्रतीत्यनुपपत्तिः । विभुकार्याणाम् असमवायिकारणानुरोधेन देशनियमाभ्युपगमात् । अतः विलक्षणमेवैकम् अतीन्द्रियमुपाधितया कल्पनीयम् । एवं च तस्येन्द्रियत्वे स्वाभाविके अधिककल्पने प्रमाणाभावात् संभवति

धर्मिग्राहकप्रमाणबाधः । अतः अणु मनः इत्यङ्गीकार्यम् । अत एव सूत्रकारेणापि कण्ठरवेणैवोक्तं तस्याणुत्वम्[1] । एवमेव च वैशेषिकदर्शनेऽपि मनसः अणुत्वं स्पष्टमुक्तम्[2] ।

१-५-२ भाट्टसिद्धान्तः— भाट्टमतेऽपि आन्तरमिन्द्रियं मन इत्यवोचाम । तच्चैवं साध्यते - "सुखादिसाक्षात्कारः इन्द्रियजन्यः । साक्षात्कारत्वात्, रूपसाक्षात्कारवत्" । इत्यनुमानेन तत्करणतया सिध्यति किञ्चिदिन्द्रियम् । तच्च चक्षुरादिबाह्येन्द्रियं न भवति इति आन्तरं मन.संज्ञकम् इन्द्रियं कल्प्यते । तच्च मनः विभु वा अणु वेति विचिकित्सायां प्राभाकरैः तस्याणुत्वं नैयायिकैरिवाभ्युपगम्यते । मीमांसका हि मनोवैभववादिन इति शास्त्रान्तरेषु च तन्मतमनूद्य दूष्यते । कौमारिला मनोवैभववादिन इति वरीवर्ति महती प्रसिद्धिः[3] । मनोवैभवसाधकयुक्तयः मानमेयोदयकर्त्रा नारायणेनैवं प्रदर्शिताः, यथा— "सुखाद्यापरोक्ष्यसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं विभुपरिमाणमस्पन्दं च मनः । अणुपरिमाणं चञ्चलं च मन इति केचिदूचिरे । तदसङ्गतम् । मनो विभु स्पर्शानर्हद्रव्यत्वात्, अनारभ्यारम्भकद्रव्यत्वाद् वा, ज्ञानासमवायिकारणसंयोगाधारत्वाद्वा, आत्मवत् । (मा. मे. २.१४) इति । अयं च मनोवैभववादः नारायणेन स्वगुरोः चिदानन्दपण्डितस्य नीतितत्त्वाविर्भावात् परिगृहीतः (नीति. ६२) । पार्थसारथिमिश्रैः शास्त्रदीपिकायां मनसः विभुत्वं वा

1. यथोक्तहेतुत्वाच्चाणु । [न्या. सू. ३-२-६०]
2. तदभावादणु मनः । [वै. सू. ७-१-२३]
3. कौमारिलानामेवास्ति मनसो वैभवं भुवि । [कु. म. ७]

अणुत्वं वा न प्रतिपादितम् । किन्तु 'अन्यमनस्कस्य' इत्यादि-प्रयोग दर्शनात् तेषामपि अविभुत्वमेव इष्टं मनस इत्यभिप्रेयते[1] । भाट्टचिन्ता मणौ च गागाभट्टेन मनसः अणुत्वमेव युगपद् ज्ञानानुत्पत्तिवशाद् इति कण्ठरवेण प्रत्यपादि[2] । अन्यच्चात्र गागाभट्टेन "येऽपि तस्य विभुत्वमाहुः" इत्यादिना स्वस्य वैभवपक्षे अरुचिरपि प्रदर्शिता ।

१-५-३ **प्राभाकरसिद्धान्तः**— सर्वदा खलु विषयावबोधः न जायते । किन्तु कादाचित्को हि सः । विषयावबोधेऽस्मिन् आत्मा समवायिकारणम् । न खल्वसमवायिकारणं विना कार्यम् उत्पत्तुमर्हति । तेन चावश्यं समवायिकारणप्रत्यासन्नेन भाव्यम् । प्रत्यासत्तिश्च लोके द्विधा दृश्यते कार्यसमवायः, तत्कारणसम-वायश्चेति । अग्निसंयोगः पाच्यद्रव्यसमवेतः सन् असमवायि-कारणतामापन्नः तत्र गन्धादिकमारमते । तन्तुरूपं पटकारण-भूततन्तुषु समवेतं सत् पटरूपारम्भकं भवत्यसमवायिकारणम् । प्रकृते तु आत्मनः नित्यतया तत्कारणसमवेतमसमवायिकारण-मिति कल्पनायाः निरवकाशतया आत्मसमवेतस्य गुणान्तरस्य असमवायिकारणत्वं कल्पनीयम् ।

---

1. तच्चात्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्तते, न बाह्येषु रूपादिषु । रूपादि-ज्ञानेष्वपि तत् चक्षुरादिसहायं प्रवर्तते । एवमनुमानादिष्वपि लिङ्गादि-सहायम् । अन्यमनस्कस्य सम्प्रयुक्तेष्वपि रूपादिषु ज्ञानानुत्पत्तेः ।
[शा. दी. ३६]

2. तच्चान्तरिन्द्रियं स्वातन्त्र्येण आत्मतद्योग्यगुणतद्गतजातिमात्रग्राहकम्, बाह्यविषयेषु तस्य स्वातन्त्र्याभावात् । कुतो न स्वातन्त्र्यमिति चेन्न । तस्याणुपरिमाणस्य देहाद् बहिर्भावाभावेन संनिकर्षासम्भवात् । युगपद् ज्ञानानुत्पत्तिश्च मनसोऽणुत्वे प्रमाणम् । [भा. चि. १६]

एवमात्मनोऽपि बोधाख्यः धर्मः द्रव्यान्तरसंयोगमेव असमवायिकारणतया आश्रयते। तस्य पुनः आश्रयतत्त्वकल्पने मानाभावाद् अद्रव्यद्रव्यत्वं निर्णीयते। लोके खलु अद्रव्यद्रव्यं द्विविधमुपलभ्यते। परममहत्परिमाणम् आकाशादिकम्, परमाणुरूपं च। साम्प्रतं द्रव्यान्तरस्यास्य परममहत्त्वाभ्युपगमे द्वयोः संयोग एवानुपपन्नः। संयोगकारणानामेवाभावात्। एवं च परममहतोः साक्षात् संयोगस्याभावात् पारिशेष्यात् तस्य द्रव्यस्याणुत्वमेव निश्चीयते। (प्र. प. १४९)

मनसः अणुत्वाभ्युपगमे तु तत्कर्मवशादेव संयोगोत्पत्तिरिति न काऽप्यनुपपत्तिः। मानसिकं कर्म च प्रयत्नवदात्मसंयोगवशाज्जायते, शरीरकर्मवत्। प्रयत्नाभावेऽपि अदृष्टवदात्मसंयोगवशादेव तदुपपद्यते, यथा वायोस्तिर्यक्पवनम्[1]।

इदं च मनः आन्तरमिन्द्रियमिति प्रागवोचाम। नच वाच्यम्, पृथगिन्द्रियत्वकल्पनेन अन्येन्द्रियवत् इन्द्रियान्तरानपेक्षतया किमिदं गृह्णातीति। सुखदुःखेच्छादिसम्बन्धात् तज्ज्ञानोत्पत्तौ निरपेक्षकारणमिदमिति उपपद्यत एव तस्य पृथगिन्द्रियत्वम्। स्मृत्युत्पत्तौ पुनः पूर्वानुभवजनितसंस्कारोद्बोधसहकार्यनुगृहीतस्य तस्य कारणत्वमिति।

१-५-४ **समीक्षणम्**— नैयायिकैः भाट्टैः प्राभाकरैश्च अस्ति प्रतिशरीरमेकं मन इति तावदङ्गीक्रियते। किन्तु तत्परिमाणविषये नैयायिकैः प्राभाकरैश्च अणुत्वेऽङ्गीक्रियमाणे, अर्वाचीनैः

---

1. "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनम् अणूनां मनसश्चाद्यं कर्म अदृष्टकारितम्"। [वै. द. ५-२-१३]

भाट्टैस्तावत् तस्य विभुत्वं प्रतिपाद्यते, याश्च विभुत्वसाधक-युक्तयः न्यायग्रन्थेषु मीमांसकपरतया अनूद्य खण्ड्यन्ते ।

भारतीयदार्शनिकेषु नैयायिकाः, वैशेषिकाः मीमांसकाः, साङ्ख्याश्च मनस आन्तरेन्द्रियत्वं सुखदुःखाद्यनुभवकरणत्वं च अभ्युपयन्ति । एवं च मनसः चैतन्यस्याभावात् अचेतनं मनः इति वक्तव्यम् । बाह्येन्द्रियेभ्यः अस्य तावद् एतावान् भेदः यद् बाह्येन्द्रियं नियतविषयं, मनश्चेदं सर्वविषयमिति । एतद्विरुद्ध-तया पाश्चात्यतत्त्वशास्त्रकारैः मनसः चैतन्यमभ्युपगतम् । ऋते बौद्धान् अद्वैतवेदान्तिनश्च सर्वैरपि दार्शनिकैः मनसः आन्तरेन्द्रि-यत्वम् अङ्ग्यकारि । साङ्ख्यास्तावत् मनः, बुद्धि, अहङ्कार इति त्रिविधमन्तःकरणम् अङ्गीकुर्वन्ति । तैरिन्द्रियाणां जगन्मण्डल-व्यापित्वम् अभिधीयते[1] । योगदर्शने प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतिरूपचित्तवृत्तीनां निरोधः योग इति प्रतिपादितत्वात् व्या-पकस्य चित्तस्य परिणामभूतं मन इति, तच्च मध्यमपरिमाण-मिति च निर्णीतम्[2] । ईश्वरकृष्णस्तु साङ्ख्यतत्त्वकौमुद्यां मनसः इन्द्रियत्वमभ्युपगम्यास्य सङ्कल्पकारित्वं च प्रतिपादयति[3] । सुचरितमिश्रः कुमारिलवत् मनसः इन्द्रियत्वमूरीकुर्वन् अधि-कतया अवधानसाधनतां चाभ्युपगच्छति ।

---

1. सांख्यानाम् आहंकारिकत्वाद् इन्द्रियाणाम्, अहंकारस्य च जगन्मण्डल-व्यापित्वात् सर्वगताः प्राणाः [भामती, ब्र. सू. २-४-७] ।

2. योगश्चित्तवृत्तिनिरोधः [यो. द. १-१-१] ।
प्रमाणविपर्ययविकल्पनिद्रास्मृतयः । [यो. द १-१-६; उद्द्योतः, यो. द. ३-२-११५]

3. उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् [सा. त. कौ. २७] ।

नव्यनैयायिकैस्तु एवं प्रतिपाद्यते—बाह्यप्रत्यक्षविषये मनसः नेन्द्रियत्वम्। तत्र तस्य करणत्वाभावात्। एवं स्मृत्यनुमित्यादौ तस्य करणत्वमेवाभ्युपगम्यते नेन्द्रियत्वम्[1]। अत एव तत्त्वचिन्तामणिकारेण गङ्गेशोपाध्यायेन प्रत्यक्षलक्षणे इन्द्रियार्थसंनिकर्षप्रवेशः बलात् प्रतिरुद्धः।

एतत्परिमाणविषये दार्शनिकेषु महान् मतभेदो दरीदृश्यते। मीमांसकानां मनोवैभववादः न्यायकुसुमाञ्जलिप्रभृतिषु ग्रन्थेषु अनूद्य नैयायिकैः खण्डितः। पण्डितसमाजे च मनोवैभववादिनः मीमांसका इति महती प्रथा वरीवर्ति। तत्र सुप्रसिद्धयोः मीमांसकयोः भाट्ट-प्राभाकरयोः प्राभाकरप्रस्थाने नैयायिकानामिव मनसः अणुत्वमेवाङ्गीकृतम्। भाट्टप्रस्थाने तु प्राचीनेषु ग्रन्थेषु मनसः विभुत्वप्रतिपादिकाः युक्तयः नोपलभ्यन्ते। प्रत्युत भाट्टपथप्रदर्शिन्यां शास्त्रदीपिकायां पार्थसारथिमिश्रेण तस्याविभुत्वमेव सूचितमिति प्रागभिहितम्। चिदानन्दपण्डितेन नीतितत्त्वाविर्भावे, तच्छिष्येण नारायणेन मानमेयोदये च मनसः विभुत्वमेव प्रतिपादितम्। नीतितत्त्वाविर्भाव-मानमेयोदयावन्तरा न कुत्रापि भाट्टग्रन्थेषु प्रामाणिकेषु तस्य विभुत्वं निरूपितम्।

भाट्टचिन्तामणिकारेण नव्यभाट्टशिरोमणिना गागाभट्टेनापि मनसः अणुत्वमेवोट्टङ्कितम्। अतः सर्वस्याप्यस्य समीक्षणेन समुदेति तावदेवं मनीषा यत् प्राचीनमीमांसकग्रन्थेषु

1. स्मृत्यनुमित्यादौ च मनसो नेन्द्रियत्वेन हेतुत्वम्। [न्या. म. ४९८]

मनोवैभववादः कुत्रापि कैश्चित् प्रतिपादितः, प्रचारमुपनीतश्च; यं च वादं दृष्ट्वा उदयनाचार्यः मनोवैभवयुक्तीनां खण्डनाय न्यायकुसुमाञ्जलावुद्युक्त आसीत् । उदयनानन्तरं पुनः मीमांसकेष्वपि स वादः मन्दप्रचारतामगात् । पुनः गच्छति काले चिदानन्दनारायणप्रभृतिभिः स एव समुन्मीलितश्चेति ।

नैयायिकोक्तयुक्त्यनुरोधं मनसः विभुत्वं वा मध्यमपरिमाणं वा न संभवि, किन्तु अणुत्वमेव । अत्र विषये नैयायिकानामेव पन्थाः प्राभाकरैः सम्यगनुसृतः । तथैव च केश्चिद् भाट्टमीमांसकैश्च । उपर्युक्तप्रस्थानत्रयसिद्धान्तपरिशीलने क्रियमाणे मनसः अणुत्वम्, अचेतनत्वं च नैयायिकैरभ्युपगतमेव साधीय इति प्रतिभाति ॥

१·६ प्रत्यक्षोत्पत्तिप्रकारः—

१·६·१ न्यायसिद्धान्तः— आत्ममनःसंयोगे मनइन्द्रियसंयोगे इन्द्रियार्थसंयोगे च सति यद् ज्ञानमुत्पद्यते तत्प्रत्यक्षमिति नैयायिकानां सरणिः । प्रत्यक्षे इन्द्रियार्थसंनिकर्षः अवश्यम्भावी । विशिष्टं कारणं प्रत्यक्षं ज्ञानं प्रतीदम् । इतरच्च कारणजातम् अनुमानादिकस्यापि समानम् । अत एव सूत्रकृताऽपि महर्षिणा विशिष्टकारणवचनमेवाभिहितम्[1] । अत्र संनिकर्षपदं प्रथमतः प्रत्यक्षसूत्रे सूत्रकारेण तदनु भाष्यकारेण च प्रयुक्तम् । तदनन्तरं भारद्वाजोद्द्योतकरः स्ववार्तिके संनिकर्षान् षोढा विभज्य न्यरूरुपत् (न्या. वा. १९९) ।

1. इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् [न्या. सू. १-१-४] ।

प्रत्यक्षसामान्यं प्रति महत्त्वोद्भूतरूपवत्त्वालोकसंयोगानां कारणत्वम् अभ्युपगच्छन्ति नैयायिका: (मुक्ता. ४२१)। वैशेषिकैस्तु महत्वोद्भूतरूपवत्वानेकद्रव्यवत्वानि प्रत्यक्षकारणानीत्युच्यते[1]। किन्तु व्योमशिवाचार्य: व्योमवत्याम् एतत्सम्प्रदायविरोधेन एषां प्रत्यक्षसामान्यं प्रति कारणत्वं निराचक्रे[2]। मुक्तावलीकारेण विश्वनाथेन—"आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम्; त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्। तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्" (मुक्ता. ७१) इति। बाहिरद्रव्यप्रत्यक्षसामान्यं प्रति रूपस्य कारणता प्रतिपाद्यते। तत: परं स एव, प्रमाणाभावात् बाह्यद्रव्यप्रत्यक्षमात्रे रूपं न कारणम्, अपिच चाक्षुषप्रत्यक्षे रूपम्, स्पार्शनप्रत्यक्षे स्पर्शश्च कारणमिति नवीननैयायिकमतम् उपस्थापयामास (मुक्ता. ४२२)। नव्यनैयायिकै: वायुप्रत्यक्षमभ्युपगच्छद्भि: तत्र उद्भूतस्पर्श एव कारणमित्युच्यते (मुक्ता. ४२३)। दिनकरभट्टस्य नेदमिष्टमिव प्रतिभाति।

१–६-२ भाट्टसिद्धान्त:— आत्मन: संयोग:, मनइन्द्रियसंयोग:, इन्द्रियार्थसंयोग: प्रत्यक्षे कारणमिति नैयायिकानामिव भाट्टानामपि सम्मतमेव। इन्द्रियार्थसंप्रयोग: विशिष्टकारणं प्रत्यक्षस्य। अन्यदनुमानादेश्च समानम्। प्रत्यक्षं हि षोढा भवितुमर्हति चाक्षुष-त्वाच-श्रावण-रासन-घ्राणज-मानसभेदेन।

---

1. महत्यनेकद्रव्यवत्वात् रूपाच्चोपलब्धि:। [वै. द. ४-१-६]
2. Varadachari V., "Conditions for the rise of Perceptual Cognition", *Prof. Suryakumar Bhuyan Commemoration Vol.* pp. 248-251 (Gauhati, 1966).

सर्वेष्वपि प्रत्यक्षेषु महत्त्वस्य कारणत्वमभ्युपगच्छन्ति भाट्टाः। तच्च महत्त्वं द्रव्यप्रत्यक्षे समवायसंबन्धेन गुण-क्रिया-जाति-प्रत्यक्षे समवायघटितसामानाधिकरण्येन, गुण-क्रियागतजाति-प्रत्यक्षे चैकार्थसमवायसमवायेन च कारणमिति तावदेतेषां मतम् (भा. चि. १७)।

चाक्षुषप्रत्यक्षोत्पत्तौ उद्भूतरूपं, उद्भूतानभिभूतरूपालोकसंयोगश्च कारणम्। ननु उद्भूतरूपमपि। अत एवैतेषां मते वायोः त्वाचप्रत्यक्षत्वम् अभ्युपगम्यते[1]। एवं च बहिरिन्द्रियजन्यप्रत्यक्षं प्रति नोद्भूतरूपस्य सर्वत्र कारणत्वम्। किन्तु चाक्षुषप्रत्यक्षं प्रत्येव तस्य कारणत्वमिति एतेषामाशयः। (भा. चि. १७)। मानप्रत्यक्षोत्पत्तौ महत्त्वमपि कारणमिति केचिदभ्युपगच्छन्ति, नैवेति चेतरे (भा. चि. १७)।

१-६-३ प्राभाकरसिद्धान्तः— प्राभाकरमीमांसकैः मेये, मातरि, प्रमायां च प्रत्यक्षमभ्युपगम्यते[2]। तत्र दरीदृश्यते भेदः प्रतिप्रत्यक्षम्। तथा हि— 'मेयेष्विन्द्रिययोगोत्था' इत्युक्ततया (प्र. प. १४७) द्रव्य-जाति-गुणेषु इन्द्रियसंयोगजन्या प्रत्यक्षप्रतीतिरिति ज्ञायते। एभिश्च संयोगः, संयुक्तसमवायः, समवायः इति संनिकर्षत्रितयमत्र योगपदेनाभिधीयते। संयोगात् रूपवत् महत्त्ववत् स्पर्शवद्द्रव्यं प्रतीयते। संयुक्तसमवायात्

1. Varadachari V., "Conditions for the Rise of Perceptual Cognition", *Prof. Suryakumar Bhuyan Commemoration Volume*, pp. 248-251.

2. मेयमातृप्रमासु सा। [प्र. प. १४७]

जातिगुणादीनां ग्रहणम् । समवायात् शब्दग्रहणं च । एवमेव मातरि मितौ च प्रत्यक्षमेवमुपपादितं वर्तते । यथा–

सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥
(प्र. प. १६७) इति ।

सर्वस्यामपि प्रतीतौ ग्रहणरूपायां वा स्मरणरूपायां वा साक्षादात्मा भासत एव, यथा 'अहमिदं जानामि' इति । न कुत्रापि केवलं 'जानाति' इति बुद्धिः । अतः त्रिष्वपि प्रमातृ-प्रमिति-प्रमेयेषु एकैव संवित् ।

ननु तावदेवं चेत् सर्वमपि प्रत्यक्षं प्रसज्येत । तथा हि— सर्वेष्वपि ज्ञानेषु 'इदमहं जानामि' इति प्रयोगस्य समुपलभ्यमानत्वात् प्रमातृ-प्रमिति-प्रमेयाणां त्रयाणामपि प्रत्यक्षत्वाङ्गीकारात् सर्वं ज्ञानं प्रत्यक्षमेव स्यात् । न तावद् अनुमानादिविभाग इति चेत् इष्टापत्तिः (प्र. प. १७०) । मात्रपेक्षया सर्वस्य ज्ञानस्य प्रत्यक्षत्वात् । अनुमानादिप्रमाणान्तरव्यवहारस्तु प्रमेयापेक्षया युज्यत एव । प्रमेयस्य हि नायं नियमः सर्वत्र तदपरोक्षमेवेति । स्मृतिषु अनुमानादिषु च प्रमेयं न खलु भवितुमर्हत्यपरोक्षम् । अत एवोक्तं प्रमाणान्तरव्यवहारः प्रमेयापेक्षयेति । प्रतीतयश्च लोके सर्वाः प्रत्यक्षाः एव प्रकाशन्ते । तासां स्वात्मनि प्रत्यक्षत्वं सर्वथा युक्तमेव । प्रत्यक्षप्रमाणत्वमपि निराबाधम् (प्र. प. १७०)। एवम् आभ्यन्तरसुखादीनां प्रत्यक्षे संनिकर्षद्वयं कारणं भवति । आत्ममनःसंयोगाख्यः सुखादिमनःसंनिकर्षश्च संयुक्तसमवायः (प्र. प. १५३) ।

१–६-४ समीक्षणम् —नैयायिकैः प्रत्यक्षसामान्यं प्रति महत्त्वोद्भूतरूपवत्त्वालोकसंयोगानां कारणत्वमभ्युपगम्यते। वैशेषिकाभ्युपगतम् अनेकद्रव्यत्वम् अन्यथासिद्धतया तैः परिहृतम्[1]। संयोगादिसंनिकर्षद्वारा तत्तत्प्रत्यक्षोत्पत्तिः भवतीति तैः विशदीकृतम्।

भाट्टैः यद्यपि प्रत्यक्षसामान्यं प्रति महत्त्वस्य कारणत्वमभ्युपगम्यते पुनः, उद्भूतरूपवत्त्वस्य, आलोकसंयोगस्य च नियमेन कारणत्वं नोपगम्यते। अत एव तैः वायोः त्वाचप्रत्यक्षत्वमङ्गीक्रियते। स्पार्शनप्रत्यक्षोत्पत्तौ उद्भूतस्पर्श एक एव कारणं न तूद्भूतरूपमपीति तेषामभिसन्धिः। एवमेव मानसप्रत्यक्षोत्पत्तिं प्रत्यपि महत्त्वं कारणमिति केचिदभ्युपयन्ति भाट्टाः, नाभ्युपगच्छन्ति चान्ये।

अत्र विषये स्पार्शनप्रत्यक्षं प्रत्यपि उद्भूतरूपवत्त्वं कारणमिति वदतां प्राचीननैयायिकानां मतं विचारणीयम्। वस्तुतस्तु "वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्" (न्या. कु. २३२) इति उदयनाचार्यवाक्यपरामर्शेन नैयायिकानामपि केषांचित् वायोः प्रत्यक्षत्वम् इष्टमिति ज्ञायते। अत्र प्रथमत आरभ्य वायोः प्रत्यक्षत्वमभ्युपगच्छतां भाट्टानां मतमेव सम्यक्तरमिव प्रतिभाति। एवमेव मानसप्रत्यक्षोत्पत्तिं प्रत्यपि महत्त्वस्य कारणत्वं कुत आवश्यकम्? बाह्यप्रत्यक्षं प्रति अस्तु नाम कारणत्वमिति अत्रापि भाट्टानां राद्धान्त एव रमणीय इव दृश्यते। मुक्तावल्यामपि आत्मप्रत्यक्षादिनिरूपणावसरे आत्ममनः-

1. अत एव प्रत्यक्षे महत्त्वं कारणम्। अनेकद्रव्यवत्त्वमन्यथासिद्धम्।
[मुक्ता. २१९]

संयोगादीनामेव कारणत्वस्य उक्ततया इदमस्माभिर्ज्ञायते यत्— बाह्येन्द्रियजन्यप्रत्यक्षं प्रत्येव महत्त्वोद्भूतरूपवत्त्वादीनां कारणत्वम्, न मानसप्रत्यक्षं प्रत्यपीति ।

प्रकरणपञ्चिका-न्यायसिद्धि - नयविवेक - विवेकतत्त्वादि-प्राभाकरग्रन्थपरिशीलनेनेदमस्माभिः अवगम्यते यत् · प्राभाकराणामपि महत्त्वोद्भूतरूपवत्त्वालोकसंयोगादिकं तत्तत्प्रकरणानुरोधं प्रत्यक्षकारणमिति । उद्भूतरूपवत्त्वस्य सर्वत्रापि कारणत्वमिति यत्तार्किकैरुक्तं तद् भाट्टैरिव प्राभाकरैरपि नाङ्गीक्रियते । अत एव स्पर्शात् वायोः त्वाचप्रत्यक्षत्वमभ्युपगच्छन्ति ते[1] । (न. वि. ७३)

एवंस्थिते तन्त्रसिद्धान्तरत्नावल्यां, प्रकरणपञ्चिकापरिशिष्टे च क्रमेण चिन्नस्वामिशास्त्रि-सुब्रह्मण्यशास्त्रिभ्यां प्राभाकरमते वायुरनुमेय इति कुतो वा निश्चित्य लिखितम्, प्राभाकरग्रन्थेषु कुत्र वा स सिद्धान्त. स्वारसिकतया साधित इति विमर्शकतल्लज्जैः विचारणीयोऽयं विषयः ।

प्राभाकरैस्तावत् मेय-मातृ-प्रमाविषयकं प्रत्यक्षत्रितयमभ्युपगतम् । नैयायिकानामपि एतदविरुद्धमेव । यतः तैः व्यवसायोत्पत्त्यनन्तरमनुव्यवसायः अङ्गीक्रियते । यथा- अयं घटः, घटमहं जानामि, घटविषयकज्ञानवानहम् इति । नैयायिकोक्तं महत्त्वोद्भूतरूपवत्त्वालोकसंयोगरूपकारणजातं

---

1. वायोरनैन्द्रियकत्वं तार्किकोक्तं निराकरोति . . . , शीतोष्णस्पर्शाभ्यां वाय्वनुमानायोगात् । [वि. त. ७३]

मेयप्रत्यक्षे प्राभाकराणामप्यविरुद्धमेव। अन्यप्रत्यक्षविषये तेषामपेक्षैव नास्ति। एवं चान्ततः प्रत्यक्षोत्पत्तिकारणविषये भाट्टानां तन्मतानुसारिणां नव्यनैयायिकानां केषांचित् मतमेव उचितमिव प्रतिभाति। अत एव व्योमवत्यां व्योमशिवाचार्यः मीमांसकमतप्रभावितः तथा नूतनं समीचीनं सव्याख्याख्यानमुपस्थापितवान्[1]।

१-७ सन्निकर्षः - लौकिकः अलौकिकश्च

१ ७·१ न्यायसिद्धान्तः— नैयायिकमते हि इन्द्रियाणां प्राप्यकारित्वमप्युपगम्यते। अतः इन्द्रियार्थयोः संनिकर्षं षड्विधं बाह्यप्रत्यक्षहेतुतया अभिवर्णयन्ति ते[2]। संनिकर्षपदमिदं प्रथमतः सूत्रकारेण प्रत्यक्षलक्षणे, ततश्च भाष्यकारेण च प्रयुक्तमिति प्रागेवोक्तम्। सम्+नि+कर्षः संनिकर्षः, सम्बन्ध इत्यर्थः। यथा सम्+अव इत्युपसर्गद्वयपूर्वः इण्धातुः समवायम् अभिदधाति।

१ ७·१-१ लौकिकसंनिकर्षः— संनिकर्षोऽयं द्विविधः लौकिकालौकिकभेदेन। तत्र लौकिकसंनिकर्षः षड्विध इति ऐदम्प्राथम्येन भारद्वाजोद्द्योतकरेण न्यायवार्तिके स्पष्ट्यकारि। यथा— "संनिकर्षः पुनः षोढा भिद्यते, संयोगः, संयुक्तसमवायः, संयुक्त-

---

1. *Prof. Suryakumar Bhuyan Commemoration Volume*, p. 250: "Acording to Vyomaśiva, the conditions are to be split up into two parts, namely those which apply in full to certain cases and only some of those which are applicable to some other cases. These are applicable in full to those objects like earth, water and fire which are cognised by the organs of seeing and touch."

2. अत एव सर्वेन्द्रियाणां प्राप्यकारित्वं पश्यद्भिः शास्त्रज्ञैः इन्द्रियार्थसंनिकर्षः षट्प्रकारो व्याख्यातः। [न्या. म. ४८०]

समवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्य-भावश्चेति" (न्या. वा. १९९) इति। तत्र घटादिद्रव्येण सह चक्षुरादेरिन्द्रियस्य संयोगः संनिकर्षः। तद्गतरूपादिना अद्रव्येण सह संयुक्तसमवायः संनिकर्षः, यतः चक्षुस्संयुक्ते घटद्रव्ये रूपं समवायेन वर्तते। रूपादिगतरूपत्वादिजातिप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः, यस्मात् चक्षुस्संयुक्ते घटे रूपस्य समवेतत्वम्। तत्र रूपत्वस्य च समवायसम्बन्धेन वर्तमानत्वात्। शब्दप्रत्यक्षे समवायः संनिकर्षः। शब्दस्य गुणत्वात्। शब्दत्वजातिप्रत्यक्षे समवेतसमवायः संनिकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। अभावप्रत्यक्षे समवायप्रत्यक्षे च विशेषणविशेष्यभावस्संनिकर्षः। चक्षुस्संयुक्ते भूतले घटाद्यभावस्य विशेषणत्वात्। एवं लौकिकसंनिकर्षः लौकिकप्रत्यक्षहेतुः षड्विध इति सर्वं समञ्जसम्।

यद्यपि सूत्र-भाष्यकाराभ्यां केवलं संनिकर्षशब्द एव कण्ठरवेणोक्तः। वार्तिककारेण षोढा तद्विभागः अभिहितः। वार्तिकानन्तरकालिकेषु सर्वेष्वपि न्यायग्रन्थेषु प्रामाणिकेषु विभागोऽयमादृतः। अयं च विभागः कुत्रापि सूत्रभाष्यकाराभ्याम् अप्रतिषिद्धतया अनुमत एवेति ग्राह्यः। यतः भाष्यकारः कथयति "परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः" (न्या. भा. १९९) इति।

न्यायदर्शने तृतीयाध्यायप्रथमाह्निके इन्द्रियाणां प्राप्यकारित्वसमर्थनेन[1] प्रथमाध्यायप्रथमाह्निके गन्धादीनां गुणानां

---

1. अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः। [न्या. द. ३-१-४७] न कुड्यान्तरितानुपलब्धेरप्रतिषेधः। [तत्रैव ३-१-४८]

तत्तदिन्द्रियजन्यज्ञानविषयत्वनिर्देशेन च[1] पूर्वोक्तगुणानां तदाश्रयभूतद्रव्याणां च प्रत्यक्षे जननीये आवश्यकः संनिकर्षः सूत्रसम्मत एवेति प्रतीयते। इन्द्रियार्थसंनिकर्षोत्पन्नमिति (न्या. द. १-१-४) प्रत्यक्षसूत्रस्थार्थपदस्य, "पृथिव्यादिगुणास्तदर्थाः" (न्या. द. १-१-१४) इत्यनेन विवृतत्वात्। अत एव अत्रैवमभाषि वात्स्यायनेन यथा - "पृथिव्यादीनां यथाविनियोगं गुणाः, इन्द्रियाणां यथाक्रममर्था विषयाः" (न्या. भा. ३४) इति। संनिकर्षस्यास्य लौकिकस्य संख्याविचारे वार्तिकोक्तः षड्विध एवेति निर्णय एकः परमः सिद्धान्तः, प्रकारान्तरासम्भवात्। एवं चालोकादीनां सूत्र-भाष्यानुक्तानामपि यथा अन्वयव्यतिरेकबलात् प्रत्यक्षकारणत्वमभ्युपगम्यते तथा सूत्रभाष्ययोः कण्ठरवेणानुक्तानामपि प्रसङ्गवशात् सूचितानां षड्विधानां संनिकर्षाणाम् अभ्युपगमे न काऽप्यनुपपत्तिः।

वैशेषिकदर्शनेऽपि असूचि बहुधा संनिकर्षषट्कम्। यथा- "आत्मप्रत्यक्षं प्रति मनस्संयोगाख्यः संनिकर्षः कारणम्[2]" इति। अनेन द्रव्यप्रत्यक्षं प्रति इन्द्रियसंयोगः कारणमिति सूचितमिति विज्ञायते। एवमेव "आत्मसमवायादात्मगुणेषु" (वै. द. ९-१-१५) इत्यनेन सूत्रेण आत्मसमवेतानां ज्ञानादिगुणानां प्रत्यक्षं मनस्संयुक्तसमवायनिबन्धनमिति गम्यते। एवं च द्रव्यगतगुणप्रत्यक्षे संयुक्तसमवायः संनिकर्ष इत्युक्तं भवति। तथैव द्रव्यगतानां गुणक्रियादीनां प्रत्यक्षं संयुक्तसमवायाख्यसंनिकर्ष-

---

1. गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः। [न्या. द. १-१-१४]
2. आत्ममनसोः संयोगावात्मप्रत्यक्षम्। [वै. द. ९-१-१५]

द्वारकमिति चैवं स्पष्टयकारि । यथा - "अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः" (वै. द. ४-१-८); "संख्या परिमाणं कर्म च रूपिद्रव्यसमवायात् चाक्षुषाणि" (तत्रैव-४-१-११) इति । एवमेव "एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्" (वै. द. ४-१-१३) इति सूत्रेण गुणप्रत्यक्षे यथा द्रव्यसमवायः हेतुः; तथैव गुणगतगुणत्वजातिप्रत्यक्षेऽपि संयुक्त-समवेतसमवायः हेतुरिति स्पष्टीकृतम् । एवमेव श्रोत्रस्य आकाश-रूपत्वाभ्युपगमेन शब्दस्य आकाशगुणत्वकथनेन श्रोत्रसमवायः शब्दप्रत्यक्षे हेतुरिति समवायाख्यः संनिकर्षः सूचितो भवति[1] । तथा च "एतेन गुणत्वे भावे च" (वै. द. ४-१-१३) इत्यनेन सूत्रेण शब्दत्वप्रत्यक्षे समवेतसमवायः संनिकर्षः इति सूचित-मित्यवगन्तव्यम् । अभावप्रत्यक्षे विशेषणविशेष्यभावाख्यश्च संनिकर्षः असूचि कणादेनैवम् – "असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेः विरोधिप्रत्यक्षवत्" (वै. द. ९-१-६) इति । "असन् घटः" इति अभावप्रत्यक्षं विरोधिप्रत्यक्षवत् प्रतियोगिघटप्रत्यक्ष-समानम् । प्रतियोगिनः घटस्य प्रत्यक्षं यथा लौकिकसंनिकर्ष-जन्यं तथा इदमपि तज्जन्यम् । स च संनिकर्षः न संयोगादि-रिति संयुक्तविशेषणतात्मकं संनिकर्षान्तरं कल्प्यते । एवं वैशेषि-कदर्शनेऽपि षोढा संनिकर्षाः अभ्युपगता एवेति स्पष्टमवगच्छामः ।

प्रशस्तपादेनापि पञ्च संनिकर्षाः अङ्गीकृताः (प्र. भा. १४४, ७७५) । अभावविषये संयुक्तविशेषणतासंनिकर्षप्रस्तावः

1. श्रोत्रग्रहणो योऽर्थः स शब्दः । [ वै. द. २-२-२१]; एकद्रव्यत्वान्न द्रव्यम् । [तत्रैव २-२-२३]

तत्र न दृश्यते । न्यायकन्दल्यां तु षड्विधः संनिकर्षः सम्यक् प्रतिपादितः (न्या. क. १५४, ७७५) ।

१-७-१-२ **अलौकिकसंनिकर्षः** – अलौकिकश्च संनिकर्षः त्रिविधः सामान्यलक्षणः, ज्ञानलक्षणः, योगज इति[1] ।

१-७-१-२-१ **सामान्यलक्षणाप्रत्यासत्तिः**-समानानां भावः सामान्यम्, अनेकानुगतो धर्मः, यथा धूमत्वादिः । तत्स्वरूपः सामान्यलक्षणाख्यः संनिकर्षः । अत्र प्रत्यासत्तिः संनिकर्ष. इत्यनर्थान्तरम् । येनेन्द्रियेण यद्धर्माश्रयसकलव्यक्तिविषयप्रत्यक्षं जननीयं तदा प्रथमं तद्धर्माश्रयक्वचिद्व्यक्तौ इन्द्रियसंनिकर्षः । यथा - धूमे चक्षुःसंयोगः, ततः धूम इति ज्ञानम् । ततः तत्प्रकारत्वविशिष्टधूमत्वस्य, सामान्यलक्षणासंनिकर्षस्य सकलधूमेषु सत्त्वात् धूमाः इत्येवं सकलधूमविषयकं प्रत्यक्षं भवतीति प्राचीनमतम् ।

नवीनास्तु सामान्यं लक्षणं विषयः यस्य स सामान्यलक्षण इति (मुक्ता. ४६४) । तद्घटरूपसामान्यस्य संनिकर्षस्य नाशेऽपि तद्घटवतः स्मरणे सति तदुत्तरं तद्घटवतां सर्वेषाम् अलौकिकप्रत्यक्षमनुभवसिद्धम् । तत् प्राचीनमते न घटते । ज्ञायमानसामान्यरूपघटात्मकप्रत्यासत्तेः विनष्टत्वात् । अतः यथाकथञ्चिज्जातं सामान्यज्ञानं प्रत्यासत्तिः । तच्च स्मृतिनिर्विकल्पकसाधारणम् । घटस्य नाशेऽपि घटस्मरणरूपसामान्यलक्षणायाः सत्त्वादेव सर्वेषां तद्घटवतामलौकिकं प्रत्यक्षमुप-

1. अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ [कारि. ६३]

पद्यते। सामान्यलक्षणाया जायमानम् अलौकिकप्रत्यक्षं द्विविधम्—मानसं बहिरिन्द्रियजन्यं चेति ।

१-७-१-२-२ ज्ञानलक्षणाप्रत्यासत्तिः--- तद्धर्मज्ञानात् तद्धर्मप्रत्यक्षोत्पत्तौ ज्ञानलक्षणेति व्यवहारः[1] । स्वप्रकारीभूततद्धर्मवत्तासम्बन्धेन प्रत्यक्षं प्रति स्वविषयतद्धर्मवत्तासम्बन्धेन सामान्यलक्षणायाः कारणत्वम् । अलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति विषयतासम्बन्धेन ज्ञानलक्षणायाः हेतुत्वमिति विशेषः। एवं च उभयोः प्रत्यासत्त्योः ज्ञानरूपत्वेऽपि फलवैचित्र्याद् भेदेन व्यवहारः । तथा हि - घटत्वज्ञानाद् घटत्ववतो प्रत्यक्षजननात् सामान्यलक्षणेति व्यवहारः । घटत्वज्ञानजननात् ज्ञानलक्षणेति व्यवहारः ।

अथ केचिदाचक्षीरन् ज्ञानलक्षणायाः सामान्यलक्षणायामेवास्त्वन्तर्भाव इति । तत्तु न घटते; 'सुरभि चन्दनम्' इति प्रत्यक्षे सौरभस्य भानं ज्ञानलक्षणां विना नोपपद्यते[2] । तदिन्द्रियजन्यज्ञाने तदिन्द्रियग्रहणायोग्यधर्मस्य स्वरूपतो भाननिर्वाहार्थं ज्ञानलक्षणा ।

१-७-१-२-३ योगजप्रत्यासत्तिः—योगाभ्यासजन्यः धर्मविशेषः वेदशास्त्रपुराणादिभिः प्रतिपाद्यमानः योगज इत्युच्यते । युक्ताः युञ्जाना इति योगिनो हि द्विविधाः । अतस्तदनुरोधं तद्धर्म-

---

1. विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः । [कारि. ६५]
2. एवं ज्ञानलक्षणाया अस्वीकारे 'सुरभि चन्दनम्' इति ज्ञाने सौरभभानं कथं स्यात्? [मुक्ता. ४६७]

स्यापि द्वैविध्यमभ्युपगम्यते[1]। यस्य पुनः योगजधर्मसाहाय्येन आकाशपरमाण्वादिसकलपदार्थज्ञानं सर्वदा संभवति, स युक्त इत्युच्यते। यस्य च चिन्ताविशेषोऽपि सहकारी भवति स युञ्जान इति सङ्कीर्यते[2]।

१-७-२ भाट्टसिद्धान्तः— भाट्टैस्तावत् योग्यतासहिता प्राप्तिः संनिकर्ष इत्यभ्यधायि। यथा श्लोकवार्तिके– "योग्यतालक्षणो वाच्यः संयोगः कार्यलक्षितः।" (श्लो. वा. १३०) इति। केवलप्राप्तिमात्रस्य संनिकर्षत्वे रूपेऽपि त्वक्संयुक्तसमवायस्य सत्त्वात् तस्य त्वाचप्रत्यक्षत्वापत्तिः। अतः योग्यतापदम्। योग्यताविरहे, प्राप्तेरेव संनिकर्षत्वे त्वचा रूपावधारणम् आशङ्कितं कुमारिलेनापि[3]। एवं च विषयेन्द्रिययोः सम्बन्धः संनिकर्ष इति सिद्धम्।

१-७-२-१ लौकिकसंनिकर्षः– संनिकर्षोऽयं लौकिकालौकिकभेदेन द्विविधः। लौकिकसंनिकर्षप्रकारेषु भाट्टानाम् ऐकमत्यं नास्ति। मानमेयोदयकारः नारायणः संयोगः, संयुक्ततादात्म्यं चेति संनिकर्षद्वयमभ्युपजगाम (मा. मे. १२)। तत्र चक्षुषा त्वचा संयोगात् पृथिव्यप्तेजसां ग्रहणम्। त्वक्संयोगात् वायोः ग्रहणम्। चक्षुस्संयोगात् दिगाकाशतमसां ग्रहणम्। श्रोत्रसंयो-

1. योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः। [कारि. ६५a]
2. युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः। [तत्रैव ६५b]
3. प्राप्तिमात्रं हि सम्बन्धो नेन्द्रियस्याभ्युपेयते।
माभूत् कारणमात्रेण त्वचा रूपावधारणम्॥ [श्लो. वा. १३५]

गात् शब्दस्य ग्रहणम् । मनस्संयोगात् आत्मग्रहणम् । विभुनोरप्यात्ममनसोः नित्यसंयोगः भाट्टैरभ्युपगतः ।

द्वितीयस्तु संयुक्ततादात्म्याख्यः संनिकर्षः । तेन पृथिव्यादिषु तदात्मभूतानां जातिगुणकर्मणां ग्रहणं भवति[1] । द्रव्येण सह जातिगुणकर्मणां तादात्म्याङ्गीकारात् (त. सि. र. ३७) । जाति-गुण-कर्मगतानां सत्तारूपत्व-कर्मत्वादीनां संयुक्ततादात्म्यमेव संनिकर्षः । तेषामेव परम्परया तादात्म्यसंभवात् । अथवा नैयायिकैर्यथा रूपत्वादिग्रहणार्थं संयुक्तसमवेतसमवायाख्यः संनिकर्षः अङ्गीक्रियते, तथा भाट्टैरपि संयुक्ततदात्मतादात्म्याख्यः तृतीयः संनिकर्षः आश्रीयते । एवं च द्वेधा त्रेधा वा संनिकर्षोऽस्त्विति । यदि वार्तिककारोक्तदिशा[2] गुणानां शुक्लादीनां नित्यत्वैकत्वे अङ्गीकृत्य न तत्र जातिः अभ्युपगम्येत, तदा द्वावेत्र संनिकर्षौ; तृतीयस्य नावकाशः । एतन्मते शब्दस्य गुणत्वाभावात् समवायाख्यः, समवेतसमवायाख्यश्च संनिकर्षौ न स्तः । अभावस्य प्रत्यक्षत्वाभावात्, समवायस्यानङ्गीकारात् विशेषणविशेष्यभावरूपः संनिकर्षोऽपि नास्ति[3] ।

भाट्टचिन्तामणिकर्त्रा गागाभट्टेन संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः इति त्रयः संनिकर्षाः प्रत्यपादिषत (भा.

---

1. रूपादीनां तु संयुक्तद्रव्यतादात्म्यमेव नः ।
प्रतीतिकारणं तस्मान्न सम्बन्धान्तरस्पृहा ।। [मा. मे. १३]

2. एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ।
संसर्गमात्रभेदेन स्यात्तत्रापि हि भेदधीः ।।
स्वरूपं तु तदेवेति को जातिं कथयिष्यति । [श्लो. वा. ८३५-३६]

3. तत्राद्यं त्रिविधं तावन्नाममात्रेण भिद्यते ।
समवायादयस्त्वन्ये संनिकर्षा निराश्रयाः ।। (मा. मे. १५)

चि. १६) । अत्र तृतीयः संनिकर्षः संयुक्तसमवेतसमवायः नैयायिकाभ्युपगत एव । तेन गुणकर्मगतजातिप्रत्यक्षमभ्युपगम्यते (तत्रैव १६) । अनेन तावत् भाट्टप्रस्थाने इदम्प्रथमतया पदार्थतया समवायोऽपि अभ्युपगत इति विज्ञेयम् (तत्रैव १७) ।

१-७-२-२ अलौकिकसंनिकर्षः— भाट्टनये प्राचीनैः अलौकिकस्संनिकर्षः नाभ्युपगतः । भाट्टचिन्तामणौ गागाभट्टेन सामान्यलक्षणः, ज्ञानलक्षणश्चेति द्विविधः अलौकिकः संनिकर्षः अङ्गीकृतः (भा. चि. २१) । सामान्यलक्षणा च सामान्यज्ञानमथवा ज्ञायमानं सामान्यं वा । अनेन संनिकर्षेण इन्द्रियसंबद्धानां तत्सामान्याश्रयव्यक्तीनां प्रत्यक्षमुत्पद्यते । यदि सामान्यलक्षणः संनिकर्षः नाङ्गीक्रियते तर्हि प्रकृतघटे शक्तिग्रहे इतरव्यक्तीनामप्रत्यक्षतया सर्वत्र घटव्यक्तिषु शक्तिग्रहो न स्यात्[1] ।

ज्ञानलक्षणाख्यसंनिकर्षानङ्गीकारे ज्ञातपूर्वस्य सुरभिचन्दनखण्डस्य चक्षुरिन्द्रियेण सह संनिकर्षे सति 'सुरभि चन्दनम्' इति ज्ञानं नोत्पद्येत । सौरभे, सौरभत्वे च संनिकर्षस्याभावात् । अतः तज्ज्ञानमेव तत्र संनिकर्षः । तार्किकवत् भाट्टा अपि संनिकर्षपर्यायतया प्रत्यासत्तिपदं प्रयुञ्जते[2] ।

परन्तु अलौकिकसंनिकर्षविरोधिभिः भाट्टैः एवमुच्यते · सामान्यलक्षणाप्रत्यासत्तिः नाभ्युपगन्तव्या । मानाभावात् । अपि

1. वस्तुतः सिद्धसुखविषयकप्रवृत्त्यभावात् असिद्धसुखज्ञानार्थमरण्यस्थतण्डावी प्रवृत्तिजनकघटहेतुताग्रहार्थं शक्तिग्रहार्थं च सामान्यलक्षणा आवश्यकीति युक्तम् । [भा. चि. २३ ]

2. अतस्तत्र तज्ज्ञानमेव प्रत्यासत्तिः (भा. चि. २३).

च तदङ्गीकारे, यत् प्रमेयं तदभिधेयम् इति व्याप्त्या सर्वस्यापि परिच्छिन्नत्वात् सर्वज्ञत्वापत्तिः । नेयमिष्टा । घटोऽयं परज्ञान-विषयो न वा इति संशयस्यानुपपत्तेः (त. सि. र. ३८) । तथा ज्ञानलक्षणाप्रत्यासत्तिरपि नाङ्गीकरणीया । 'सुरभि चन्दनम्' इत्यादौ चन्दनत्वादिना सौरभादेः अनुमातुमपि शक्यत्वात् ।

तार्किकाभ्युपगता योगजधर्मप्रत्यासत्तिः भाट्टैः न तरा-मभ्युपगम्यते । तद्योगिषु मानाभावात् । इतिहासपुराणादेः प्रमाणत्वम् अन्यतात्पर्यकत्वात् नास्तीति तेषां मनीषा ।

१-७-३ प्राभाकरसिद्धान्तः—प्राभाकरमते संयोग-संयुक्तसम-वाय-समवायाख्यसंनिकर्षैः त्रिभिः मेयेषु प्रत्यक्षप्रतीतिः उप-जायत इत्यङ्गीक्रियते । 'मेयेन्द्रिययोगोत्था' (प्र. प. १०४) इत्यत्र योगपदेन त्रयः संनिकर्षा इमे सङ्गृहीताः । संयोगाख्यात् संनिकर्षात् रूपवद् महत्त्ववत् स्पर्शवद् द्रव्यं गृह्यते । तदाश्रय-जातिगुणादयः संयुक्तसमवायाख्यात् संनिकर्षाद् गृह्यन्ते । शब्दः समवायाख्येन संनिकर्षेण गृह्यते ।

'सत्सम्प्रयोगे चे'ति (मी. द. १-१-४) प्रत्यक्षसूत्रव्या-ख्यानावसरे भवनाथमिश्रेण नयविवेके सम्प्रयोग एवमभ्यवर्णि-संयोगः, संयुक्तसमवायः, समवायश्चेति[1] ।

१ ७-४ समीक्षणम्– संनिकर्षः - व्यापारः - सम्बन्धः - प्रत्या-सत्तिः इत्यनर्थान्तरम् । नैयायिकैः मीमांसकैश्च सत्यपि अवा-

1. सम्प्रयोगश्चात्र त्रिविधः - संयोगः, संयुक्तसमवायः, समवायश्चेति । संयोगाद्धि द्रव्यं स्पर्शमहत्त्ववत् पार्थिवाप्यतैजसवायवीयात्मकर्मेन्द्रियकं, संयुक्तसमवायात् जातिगुणौ, समवायाच्छब्दः (न. वि. ६८) ।

न्तरविभागभेदे संनिकर्षपदं समानार्थकतयैव स्वग्रन्थेषु प्रयुक्तम्।

१–७·४·१ लौकिकसंनिकर्षः— स्थूलतया संनिकर्षेषु लौकिकालौकिकभेदः उभयोरपि नैयायिकमीमांसकयोः सम्मतः। लौकिकसंनिकर्षविषये नैयायिकानां, भाट्टानां, प्राभाकराणां च ऐकमत्यं नास्ति। नैयायिकैः लौकिकसंनिकर्षं षोढा विभक्ते, भाट्टैकदेशिना मानमेयोदयकारेण नारायणेन द्विधा, गागाभट्टेन च त्रिधा, तथैव प्राभाकरमीमांसकेन शालिकनाथेन च त्रिधा स विभक्तः।

| | |
|---|---|
| १ नैयायिकाः | १ संयोगः<br>२ संयुक्तसमवायः<br>३ संयुक्तसमवेतसमवायः<br>४ समवायः<br>५ समवेतसमवायः<br>६ विशेषणविशेष्यभावः |
| २ नारायणः | १ संयोगः<br>२ संयुक्ततादात्म्यम् |
| ३ गागाभट्टः | १ संयोगः<br>२ संयुक्तसमवायः<br>३ संयुक्तसमवेतसमवायः |
| ४ शालिकनाथः | १ संयोगः<br>२ संयुक्तसमवायः<br>३ समवायः |

नैयायिकोक्ताः संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवायाख्याः त्रयः संनिकर्षाः प्राभाकरैश्च स्वीकृताः। अलौकिकसंनिकर्षौ सामान्यलक्षणा-ज्ञानलक्षणाख्यौ गागाभट्टेन, भाट्टचिन्तामणिकारेण स्वीकृतौ। योगजप्रत्यासत्तिस्तु नैयायिकाभ्युपगता तेन निराकृता। अतः विषयेऽस्मिन् नैयायिकानां मार्ग एव आंशिकतया मीमांसकैः अनुसृत इति वक्तुं शक्यते।

१-७-४-१-१-**संयोगसंयुक्तसमवायौ**—तत्र संयोगाख्यः प्रथमस्संनिकर्षः मतत्रयेऽपि समानः। द्वितीयसंनिकर्षः संयुक्तसमवायः नैयायिकैः, भाट्टैकदेशिना गागाभट्टेन, प्राभाकरमीमांसकैश्चाङ्गीकृतः। किन्तु मानमेयोदयकर्त्रा नारायणेन समवायस्थाने तादात्म्यपदं निवेश्य संयुक्ततादात्म्यमिति संनिकर्षः अङ्गीकृतः। द्रव्येण सह जातिगुणकर्मणां तादात्म्याङ्गीकारात् संयुक्ततादात्म्याख्यः द्वितीयः संनिकर्ष इति तेषां मतम्।

नैयायिकैरपि अत्यन्ताभेदरूपं तादात्म्यमङ्गीकृतम्। भाट्टनये तु भेदसहिष्णुः अभेदः तादात्म्यमिति तयोर्द्वयोः भेदः। केनचिदंशेन भेदः, केनचिदंशेनाभेदो हि भेदसहिष्णुरभेदः।

१-७-४-१-२ **संयुक्तसमवेतसमवायः**— कैश्चिद् भाट्टमीमांसकैरेव तृतीयः संयुक्ततदात्मतादात्म्याख्यः संनिकर्षः अभ्युपगम्यते। नैयायिकानामेतेषां च संनिकर्षत्रितयेऽस्मिन् पदमात्रभेदः; समवाय इति तादात्म्यमिति च। किन्तु तैः निर्वर्त्यं कार्यं तु समानमेव। एवं भाट्टैः तादात्म्यपदं कुतः प्रयुक्तमित्युक्ते तैः

समवायः नित्यसम्बन्धरूपः नाभ्युपगतः। तत्स्थाने तादात्म्यमिति किञ्चिदङ्गीकृतम्। अतः समवायस्थाने तादात्म्यप्रयोगः[1]। समवाय-समवेतसमवायाख्यौ संनिकर्षौ एभिः नाङ्गीक्रियेते; शब्दस्य द्रव्यत्वात् गुणत्वाभावाच्च। एवं शब्दत्वस्य संयुक्ततादात्म्येनैव निर्वाहात्। एवमेव विशेषणविशेष्यभावाख्यः संनिकर्षोऽपि नाश्रीयते। अभावस्य अनुपलब्धिगम्यत्वेन अप्रत्यक्षत्वात्, समवायस्यानङ्गीकाराच्च। भाट्टमतानुयायिना गागाभट्टेन समवायः पदार्थेषु निवेशितः (भा. चि. १७)। अत एव तेन तादात्म्यस्थाने संयुक्तसमवायः, संयुक्तसमवेतसमवाय इति समवायपदं प्रयुज्यते।

प्राभाकरैरपि समवायः अभ्युपगम्यते। अत एव तैः संयुक्तसमवायः, समवाय इति संनिकर्षद्वयं नैयायिकैरिव व्युत्पादितम्। जातिगुणकर्मगतानां सत्ता-रूपत्व-कर्मत्वादीनां द्वितीयसंनिकर्षेणैव निर्वाह इति संयुक्तसमवेतसमवायस्यानङ्गीकारः।

अत्र सूक्ष्मेक्षणिकया परीक्षायां क्रियमाणायाम् इदमवश्यवक्तव्यं भवति यत् - नैयायिकाभ्युपगतषट्संनिकर्षवाद एव श्रेयानिति। तथा हि – भाट्टैः प्राभाकरैश्च गुणगता जातिः नाङ्गीक्रियते। अत एव संयुक्तसमवेतसमवायाख्यं संनिकर्षं ते

---

1. E. B. P. p. 187: "The reason is that Samavāya or inherence as a form of relation subsisting between two naturally inseparable things is rejected by Kumārila, and *'Tādātmya'* or identity is accepted in its place".

नोरीकुर्वन्ति । जातिमनभ्युपगच्छद्भिरपि तैः 'इदं रूपम्, इदं रूपम्' इत्यनुगतायाः प्रतीतेः निर्वाहार्थं सादृश्यं किञ्चित् रूपेषु उपगम्यते । तस्य सादृश्यस्य प्रत्यक्षं तु चक्षुस्संयुक्तघट-समवेतरूपसमवायाख्यसंनिकर्षद्वारैव भवतीति अवश्यमभ्युपगन्त-व्यम् । एवं चानुक्तिसिद्धः संयुक्तसमवेतसमवायाख्यः संनिकर्ष इति ।

१ ७·४·१·३ **समवायः**— शब्दसाक्षात्कारे समवायः संनिकर्षः । कर्णशष्कुल्यवच्छिन्नस्याकाशस्य श्रोत्रत्वात्, शब्दस्य तत्र सम-वायात् । ननु सर्वः शब्दः आकाशे वर्तमानः श्रोत्रेण गृह्येत । अवच्छेद्यस्य आकाशस्यैकत्वात्, सर्वेषां च शब्दानां श्रवणेऽपि समवायात् इति चेत् - न । कर्णसंयोगावच्छिन्नसमवायः शब्द-प्रत्यक्षहेतुभूतः संनिकर्ष इत्यङ्गीक्रियते । एवं च कर्णसंयोगाव-च्छेदेन यः शब्द आकाशे समुत्पद्यते तस्यैव कर्णसंयोगावच्छिन्नसम-वायाख्यः संनिकर्षोऽस्ति, न तदितरावच्छेदेन उत्पद्यमानस्य सर्वस्यापि शब्दस्येति तद्दोषपरिहारः । नच समवायस्यैकत्वेन कर्णसंयोगावच्छिन्नसमवायस्य संनिकर्षस्य सर्वेष्वपि शब्देषु सत्त्वात् तत्प्रत्यक्षापत्तिरिति वाच्यम् । प्रत्यक्षे विषयस्य हेतुत्वात् । कर्णसंयोगावच्छिन्नाकाशे सर्वशब्दरूपविषयविरहादेव न सर्वेषां शब्दानां प्रत्यक्षत्वम् । यथा हि वायौ खलु रूपसमवायसत्त्वेऽपि रूपाभावात् 'वायू रूपवान्' इति न प्रत्यक्षं भवितुमर्हति, तथा शब्दसमवायसत्त्वेऽपि कर्णसंयोगावच्छिन्नाकाशे शब्दरूपविषया-भावात् न सर्वेषां शब्दानां प्रत्यक्षत्वम् । कदम्बगोलकन्यायेन वीचीतरङ्गन्यायेन वा श्रोत्रदेशमुपगत एव शब्दः एतत्संनि-कर्षद्वारा गृह्यते ।

१-७-४-१-४ **समवेतसमवायः**— संयुक्तसमवायवदत्रापि 'अयं शब्दः, अयं शब्दः' इत्यनुगतप्रतीतिबलात् शब्दगतस्य सादृश्यस्य वा जातेर्वा अवश्यमभ्युपगन्तव्यतया, तत्प्रत्यक्षं च विना संनिकर्षेण न खलु समुत्पत्तुमर्हतीति समवेतसमवायाख्यः संनिकर्षः अङ्गीक्रियते ।

१-७-४-१-५ **विशेषणविशेष्यभावः**— अयमेव विशेषणताख्यसंनिकर्ष इत्युच्यते । नैयायिकैः संनिकर्षेणानेन अभावप्रत्यक्षमुपजायत इत्युच्यते । प्राभाकराः खलु अभावमेव पृथक् पदार्थतया नाभ्युपयन्ति । तस्य अधिकरणात्मकत्वमिच्छन्ति । अतस्तैरयं संनिकर्षः परित्यक्तः । भाट्टास्तु अभावमभ्युपगच्छन्तः तस्यानुपलब्धिगोचरतां प्रतिपादयन्तीति तैरप्ययं संनिकर्षः नाङ्गीक्रियते । किन्तु अभावपदार्थस्य अवश्यमभ्युपगन्तव्यतया अनुपलब्धेश्च पृथक्प्रमाणत्वस्य निराकरिष्यमाणतया च संनिकर्षोऽयम् अभावग्राहकः अङ्गीकार्य एवेति नैयायिकानामाशयः ।

१-७-४-२ **अलौकिकसंनिकर्षः**— संनिकर्षः - प्रत्यासत्तिः - इति सत्यामपि समानार्थकतायाम् इदमस्माभिः अत्र विशेषतोऽवगन्तव्य यत् - अलौकिकसंनिकर्षविषये न्याय-भाट्ट-प्राभाकर-प्रस्थानेषु प्रत्यासत्तिपदमेव दरीदृश्यत इति । सामान्यलक्षणाप्रत्यासत्तिः, ज्ञानलक्षणाप्रत्यासत्तिः, योगजप्रत्यासत्तिरित्येव व्यवहारः पुनः, सामान्यलक्षणासंनिकर्षः इत्यादि नास्ति । अतः शास्त्रकारैः साभिनिवेशम् अलौकिकसंनिकर्षविषय एव प्रत्यासत्तिपदं प्रयुक्तमिति न परोक्षं विचक्षणानाम् ।

अयं चालौकिकसंनिकर्ष. सामान्यलक्षणा - ज्ञानलक्षणा - योगजप्रत्यासत्तिभेदेन त्रिविध इति नव्यनैयायिका. ।
भट्टादन्ये भाट्टाः प्राभाकरा वा अलौकिकसंनिकर्षं नाङ्गीकुर्वन्ति । न्यायदर्शनवासनावासितान्तःकरणः गागाभट्टः सामान्यलक्षणा-ज्ञानलक्षणाप्रत्यासत्ती अङ्गीकृत्य योगजप्रत्यासत्तिं निराकरोति ।

एतद्विषये नैयायिकमतमेव साधीय इति प्रतिभाति । यतः सामान्यलक्षणानङ्गीकारे प्रकृतघटे शक्तिग्रहे अप्रत्यक्षेतरघटव्यक्तिषु शक्तिग्रहः दुरुपपादः, सामान्यज्ञानाभावात् । अतः सामान्यलक्षणाप्रत्यासत्तिः अवश्यमभ्युपगन्तव्या । तथैव ज्ञानलक्षणाप्रत्यासत्त्यनङ्गीकारे चन्दनखण्डेन चक्षुरिन्द्रिये संनिकृष्टे सति 'सुरभि चन्दनम्' इति ज्ञानं न जायेत । सौरभे, सौरभत्वे च संनिकर्षाभावात् । तादृशं च ज्ञानं जायत इत्येव लोकानुभवः । अतः तद् ज्ञानमेव तत्र संनिकर्षः वाच्य. । अनुभवानुरोधेनैव तृतीया च योगजप्रत्यासत्तिः नैयायिकैरङ्गीक्रियते, वेदशास्त्रपुराणादिभिः प्रतिपाद्यमानत्वाच्च ।

यत्तु भाट्टैरुक्तं योगजप्रत्यासत्तिनिराकरणावसरे तद्योगिषु मानाभावात्, इतिहासपुराणादेः अन्यतात्पर्यकतया अप्रमाणत्वाच्चेति हेतुद्वयं, तद् दुष्टम् । तादृशयोगिषु तत्प्रभावेषु च शब्दस्यैव प्रमाणत्वात् । इतिहासपुराणादेश्च वेदार्थोपबृंहकतया प्रमाणकोटिप्रविष्टत्वात् । अतः अस्ति योगजप्रत्यासत्तिरपीति नैयायिकानां पन्था एव समीचीनः ।

## सिद्धान्तभेदप्रदर्शिनी–प्रत्यक्षाधिकारे

| | न्यायसिद्धान्ते | भाट्टसिद्धान्ते | प्राभाकरसिद्धान्ते |
|---|---|---|---|
| १ | ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् | इन्द्रियार्थसंनिकर्षजं ज्ञानं प्रत्यक्षम् | साक्षात्प्रतीतिः प्रत्यक्षम् , तच्च मेय-मातृ-मितिविषयं त्रिपुटम् उच्यते |
| २ | श्रोत्रमाकाशात्मकम् | श्रोत्रं दिगात्मकम् | श्रोत्रमाकाशात्मकम् |
| ३ | मनः अणु | मनः प्राचीनमते विभु, नवीनमते अणु | मनः अणु |
| ४ | वायुरनुमेयः प्राचीनमते, नव्यमते प्रत्यक्षः | वायुः स्पार्शनप्रत्यक्षविषयः | वायुः प्रत्यक्षः |
| ५ | बाह्यप्रत्यक्षे सर्वत्र महत्त्वोद्भूतरूपवत्त्वालोकसंयोगानां कारणत्वम् | न सर्वत्र तेषां कारणत्वम्; तत्तदिन्द्रियजन्यप्रत्यक्षे तत्तद्गुणः कारणम् | नैयायिकवदेव |
| ६ | संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायसमवायसमवेतसमवायविशेषणविशेष्यभावरूपाः षट् लौकिकसंनिकर्षाः | संयोगः संयुक्ततादात्म्यमिति द्वावेवेति केचित् , संयुक्ततदात्मतादात्म्यमिति तृतीयोऽपीत्यन्ये | संयोग-संयुक्तसमवाय-समवायाश्चेति त्रयः |
| ७ | सामान्यलक्षणा-ज्ञानलक्षणा-योगजप्रत्यासत्तिभेदेन त्रयः अलौकिकसंनिकर्षाः | सामान्यलक्षणा-ज्ञानलक्षणाप्रत्यासत्ती द्वे इति गागाभट्टः | अलौकिकः संनिकर्षः नाङ्गीक्रियते |

# द्वितीयाध्यायः

## २ अनुमानाधिकारः

### २-१ अनुमानलक्षणम्

२·१-१ न्यायसिद्धान्तः– प्रत्यक्षनिरूपणानन्तरं तदुपजीवकत्वात् बहुवादिसम्मतत्वाच्च अनुमानं निरूप्यते (त. चि. अ. ४)। तथा च गौतमसूत्रम्– "अथ तत्पूर्वकं त्रिविधमनुमानम् पूर्ववत् शेषवत् सामान्यतो दृष्टं च" (न्या. द. १·१·५) इति। अत्र समानासमानजातीयेभ्यः व्यवच्छेदाय तत्पूर्वकमिति। तानि ते, तत् पूर्वं यस्य तदिदं तत्पूर्वकम्। अर्थात् सर्वप्रमाणपूर्वकत्वमनुमानस्याभिहितं भवति। तच्च परम्परया प्रत्यक्षपूर्वकत्व एव पर्यवस्यतीति तथोक्तम्।

अथवा ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षम्। ते च, लिङ्गलिङ्गिसम्बन्धदर्शनं प्रथमं प्रत्यक्षम्, लिङ्गदर्शनं च द्वितीयं प्रत्यक्षम्। बुभुत्सोः लिङ्गदर्शनरूपद्वितीयप्रत्यक्षानन्तरं संस्काराभिव्यक्तिः, ततः स्मृतिः, तदनन्तरम् 'अयं धूम' इति पुनः लिङ्गदर्शनम्। पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणम् इदम् अन्तिमं प्रत्यक्षं लिङ्गपरामर्शरूपमनुमानं सम्पद्यते इति वार्तिककारः (न्या. वा. २९२)। अनुमानपदार्थश्च अनुमीयते अनेनेति। तात्पर्यटीकायामपि अयमेव प्रकारः विपुलतया विवृतः (ता. टी. ३०३)।

तत् पूर्वं कारणं यस्य तत् तत्पूर्वकम् इति व्युत्पत्तौ निर्णयोपमानादावतिप्रसङ्ग इति ते द्वे प्रत्यक्षे पूर्वं यस्येति व्युत्पत्ति-

रादृता (न्या. म. १२५)। प्रथमं चाविनाभावग्राहि प्रत्यक्षं, द्वितीयं च लिङ्गदर्शनम्; ते द्वे प्रत्यक्षे अनुमानस्य कारणं भवत:, नोपमानादेः।

वस्तुतस्तु लिङ्गविषयं ज्ञानं, ज्ञानविषयीकृतं वा लिङ्गं प्रतिबन्धस्मरणसहितमनुमानम्। परोक्ष. अर्थः लिङ्ग्यते गम्यतेऽनेनेति लिङ्गम्। लिङ्गमिदं पञ्चलक्षणम्। तानि च लक्षणानि—पक्षधर्मत्वं, सपक्षधर्मत्वं, विपक्षाद् व्यावृत्तिः, अबाधितत्वम्, असत्प्रतिपक्षत्वं चेति जयन्तभट्टः न्यायमञ्जर्याम्[1]। मणिकारस्तु अनुमानस्वरूपमेवं न्यरूपयत् - "तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः, तत्करणमनुमानम्। तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति" (त. चि. अ. २०-२१) इति। व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यं ज्ञानमनुमितिः। तादृशप्रमाकरणम् अनुमानम्।

केशवमिश्रेणापि लिङ्गपरामर्श एव अनुमानमित्यभाषि तर्कभाषायाम्[2]। अनुमितौ व्याप्तिज्ञानस्यैव करणत्वम्। परामर्शः व्यापारः। ज्ञायमानस्य लिङ्गस्य नैव करणत्वम्। अना-

---

1. पञ्चलक्षणकाल्लिङ्गात् गृहीतान्नियमे स्मृतेः।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते॥ [न्या. म. १०९]

2. येन ह्यनुमीयते तदनुमानम्। लिङ्गपरामर्शेन चानुमीयते। अतः लिङ्गपरामर्शोऽनुमानम्। [त. भा. ३६]

गतेन अथवा विनष्टेन लिङ्गेन अनुमित्यनुत्पादात् इति विश्वनाथन्यायपञ्चाननः[1] ।

एवं च अनुमितिजनकव्याप्तिज्ञानस्य करणत्वात् प्रमाकरणस्य प्रमाणत्वात् अनुमितिकरणं व्याप्तिज्ञानमेव अनुमानप्रमाणमिति कश्चित् पक्षः (मुक्ता. ४७१) ।

अन्नंभट्टादयस्तु फलाव्यवहितप्राक्क्षणावच्छिन्नं कारणं करणमिति मतमनुसृत्य लिङ्गपरामर्श एव अनुमानमिति पक्षान्तरमवलम्बन्ते (नि. प्र. २७४) । उक्तपूर्वं पक्षद्वयं न्यायग्रन्थेषु प्रामाणिकेषु समुपलभ्यत इति समुपादेयमेव ।

२-१-२ भाट्टसिद्धान्तः— भाट्टमतानुरोधमिदम् अनुमानप्रमाणलक्षणम् । यदाह शबरस्वामी,"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टेऽर्थे बुद्धिः" (शा. बा. ३६) इति । अयं भावः–अत्र अनुमानशब्द अनुमितिपरः । ज्ञातः हेतुहेतुमतोः व्याप्त्याख्यः सम्बन्धः येन प्रमात्रा जनेन, तस्येति विग्रहः । हेतुहेतुमत्सम्बन्धाख्यव्याप्तिज्ञानवतः प्रमातुरित्यर्थः ।

---

1. व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ।
अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि ।।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ।

येन पुरुषेण महानसादौ धूमे वह्निव्याप्तिर्गृहीता पश्चात् स एव पुरुषः क्वचित्पर्वतादौ अनवच्छिन्नमूलां धूमरेखां पश्यति; तदनन्तरं धूमो वह्निव्याप्य इत्येवंरूपं व्याप्तिस्मरणं तस्य भवति; पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति; स एव परामर्श इत्युच्यते । तदनन्तरं पर्वतो वह्निमानिति अनुमितिर्जायते । [मुक्ता. ४७१-४७३]

एकदेशदर्शनात् धूमात्मकलिङ्गदर्शनात्, एकदेशान्तरे वह्न्यात्मक-लिङ्गिनि, असंनिकृष्टे इन्द्रियसम्प्रयोगरहिते पदार्थे या बुद्धिः तदनुमानमिति ।

एवमेव शास्त्रदीपिकायां पार्थसारथिमिश्रेणापि अनुमान-लक्षणमुपन्यस्तम्[1] । मानमेयोदयकारस्तु अन्यथा अनुमानमलि-लक्षत् । यथा—

"व्याप्यदर्शनाद् असंनिकृष्टार्थज्ञानमनुमानम् । यथा पर्वते धूमवत्त्वदर्शनात् अग्निमत्त्वज्ञानम्" (मा. मे. २५) इति ।

गागाभट्टस्तु पूर्वोक्तानुमानलक्षणमन्यथाभिवर्ण्य[2] अन्यदपि लक्षणमुपस्थापितवान् । यथा "अनुमितित्वजातिमती अनु-मितिः । अनिमितित्वजातिस्तु अनुमिनोमीत्यनुभवसिद्धा । तत्करणमनुमानम्, तच्च भूतभाविलिङ्गेन अनुमित्यनुत्पत्त्यापत्तेः ज्ञानमेव, न तु ज्ञायमानो हेतुः" (भा. चि. २४) इति । नीति-तत्त्वाविर्भावकारः चिदानन्दपण्डितः अनुमानमेवमलिलक्षत् —

---

1. यस्य यादृशस्य, येन यादृशेन सह साक्षाद्वा प्रणाड्या वा यादृशः संबन्धः संयोगः, समवायः, एकार्थसमवायः, कार्यकारणत्वम्, अन्यो वा दृष्टान्त-धर्मिषु नियतो ज्ञातः, तं तादृशं साध्यधर्मिषु दृष्टवतः तस्मिन् तादृशे तादृशसम्बन्धसम्बन्धिनि प्रबलेन प्रमाणेन तद्रूप्यतद्विपर्ययाभ्याम् अपरि-च्छिन्ना या बुद्धिः सा अनुमानम् । यथा धूमस्य अनुपरतोऽर्थगमनस्य अग्निसाहित्यं महानसादिषु नियतमुपलब्धवतः पर्वते तद्दर्शनादग्निज्ञानम् । [शा. दी. ६०-६१]

2. सामान्यरूपेण ज्ञातव्याप्तिकस्य व्यक्तिविशेषदर्शनजन्यं सन्दिग्धसाध्य-वदधिकरणकमसंनिकृष्टसाध्यविषयकं निश्चयरूपं ज्ञानमनुमितिरित्यर्थः । [भा. चि. २३]

"व्याप्यदर्शनजन्मासंनिकृष्टार्थविषयं ज्ञानमनुमानम्" इति[1]। व्याप्यदर्शनाद् असंनिकृष्टार्थज्ञानमनुमानम् । यथा - पर्वते धूमवत्वदर्शनाद् अग्निमत्वज्ञानम् इति मानमेयोदये नारायणः (मा. मे. २५) । अत्र असंनिकृष्टपदेन अपरिच्छिन्नता प्रतिपाद्यते[2] । एवं च ज्ञानरूपानुमितिकरणत्वाच्च धूमादेः अनुमानत्वम् ।

माधवसरस्वती तु सर्वदर्शनकौमुद्याम् अनुमानमेवमभाणीत्— "तत्र व्याप्यव्यापकांशरूपमनुमानम् । तत्र व्याप्यांशेन व्यापकांशोऽनुमीयते" (स. कौ. ९७) इति ।

२-१-३ प्राभाकरसिद्धान्तः—शबरस्वाम्युक्तमनुमानलक्षणं परिगृह्य बृहत्यां प्रभाकरगुरुरेवं व्याचख्यौ यथा– "अनुमानमेकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टेऽर्थे बुद्धिः । कस्यैकदेशस्य दर्शनात्? ज्ञातसम्बन्धस्य (बृहती ९१)" इति । प्रकरणपञ्चिकायां शालिकनाथस्तु यस्य सम्बन्धनियमः ज्ञातः तस्यैकदेशस्य दर्शनात् असंनिकृष्टे पदार्थे एकदेशान्तरे यद् ज्ञानं जायते तदेवानुमानमित्येवं वर्णयामास[3] ।

---

1. अनुमाऽसंनिकृष्टेऽर्थे व्याप्यदर्शनजा मतिः ।
व्याप्तिस्वभावात्साध्येन नियतस्साधनान्वयः ।। [नीति. १३७]

2. असंनिकृष्टवाचा च द्वयमत्र जिहासितम् ।
ताद्रूप्येण परिच्छित्तिः तद्विपर्ययतोऽपि वा ।।

पूर्वं सत्त्वेन परिच्छिन्ने ह्यग्न्यादौ पुनरनुमानम् अनुवादः स्यात् । असत्त्वेन परिच्छेदे च बाधितत्वेनाप्रामाण्यमेव इति तदुभयनिवर्तनार्थम् असंनिकृष्टपदमिति । [मा. मे. ४९]

3. ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधिते ।

ज्ञातः सम्बन्धनियमो यस्य, तस्यैकदेशस्य दर्शनादेकदेशान्तरे असंनिकृष्टेऽर्थे या बुद्धिः, साऽनुमानमित्यर्थः [प्र. प. १९९]

अत्र एकदेशस्येत्यनेन हेतुः, एकदेशान्तर इत्यनेन साध्यं च अभिधीयेते। असंनिकृष्टपदं स्मरणाभिमाननिरसनायेति ऋजुविमलपञ्चिका। अत्र दर्शनशब्देन निश्चय इत्येवार्थलाभः। अत एवार्थापत्तितः अनुमानस्यास्य वैलक्षण्यं प्रतिपादितं भवति। प्रत्यक्षवत् प्रसिद्धतया बहुवादिसम्मतत्वाच्च प्रत्यक्षानन्तरमत्रेदमनुमानं निरूप्यत इति नयविवेके भवनाथः (न. वि. ११५)। शाबरम् अनुमानलक्षणमनेन प्राभाकरसिद्धान्तरीत्या सुबहु विचारितम्। दलसार्थक्यादिकमपि स्वपक्षे सम्यक् प्रादर्शि (न. वि. ११५–११९)।

एवं च समानाश्रयाश्रितयोः एकदेशिनोः ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् एकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिः अनुमानमिति फलितम्। इदमेव लक्षणं भङ्ग्यन्तरेणोपपादि तन्त्ररहस्ये[1]। इयान् विशेषः - अत्र शाबरभाष्यवाक्यस्यार्थं ज्ञातसम्बन्धनियमस्य एकदेशस्येति वर्णयामास प्रभाकरः भाट्टैः भिद्यमानः भङ्ग्यन्तरेणेति।

**२–१-४ समीक्षणम्**—अनुमानपदं त्रिष्वपि प्रस्थानेषु प्रमितिपरतया प्रमाणपरतया चोपयुक्तम्। नैयायिकैः भाट्टैश्च प्रमितिपरतया प्राभाकरवत् अनुमेति पदमपि तत्र तत्र प्रयुज्यते[2]।

---

1. एकाश्रयाश्रितयोः एकदेशयोः ज्ञातसम्बन्धनियमेन एकदेशेन संदिग्धस्य एकदेशान्तरस्य परिज्ञानमनुमानम्। [त. र. १०]

2. व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्।
अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि॥ [कारि. ६१]
अनुमाऽसंनिकृष्टेऽर्थे व्याप्यदर्शनजा मतिः। [नीति. १३७]

मीमांसकैः अनुमाननिरूपणावसरे नैयायिकोक्तप्रक्रियैव स्थूलतया स्वीकृता। किन्तु तत्र तत्र केषुचिदंशेषु तेषां सरणिः नैयायिकेभ्यः भिद्यते च। अनुमितिकरणमनुमानमिति नैयायिकोक्तं लक्षणं तेषामपि इष्टमेव। अनुमितिस्वरूपनिरूपणावसरे मीमांसकापेक्षया नैयायिकानां सरणिः विशदा वरीवर्ति।

यद्यपि अनुमितिः भाट्टप्राभाकरग्रन्थेषु तत्तन्मतानुरोधं सम्यक् व्युत्पादिता। तथापि अनुमितिकरणं किं व्याप्तिज्ञानम् अथवा परामर्शः इत्यत्र तु तेभ्यः ग्रन्थेभ्यः न किमपि स्पष्टतया अवगम्यते। प्रमाणसामान्यलक्षणविषये मानमेयोदयकारेण नारायणेन तर्कपक्ष एवास्माकमभिमत[1] इत्युक्ततया इदमुन्नीयते यत्-स्थूलतया मीमांसकानां प्रमाणादिविषये सुपरिष्कृते नैयायिकमार्ग एव नैर्भर्यमिति[2]। यत्र यत्र तेषां वैमत्यं तत् तैः तत्तदवसरे आविष्कृतमेवेति न परोक्षं विमर्शनिपुणानाम्।

**२–२ अनुमानविभागः— स्वार्थं परार्थं च**

**२–२-१ न्यायसिद्धान्तः** — सूत्रकारानुरोधं त्रिविधमनुमानम् पूर्ववत्-शेषवत्-सामान्यतोदृष्टभेदेन[3]।

क) पूर्ववत् - यत्र कारणेन कार्यमनुमीयते। मेघाडम्बरेण वृष्ट्यनुमानम्।

---

1. प्रमाकरणमेवात्र प्रमाणं तर्कपक्षवत्। [मा. मे.]
2. See Tripathi Chotalal, "The Idealistic Theory of Inference", ABORI, Vol. LI. pp. 175-88; Poona, 1970.
3. तत्पूर्वकं त्रिविधमनुमानम् पूर्ववच्छेषवत् सामान्यतोदृष्टं च। [न्या. द. १-१-५]

ख) शेषवत् - कार्येण कारणानुमानम् । नद्याम् अधिकोदक-पूर्णत्वं शीघ्रप्रवाहत्वं च दृष्ट्वा भूता वृष्टिरिति ।

ग) सामान्यतोदृष्टम् - अन्यत्र दृष्टस्य च अन्यत्र दर्शनं व्रज्यापूर्वकमिति । अस्त्यप्रत्यक्षापि आदित्यस्य व्रज्येति ।

अत्र भाष्यकारोक्तं सामान्यतोदृष्टानुमानोदाहरणं जयन्त-भट्टः नाङ्गीकरोति । इदमप्युदाहरणं शेषवदनुमानस्यैव युज्यत इति तदभिसन्धिः । तेनान्यथा सामान्यतोदृष्टानुमानं सोदाहरणं निरुक्तम्[1] । इमान्येवानुमानानि वात्स्यायनेन न्यायभाष्ये अन्यथापि व्याख्यातानि (न्या. भा. २९१) ।

क) पूर्ववत् - पूर्वं प्रत्यक्षतया सहानुभूतयोः वह्निधूमयोः अन्यतरस्य धूमस्य दर्शनेन अप्रत्यक्षस्य वह्नेरनुमानम् । यथा—धूमवत्वात् वह्निमानिति ।

ख) शेषवत् - इदं परिशेषानुमानम् । प्रसक्तानां प्रतिषेधे अन्यत्र अप्रसङ्गात्, शिष्यमाणे निश्चयः । यथा शब्दस्य अद्रव्यत्वे, अकर्मत्वे च गृहीते शिष्यमाणः गुण एवेति गुण-त्वनिश्चयः ।

ग) सामान्यतोदृष्टम् - सम्बन्धे च हेतुहेतुमतोरप्रत्यक्षे केन-चिदर्थेन हेतोः सामान्यात् यत्र साध्यं गम्यते तत्सामान्य-

1. सामान्यतोदृष्टं तु यदकार्यकारणभूतात् लिङ्गात् तादृशस्यैव लिङ्गिनः अनुमानम्, यथा - कपित्थादौ रूपेण रसानुमानम् । यत्पुनर्भाष्यकारेण भास्करस्य देशान्तरप्राप्त्या गत्यनुमानमुदाहृतं तदयुक्तम् । देशान्तरप्राप्तेः गतिकार्यत्वात् कार्येण कारणानुमानं शेषवदेव स्यात् । [न्या. म. १३०-१३१]

तोदृष्टम् । यथा-इच्छादिभिरात्मा । इच्छादयश्च गुणाः । गुणाश्च द्रव्ये वर्तन्ते । तस्मात् एतेषामाश्रयः आत्मेति ।

अन्यः कश्चिद्विभागः अनुमानस्य, अन्वयव्यतिरेकी, अन्वयी, व्यतिरेकी चेति । अयं च भारद्वाजोद्द्योतकरेण न्यायवार्तिके समादृतः (न्या. वा. २९४); नात्रायं प्रस्तुत इति लिङ्गविचारे एतद्विस्तरेण प्रतिपादयिष्यते ।

प्रशस्तपादाचार्यः अनुमानमिदं स्वनिश्चितार्थानुमान-परार्थानुमानभेदेन द्विधा विभक्तवान् । प्रथमं तु दृष्ट-सामान्यतो-दृष्टभेदेन पुनः द्विविधम्[1] (प्र. भा. १०६–११३) ।

न्यायमञ्जर्याम् उत्पन्नप्रतीति-उत्पाद्यप्रतीतिभेदेन अनुमानद्वैविध्यमुपदर्शितम् । तत्र ईश्वरानुमानमुत्पाद्यप्रतीति भवति[2] ।

अर्वाचीनैः नैयायिकैः अनुमानं स्वार्थपरार्थभेदेन द्विधा विभक्तम् (त. भा. ३९) । तथा हि - स्वयं भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति व्याप्तिं गृहीत्वा पर्वतसमीपे तद्गताग्नौ सन्दिहानः धूमं दृष्ट्वा व्याप्तिं संस्मृत्य, परामर्शमुपलभ्य "पर्वतो वह्निमानि"ति ज्ञानमनुमितिरूपं प्राप्नोति । इदमेव स्वार्थानुमानमुच्यते । तदनन्तरं परं प्रति बोधयितुं यत् पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम् । अत्र स्वार्थपरार्थपदे संगतार्थे प्रयुक्ते (त. स. ३७) ।

1. तत्तु द्विविधम्, दृष्टं सामान्यतोदृष्टं च । [प्र. भा. १०४]

2. सुशिक्षिततराः प्राहुः द्विविधमनुमानम् । किञ्चिदुत्पन्नप्रतीति किञ्चिदुत्पाद्यप्रतीति । ईश्वराद्यनुमानं तु उत्पाद्यप्रतीति । [न्या. म. १२४]

अर्वाचीनः नैयायिकः रघुनाथनामा पदार्थरत्नमालायाम् अनुमानं केवलान्वयि - केवलव्यतिरेकि-अन्वयव्यतिरेकिभेदेन त्रिविधम् इति प्रत्यपीपदत् (प. र. मा. १०)।

२-२-२ भाट्टसिद्धान्तः— यथाशाबरभाष्यम् अनुमानं प्रत्यक्षतोदृष्टसम्बन्धं, सामान्यतोदृष्टसम्बन्धं चेति द्विविधम्। धूमाकृतिदर्शनादग्न्याकृतिज्ञानं प्रथमस्य, देवदत्तस्य देशान्तरप्राप्तिं गतिपूर्विकामुपलभ्य सूर्यगत्यनुमानं द्वितीयस्य चोदाहरणम् (शा. भा. ३६-३७)।

तदनन्तरकालिकैः इदमेवानुमानं स्वार्थ-परार्थरूपेण विभक्तम्। असूचि च तथैव पार्थसारथिमिश्रेणापि स्वार्थपरार्थविभागः तादृशशब्दप्रयोगं विनैव शास्त्रदीपिकायाम्[1]। अभ्यधायि च मानमेयोदयेऽपि अयं विभाग. नारायणेनैवम्, यथा—"तच्चानुमानं स्वार्थपरार्थभेदेनापि द्विविधमाहुः। यत्तु स्वयमेव धूमादिकं दृष्ट्वा व्याप्त्यादिनिरूपणेनानुमीयते तत् स्वार्थम्।"

"यदा पुनः स एवार्थः परवाक्येन बोध्यते।
तदा परार्थमित्याहुः तयोरेतावतो भिदा॥" (मा. मे. ६३)

इति।

अत्राहुरिति द्विःप्रयोगदर्शनेन नैयायिकाभ्युपगते विभागेऽस्मिन् न मीमांसकानां नैर्भर्यमिति सूचितमिव। यतः अनेनैव नारायणेन मानमेयोदये प्रागेव अन्वयव्यतिरेक्यादिभेदेन अनुमानत्रैविध्यमुपदर्शितम् (मा. मे. ५३)। गागा-

1. नियतमुपलब्धवतः पर्वते तद्दर्शनादग्निज्ञानम्। यस्तु प्रतिपन्नमर्थं परमनुमानेन प्रतिपिपादयिषति तेन साधनं प्रयोक्तव्यम्। [शा. दी. ६१-६४]

भट्टेनापि भाट्टचिन्तामणौ स्वार्थपरार्थभेदेन अनुमानद्वैविध्यमुपन्यस्तम्[1] ।

माधवसरस्वती तु अन्वयव्यतिरेकि-केवलान्वयिभेदेन द्विविधमनुमानमित्यवादीत् सर्वदर्शनकौमुद्याम् ।[2]

२-२-३ प्राभाकरसिद्धान्तः—शाबरभाष्यानुरोधमनुमानं द्विविधम् प्रत्यक्षतोदृष्टसम्बन्धं, सामान्यतोदृष्टसम्बन्धं चेति[3] । धूमाकृतिविज्ञानादग्न्याकृतिविज्ञानं प्रथमस्य, गतिपूर्विकां देवदत्तस्य देशान्तरप्राप्तिमभिलक्ष्य सूर्येऽपि गतिस्मरणं द्वितीयस्य च क्रमेणोदाहरणं भवति ।

इदं च द्वैविध्यम् प्रमेयद्वैविध्यमुपलक्ष्येति प्रभाकरगुरुः । विशेषात् विशेषावगतिरेकत्र, अन्यत्र च सामान्यात् सामान्यावगतिरिति तस्याभिप्रायः[4] । एवं च अनुमानस्य प्रमेयं द्विधा भिद्यत इति सारः ।

---

1. तच्चानुमानं द्विविधम् । स्वार्थं परार्थम् च । परामर्शेन स्वस्यैव साध्यज्ञानजनकं स्वार्थम् । प्रतिज्ञाद्यवयवप्रयोगेण परस्य साध्यज्ञानजनकं परार्थम् । [भा. चि. ३०]

2. तच्चान्वयव्यतिरेकि केवलान्वयि चेति द्विविधम् । केवलव्यतिरेकि तु न प्रमाणमतिप्रसङ्गकत्वादित्याहुः । [स. कौ. ९७]

3. तत्तु द्विविधम् - प्रत्यक्षतोदृष्टसम्बन्धं-सामान्यतोदृष्टसम्बन्धं च । प्रत्यक्षतोदृष्टसम्बन्धं यथा - धूमाकृतिविज्ञानात् अग्न्याकृतिविज्ञानम् । सामान्यतोदृष्टसम्बन्धं यथा - देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य आदित्येऽपि गतिस्मरणम् । [बृहती ९०-१०१]

4. अथ प्रमेयद्वैविध्यमङ्गीकृत्य एतदुच्यते – एकत्र विशेषाद्विशेषोऽवगम्यते, अन्यत्र सामान्यात् सामान्यावगतिः । [बृहती ९७]

यथोक्तं प्रकरणपञ्चिकायाम् "प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम्" । (प्र. प. २१४) इति । दृष्टस्वलक्षणं यथा—वह्न्यादि । अदृष्टस्वलक्षणं यथा—कर्मादि ।

वस्तुतः अनुमानं द्विधा समुत्पद्यमानं सत् भिद्यते स्वार्थानुमानं परार्थानुमानं चेति । स्वयमनुमानोत्पादकसामग्र्या अवगम्यमानं प्रथमम् । इतरप्रयुक्तवाक्यबोधितं च द्वितीयमिति शालिकनाथः प्रकरणपञ्चिकायां प्रत्यपीपदत्[1] । शालिकनाथोक्तमेव अनूदितवान् रामानुजाचार्यः तन्त्ररहस्ये[2] ।

२-२-४ समीक्षणम्—न्यायसूत्रकारानुरोधं पूर्ववत्-शेषवत्-सामान्यतोदृष्टभेदेन त्रिविधमनुमानम् । वात्स्यायनेनाप्ययं विभागः समादृतः, अन्यथा सोदाहरणं व्याख्यातश्च । उद्द्योतकरः इदम्प्रथमतया अन्वयव्यतिरेकि, अन्वयि, व्यतिरेकि चेति त्रिधा अनुमानं विभक्तवान् लिङ्गविशेषानुरोधम्[3] । वाचस्पतिमिश्रः वीतावीतभेदेन अनुमानं द्विविधमिति, तत्र वीतं पूर्ववत्-सामान्यतोदृष्टभेदेन द्विविधम्, अवीतं पुनः शेषवत् अथवा परिशेषापरपर्यायमेवमेवेति न्यरूरुपत्[4] ।

---

1. परप्रत्यायनेच्छूनामनुमोदयसाधनम् ।
वचनं दूषणैस्सार्धमर्थादेतेन वर्णितम् ॥
द्वेधा अनुमानमुत्पद्यते - स्वयमनुसंहितया अनुमानोत्पादकसामग्र्या, परप्रयुक्तवाक्योद्बोधितया वा । [प्र. प. २२०]

2. तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम् । स्वयमनुसंहितया सामग्र्या अनुमानोत्पत्तिः स्वार्थम् । परप्रयुक्तवाक्योद्बोधितया तु परार्थम् । [त. र. ११]

3. Dhruva, A. B., "Trividham Anumānam", *Proceedings of the First Oriental Conference*, Poona, 1919.

4. तत्रावीतं शेषवत्, वीतं द्वेधा-पूर्ववत् सामान्यतोदृष्टं च[सा.त.कौ. ५] ।

स्वार्थ-परार्थभेदेन इदम्प्रथमतया अनुमानविभागमुपादर्शयत् प्रशस्तपादः स्वभाष्ये, यो वा अद्यावधि नव्यनैयायिकैरपि प्रामाणिकतया स्वीक्रियते । बौद्धैरपि एवमेवानुमानविभागः स्वग्रन्थेषु कृतः । समीचीनोऽयं विभागः । जगति स्वयंगृहीतस्यैवार्थस्य परं प्रति बोधयितुम् ईष्टे सकलोऽपि जनः । अतः प्रथमतः स्वार्थानुमानं, पश्चात् परार्थानुमानमिति सम्यक्तरोऽयं पन्थाः । स्वार्थानुमाने विषयः स्वयं गृह्यते, परार्थानुमाने स एव शब्दप्रयोगपुरस्सरं परं प्रति बोध्यते। अयमेव द्वयोर्भेदः । अत एव स्वार्थानुमानापेक्षया परार्थानुमाने बहवः हेत्वाभासाश्च स्युः ।

तदनन्तरकालिकाः नव्यनैयायिकाश्च केशवमिश्रान्नंभट्टादयः इमं विभागं समीचीनं मन्यमानाः स्वग्रन्थेषु अनुसरन्ति स्म । यद्यपि केवलान्वय्यादिविभागः कैश्चिदुपदर्शितः; तथापि स केवलं लिङ्गानामेव विभाग इत्युक्तावौचित्यं वर्तत इति बहुभिरयं परित्यक्तः ।

प्राचीनैः भाट्टैः प्राभाकरैश्च प्रत्यक्षतोदृष्टसम्बन्ध-सामान्यतोदृष्टसम्बन्धभेदेन द्विधा यद्यप्यनुमानं विभक्तम् । अथापि नव्याः मीमांसकाः समीचीने नैयायिकमत एव गौरवं सूचयन्तः स्वार्थ-परार्थविभाग एव बद्धादराः तदनुसारिणः शोभन्ते ।

त्रिष्वपि मतेषु नव्यैरनुसृतः स्वार्थपरार्थविभागः नैयायिकोपज्ञ एव समुचित इति वक्तुं शक्यते ।

## २–३ व्याप्तिलक्षणम्

२–३-१ न्यायसिद्धान्तः—व्याप्तिरियं भाष्यकारेण वात्स्यायनेन अनुमानसूत्रव्याख्यानावसरे लिङ्गलिङ्गिनोः सम्बन्धदर्शनम् इत्यत्र सम्बन्धपदेन असूचि (न्या. भा. २९१)। वार्तिककारेण भारद्वाजोद्द्योतकरेण "तत्पूर्वकमि"त्यस्य व्याख्यानावसरे प्रथमप्रत्यक्षतया भाष्यकारेण व्याख्यातमवलम्ब्यैव लिङ्गलिङ्गिसम्बन्धदर्शनम् आद्यं प्रत्यक्षम् इति स एव सम्बन्धः निरदेशि (न्या. वा. २९२)।

लिङ्गलिङ्गिनोः सम्बन्धमिमं प्रथमतः वार्तिककारः व्याप्तिपदेन व्याजहार (न्या. वा. ३०१)। ततः पश्चात् टीकाकारः वाचस्पतिमिश्रः तथा बहुवारं व्यवाहरत् (ता. टी. ३०३)। अयं च सम्बन्धः स्वाभाविकः नियतश्च यदि, तदा गमको भवति। अतः नियतः सम्बन्धः व्याप्त्यपरपर्यायः अनुमानाङ्गं भवितुमर्हति[1]।

न्यायमञ्जरीकारः जयन्तभट्टः "यद्दर्शनात् यत्र यस्य प्रतीतिर्भवति, अस्ति कश्चन सम्बन्धः तयोरर्थयोः। स च सम्बन्धः तादात्म्य-तदुत्पत्तिरूपः न हि सम्भवति। साहचर्यमेव स सम्बन्ध इति नैयायिकमतम्। अयमेव अविनाभाव इत्युच्यते"

---

1. यो वा स वास्तु सम्बन्धः केवलं यस्यासौ स्वाभाविकः, नियतः, स एव गमको गम्यश्चेतरः सम्बन्धीति युज्यते। तथा हि धूमादीनां वह्न्यादिसम्बन्धः स्वाभाविकः। न तु वह्न्यादीनां धूमादिभिः। [ता. टी. ३०९]

इत्यभिदधे[1]। इदम्प्रथमतया अनेन अन्तर्व्याप्तिः बहिर्व्याप्तिरिति नूतनः व्याप्तिविभागः कृतः ।

साध्यसाधनयोः व्याप्तिः कणादेन प्रसिद्धिरित्युक्ता (वै. द. ३-१-१४) । प्रशस्तपादस्तु अविनाभावपदेन व्याप्तिमुवाच । तद्ग्रहणप्रकारः विधिरित्युक्तवान् किरणावल्याम् उदयनाचार्यः[2] ।

व्यापकस्य व्याप्याधिकरणोपाध्यभावविशिष्टः सम्बन्धः व्याप्तिरिति शिवादित्यः सप्तपदार्थ्याम् (स. प. ७०) । सा चेयं व्याप्तिः सिद्धान्तेऽस्मिन् प्रमुखं स्थानमधिरोहति अनुमानप्रमाणमूलभूतत्वात् । बहूनि व्याप्तिलक्षणानि बहुभिः प्रणीतानि, येषु वा तदनन्तरकालिकैः दोषाः समुद्भाविताः । विस्तरभिया न तानि सर्वाणि अत्र समुपस्थाप्यन्ते । सिद्धान्तव्याप्तिलक्षणं मणिकारोक्तं त्विदम् – "प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत्र भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः" (गादा. ३०७) इति । तेनैव पुनः विशेषव्याप्तिलक्षणानि त्रीण्येवं प्रतिपादितानि पश्चात् । यथा–

क) यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावप्रतियोगिना सामानाधिकरण्यम्,

---

1. अतो यद्दर्शनाद्यत्र प्रतीतिरुपजायते ।
तयोरस्त्यर्थयोः कश्चित्सम्बन्ध इति मन्महे ॥
तत्रात्मतातदुत्पत्ती न श्रद्दधति तद्विदः ।
साहचर्यं तु सम्बन्ध इति नो हृदयङ्गमम् ॥
तस्मिन् सत्येव भवने न विना भवनं ततः ।
अयमेवाविनाभावो नियमः सहचारिता ॥ [न्या. म. १२१]

2. विधिस्तु अविनाभावग्रहणप्रकारः । [किर. २९५]

ख) यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा,

ग) स्वसमानाधिकरणान्योन्याभावाप्रतियोगि यद्वत्कत्वं वा (गादा. ५५९-६७) इति ।

इमानि च लक्षणानि तदनन्तरकालिकैः रघुनाथशिरोमणि-मथुरानाथ-गदाधर-जगदीशादिभिः बहुधा व्याख्यातानि । बहूनि व्याख्यानानीति प्रकृते अप्रस्तुतया विस्तरभिया च नात्र तानि प्रस्तुतानि ।

मुक्तावल्यां विश्वनाथः हेत्वधिकरणवृत्तिः योऽभावः तद-प्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरित्य-ब्रवीत्[1] । अन्नंभट्टस्तु यत्र यत्र धूमस्तत्राग्निरिति साहचर्यनियमः व्याप्तिरित्युक्त्वा (त. स. ३४), साहचर्यं सामानाधिकरण्यं तस्य नियमः, अर्थात् हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगि-साध्यसामानाधिकरण्यं व्याप्तिरिति विवृणोति स्म । धूमव्या-पकवह्निसामानाधिकरण्यं व्याप्तिः इति न्यायबोधिन्यां गोवर्धनः (न्या. बो. ३६) ।

सा चेयं व्याप्तिः भूयोदर्शनग्राह्या अन्वयव्यतिरेकभेदेन सिद्धान्तेऽस्मिन् द्विधा भिद्यते । यथा - भावयोः साहचर्यम् अन्व-यव्याप्तिः, अभावयोः साहचर्यं व्यतिरेकव्याप्तिः । अन्वयः भावः, व्यतिरेकस्त्वभावः । इयान् विशेषः यत् - यः व्याप्य-

1. अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ।। [कारि. ६९]

व्यापकभाव: भावयो: दृष्टः अन्वयव्याप्तौ, स व्यतिरेकव्याप्तौ अभावयो: विपर्यस्तो भवतीति[1] ।

२-३-२ भाट्टसिद्धान्तः— कौमारिलैरपि व्याप्तिस्वरूपमेवं प्रत्यपादि—नियतसम्बन्धः व्याप्तिरिति । हेतुसाध्ययो: नियत: सम्बन्धः संयोग:, समवाय:, एकार्थसमवाय:, कार्यकारणभाव:, तादात्म्यलक्षणो वा व्याप्तिः (शा. दी. ६०) । नैते सम्बन्धाः प्रयोजकाः गम्यगमकभावे । कृत्तिकारोहिण्यादीनां तदभावेऽपि लिङ्गलिङ्गिभावस्योपपत्तेः । एवमेव कार्यस्यापि कारणगमकता न कार्यत्वनिबन्धना किन्तु नियतत्वप्रयुक्ता[2] ।

अनुमानव्यवहारे व्याप्तिलक्षण: अयं सम्बन्धः अङ्गमिति एतेषां मतम् । व्याप्यमधिकदेशकालावृत्ति, व्यापकं च अधिकदेशवृत्ति[3] । एवं चैतदुक्तं भवति यत् · दृश्यमानेषु देशकालादिषु यः हेतोः साध्येन सह सहभाव: स एव नियम: । तेन नियमेन यस्य येन यथादृष्टेषु देशकालादिषु येन केनापि सम्बन्धेन पूर्वोक्तेन साहित्यं नियततया उपलभ्यते सा व्याप्तिरिति । सा च व्याप्तिः भूयोदर्शनेन व्यभिचारादर्शनेन सम्यगव-

1. भावसामान्ययोर्यद्वत् तथैव तदभावयोः ।
भावयोः साहचर्यं यदन्वयं तत्प्रचक्षते ॥
व्यतिरेकं तु मन्यन्ते साहित्यं तदभावयोः ।
इयानेव विशेषस्तु भावयोर्यादृशी ययोः ॥
व्याप्यव्यापकता सैव व्यत्यस्ता तदभावयोः । [न्या. म. १२३]
2. सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना । [श्लो. वा. ३४८]
3. व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ।
यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ॥
स व्याप्यो व्यापकस्तस्य समो वाभ्यधिकोऽपि वा । [तत्रैव ३४८]

गम्यते[1] । व्याप्तिः, अविनाभावः, नियमः, प्रतिबन्धः, अव्यभिचार इति अनर्थान्तरम् । तथैव व्याप्यं, नियम्यं, गमकं, लिङ्गं, साधनमिति च पर्यायाः[2] ।

मानमेयोदये तु स्वाभाविकसम्बन्धः व्याप्तिरित्युक्तम् । अत्र उपाधिराहित्यं स्वाभाविकत्वम् । अर्थात् निरुपाधिकसम्बन्धरूपा व्याप्तिरिति फलितम्[3] । सा च व्याप्तिः अन्वयव्याप्तिः व्यतिरेकव्याप्तिरिति द्विधा भिद्यते । सति साधने साध्यसद्भावः अन्वयव्याप्तिः । सति साध्याभावे हेतोरप्यभावः व्यतिरेकव्याप्तिः[4] ।

गागाभट्टस्तु भाट्टचिन्तामणौ अत्र ''गौडमैथिलसर्वस्वम्'' इत्युपक्रम्य नव्यन्यायसरण्या बहूनि व्याप्तिलक्षणान्युपन्यस्य, " हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्वावच्छिन्नवृत्तित्वं व्याप्तिः" इति जरन्मीमांसकमतमुपन्यस्य, "यादृशप्रतियोगितावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रति-

---

1. भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः ।
ज्ञायते भेदहानेन क्वचिच्चापि विशेषयोः ।। [तत्रैव ३५०]

2. व्याप्तिर्नियमः प्रतिबन्धोऽव्यभिचारस्तथाविनाभावः ।
व्याप्यं पुनर्नियम्यं गमकं लिङ्गं च साधनं हेतुः ।।
इत्युभयोः पर्याया इति तस्य तु दर्शनं त्रिविधम् । [मा. मे. ४८]

3. स्वाभाविकः सम्बन्धो व्याप्तिः । स्वाभाविकत्वम् उपाधिराहित्यम् । उपाधिरिति च साध्यस्य साक्षात्प्रयोजकं हेत्वन्तरमुच्यते । [तत्रैव. २६]

4. द्वेधा हि व्याप्तिः अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्चेति । तत्र साधनस्य सद्भावे साध्यस्यापि सद्भावः अन्वयव्याप्तिः । साध्यस्याभावे साधनस्याभावः व्यतिरेकव्याप्तिः । [मा. मे. ५३–५५]

योगितानवच्छेदकत्वस्य विवक्षितत्वात्" (भा. चि. २६) इति तामलिलक्षत् ।

२-३-३ प्राभाकरसिद्धान्तः— अनुमानलक्षणघटकज्ञातसम्बन्धस्येति पदेनैव व्याप्तिरभिहिता । प्रभाकरः कथयति बृहत्यां यथा "व्याप्यं हि दृष्टं हि व्यापकं गमयति" (बृहती ९३) इति । तेनेदमवगम्यते यद् दृष्टस्य व्याप्यस्य व्यापकाव-गमसामर्थ्यं यद् वर्तते सैव व्याप्तिरिति । अव्यभिचरितत्व-मित्यर्थः । शालिकनाथः ऋजुविमलपञ्चिकायां प्रतिपादयति अमुमेवाभिप्रायं मनसिकृत्यैवम्, "अव्यभिचारो हि व्याप्तिः । अव्यभिचारश्च सकलदेशकालव्यापित्वम्" (बृहती ९५) इति । स चाव्यभिचारः कथं ज्ञायत इत्युक्तौ भूयोदर्शनेनेति तत्रैव तेन प्रत्यपादि[1] ।

एवं च हेतुहेतुमतोः नियतसाहचर्यं व्याप्तिरित्युक्तं भवति । प्रत्यपादि चैवमेव प्रकरणपञ्चिकायां शालिकनाथेन 'ज्ञातसम्बन्धनियम'पदव्याख्याने सोदाहरणम्[2] । एतावता निरु-पाधिकसम्बन्धः व्याप्तिरित्युक्तं भवति । अत्रोपाधिशून्यता अन्वयव्यतिरेकाभ्यां गृह्यते । असकृद्दर्शननिबन्धनं चैतत् (प्र. प. २०६) ।

---

1. अव्यभिचारस्त्वसकृद्दर्शनगम्यः । [बृहती प. ९६]

2. तस्मात् कार्यकारणभावादय एव सम्बन्धा यस्य येन नियता अव्यभिचारिणः, स हेतुरिति दर्शयितुं 'ज्ञातसम्बन्धनियमस्य' इत्युक्तम् । धूमस्य कार्यस्य कारणसम्बन्धो नियतः, अग्नेस्त्वनियतः । [प्र. प. २०२]

एवं स्थिते नन्दीश्वरः प्रभाकरविजये 'सकृद्दर्शनगम्या व्याप्ति'रिति कथयन्, भूयोदर्शनानावश्यकतां बहुशः प्रतिपादयति[1] ।

वह्निधूमयोः सम्बन्धनियमे प्रथमं प्रत्यक्षमेव प्रमाणम् । निरुपाधिकत्वनिश्चयश्च भूयोदर्शनेन । यत्नतः अन्विष्यमाणस्यापि उपाधेस्तत्रादर्शनात् । अतः भूयोदर्शनम् अर्थवदित्येव प्राभाकराणां राद्धान्त इति ऋजुविमलपञ्चिकातः, प्रकरणपञ्चिकातश्च अवगम्यते[2] । उपरितनः नन्दिकेश्वरसिद्धान्तः तदुपज्ञ एवेति प्राचीनप्राभाकरग्रन्थपरिशीलनेन प्रतिभाति ।

प्राभाकरमतानुरोधं नियमापरपर्यायायाः व्याप्तेः सम्बन्धत्वं नास्ति[3] । तथैव तस्याः तादृशसम्बन्धरूपतया अनुमानकारणता च नास्ति । नहि नाम स्वस्वामिभावादिव्यतिरिक्तः व्याप्तिर्नामापरः सम्बन्धः कश्चन वरीवर्ति । अतः कार्यकारणभावादिः सम्बन्ध एव कस्यचिद् व्यापकः, कस्यचित्तु न व्यापक इति लोकानुभवः (बृहती प. ९५) ।

1. अतो न भूयोदर्शनेन तत्त्वग्रहण उपयोगः । [प्र. वि. ९९]
2. ज्ञायते - नायं तदुपाधिक इति एतच्चासकृद्दर्शनप्रभावादित्युक्तम् । [बृहती प. ९३] प्रयत्नेनान्विष्यमाणे औपाधिकत्वानवगमात् । तच्चैतद् भूयोदर्शनायत्तमिति मन्वाना आचार्या भूयोदर्शनमादृतवन्तः । [प्र. प. २०५]
3. अनुगमन-नियमन—व्याप्तिरूपास्तु सम्बन्धा एवायुक्ताः । क्रियागर्भत्वात् सम्बन्धस्य । अग्न्यादीनां धूमादीन् प्रति अनुगमननियमव्यापनक्रियासम्भवात् [प्र. प. २०२] ।

यस्य वा केनचन सम्बन्धेन व्याप्यता तस्यैव तं प्रति गमकता अङ्गीकार्या । यथा - धूमो हि वह्निकार्यतया वह्नि-संयोगितया व्याप्त इति तं प्रति तस्य गमकत्वम्[1] । न तथा वह्नेः सर्वदा धूमसम्बन्धित्वं वर्तत इति सम्बन्धाव्याप्ततया न तस्य गमकत्वम् (बृहती ९५) ।

२-३-४ **समीक्षणम्**—व्याप्तिरितीदं पदं ऐदम्प्राथम्येन न्याय-ग्रन्थेषु न्यायवार्तिककारेण भारद्वाजोद्द्योतकरेण प्रायोजि । तत्प्राक्तनाभ्यां वात्स्यायन-गौतमाभ्याम् इदं पदं न प्रयुक्तम् । अनेकबौद्धकथाप्रसङ्गव्यापृतेन, तत्सिद्धान्तखण्डनपण्डितेन च वार्तिककारेण तेभ्य एवेदं पदं परिगृहीतमस्मिन् अर्थे प्रयुक्त-मिति तर्क्यते । श्लोकवार्तिके कुमारिलभट्टेन, बृहत्यां प्रभा-करेण च व्याप्तिरिति पदं प्रयुक्तम् ।

वि-आप्तिः व्याप्तिः । अयं कश्चन विलक्षणस्सम्बन्धः । अयं च व्याप्यव्यापकयोर्मध्ये वर्तमान उच्यते । यथा - "पर्वतो वह्निमान् धूमवत्त्वात्" इति सर्वप्रसिद्धे वाक्ये धूमवह्न्योः व्याप्यव्यापकभावः । सर्वत्र साध्यं व्यापकं, साधनं च व्याप्यमिति नियमः । अयमेव सम्बन्धः लिङ्गलिङ्गिसम्बन्धः, गम्य-गमक-भावः, साध्य-साधनभावः, गमक-गम्यभावः, साधन—साध्य-भावः, अविनाभावनियमः इत्यादिपदैरुच्यते[2] ।

---

1. यः कश्चित् येन यस्येह सम्बन्धो निरुपाधिकः ।
प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः ॥ [प्र. प. २०६]

2. [illegible]गमाचार्यः, वि, "कार्यकारणभावः," S.V.U.O.J. Vol. IV, 1961.

कणादेन प्रसिद्धिरिति, साङ्ख्यैर्योगैश्च प्रतिबन्ध इति, जयन्तभट्टेन साध्याविनाभावितेति, बहुलतया नव्यनैयायिकैः व्याप्तिरिति,जैनैः अन्यथानुपपत्तिः अथवा अन्यथानुपपन्नत्वमिति, प्रशस्तपादेन च अविनाभाव इति चाथमेव तत्तद्ग्रन्थेषु निर्दिष्टः (I. T. K. 146)। सर्वेष्वप्येषु व्याप्तिरिति पदमेव नव्यैः दार्शनिकैः अतिमात्रमादृतम् ।

उपरितनसम्बन्धबोधकतया अस्य पदस्य प्रयोगे प्रायः नैयायिकमतमेव भाट्टैः प्राभाकरैः अनुसृतमिव प्रतिभाति । भाट्टप्रस्थानमूलपुरुषेण कुमारिलभट्टेन, तदनुयायिभिः, प्राभाकरप्रस्थानप्रारम्भकेण प्रभाकरेण, तन्मार्गावलम्बिभिश्च व्याप्तिपदस्य प्रयुक्तत्वात् । व्याप्तिस्वरूपनिरूपणे, तद्विभागे च नैयायिकमतं मात्रयापि नातिक्रामन्ति मीमांसका इति तत्तद्ग्रन्थदर्शनेनास्माभिरवगम्यते ।

व्याप्तिरियं भूयोदर्शनजन्येति यन्नैयायिकैरुपन्यस्तं तत्रापि नास्ति मीमांसकानामसम्मतिः । किन्तु प्राभाकरविजयकर्त्रा नन्दीश्वरेण सकृद्दर्शनगम्यैव व्याप्तिरिति प्रत्यपादि । तत्तु प्राचीनैः प्राभाकरैः कुत्रापि नोक्तम् । परन्तु प्रकरणपञ्चिकायां शालिकनाथपङ्क्तिषु (प्र. प. २०५) भूयोदर्शने अनास्था मनाक् सूचितेव प्रतिभाति ।

सम्बन्धस्य क्रियागर्भत्वमभ्युपगच्छद्भिः प्राभाकरैः व्याप्तेः सम्बन्धत्वं नोररीकृतम् । नैयायिकैः भाट्टैश्च तस्याः सम्बन्धत्वं स्पष्टमुक्तम् । वस्तुतः प्राभाकरैरपि साधारणसम्बन्धरूपत्वमेव

तस्याः प्रतिषिद्धम्, किन्तु विलक्षणसम्बन्धरूपता तेषामपि इष्टैवेति प्रतिभाति (प्र. प. २०६)। सम्बन्धनियमे प्रथमं प्रत्यक्षमेव प्रमाणमिति यत्प्राभाकरैरङ्गीकृतं तन्नैयायिकैर्नाभ्युपगम्यते। अनुभवाननुरोधित्वात् (I. T. K. 159)।

**२-४ व्याप्तिग्रहोपायः**

२-४-१ **न्यायसिद्धान्तः**— व्याप्तिज्ञानस्यैव व्याप्तिग्रह इति व्यपदेशः न्यायशास्त्रे। व्याप्तिज्ञानोपायाभावात् अनुमानमेव न सिध्यतीति कथयन्ति चार्वाकाः। अतः अनुमानप्रामाण्यौपयिकव्याप्तिज्ञाननिरूपणार्थं तदुपायः दार्शनिकैः महता आग्रहेण प्रदर्श्यते।

न्यायमञ्जरीकारेण जयन्तभट्टेन व्याप्तिग्रहणोपायपदं प्रथमतः प्रयुक्तम्[1]। तेन व्यभिचारज्ञानविरहसहकृतसहचारदर्शनस्यैव व्याप्तिज्ञानोपायत्वं प्रादर्शि[2]। नैयायिकमते व्यभिचारनिश्चयाभावसहकृतेन सहचारदर्शनेन व्याप्तिज्ञानं भवतीति तत्त्वचिन्तामण्यां गङ्गेशोपाध्यायेन प्रत्यपादि[3]। अर्थात् व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिं ग्राहयतीति सिध्यति।

---

1. तस्मान्नियमवत् तद्ग्रहणोपायोऽप्यस्तीति सिद्धम्। [न्या. म. १२२-२३]
2. Gupta, B., "Pramāṇasāmagrīvāda of Jayanta Bhaṭṭa", *AIOC XXV*, *SP*: pp. 287-88 [1966].
3. व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकम्। ज्ञानं निश्चयः शंका च। सा च क्वचिदुपाधिसन्देहात्, क्वचित् विशेषादर्शनसहितसाधारणधर्मदर्शनात्; तद्विरहश्च क्वचित् विपक्षबाधकतर्कात्; क्वचित् स्वतःसिद्ध एव [गादा. ६६२]।

मुक्तावलीकारः विश्वनाथोऽपि व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे हेतुरिति अभिदधे[1]। व्यभिचाराग्रहस्य प्रतिबन्धकाभावविधया कारणत्वम्। अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि कारणता। भूयोदर्शनं तु न व्याप्तिग्रहे हेतुः। व्यभिचारविरहे सकृद्दर्शनेनापि व्याप्तिज्ञानोदयात्। भूयोदर्शनं तु व्यभिचारशङ्काविधूननद्वारा सहकारि भवति (मुक्ता. ७८-८०)। अत एवं प्रत्यपादि केशवमिश्रेण तर्कभाषायाम्, यथा—"तथा च सत्युपाध्यभावजनितसंस्कारसहकृतेन भूयोदर्शन-जनित-संस्कारसहकृतेन साहचर्यग्राहिणा प्रत्यक्षेणैव धूमाग्न्योः व्याप्तिरवधार्यते" (त. भा. ३५) इति।

२-४-२ भाट्टसिद्धान्तः— व्याप्तिग्रहः व्याप्तिज्ञानमित्यर्थः। तच्च भूयोदर्शनगम्यमिति भाट्टमतम्। यदि भूयोदर्शनमात्रं तत्र कारणमित्युच्यते तर्हि मैत्रीतनयत्वश्यामत्वयोरपि सत्त्वाद् व्यभिचारः। अतः न केवलं भूयोदर्शनं किन्तु प्रमाणोत्पत्त्यनुकूलतर्कोऽपि तत्र कारणमिति निश्चितम् (मा. मे. ३४)। एवं च तर्कसहकृतं भूयोदर्शनं व्याप्तिज्ञानं जनयति इति तस्य व्याप्तिज्ञानजनकत्वं सूपपादम्[2]।

व्याप्तिग्रहोपायश्च व्यभिचाराग्रहः, सहचारग्रहश्च। अर्थाद् व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं व्याप्तिग्राहकमिति

---

1. व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः॥ [कारि. १३७]।

2. तदेवं तर्कसहायेन भूयोदर्शनेनैव निरुपाधिकसम्बन्धोऽवधार्यते।
भूयोदर्शनतः शक्या दृश्या दृश्योपाधिनिराक्रिया।
अदृश्योपाधिशङ्का तु तर्केरेव निरस्यते॥ [मा. मे. ४७]

सिद्धम् (भा. चि. २५)। न केवलं भूयोदर्शनं हेतुर्भवितुमर्हति, व्यभिचारस्मरणाभावे सकृद्दर्शनेनापि व्याप्तिज्ञानोदयात्। व्यभिचारशङ्कानिवर्तकतया भूयोदर्शनस्य क्वचिदुपयोगः। क्वचिच्च तर्क एव व्यभिचारशङ्कानिवर्तकः।

अथ संनिकृष्टयोः महानसीयवह्निधूमयोः सहचार-ग्रहेऽपि अन्येषां वह्निधूमानां संनिकर्षाभावात् सहचारप्रत्यक्षा-भाव इति निखिलेषु धूमेषु कथं नाम व्याप्तिर्गृह्यते इति चेत् - सत्यम्। सामान्यलक्षणाप्रत्यासत्त्या अलौकिकसंनिकर्षवशात् निखिलवह्निधूमसहचारप्रत्यक्षस्य सम्भवात् निखिलधूमेषु व्याप्तिग्रहः संभवतीति न काप्यनुपपत्तिः (भा. चि. २७)। अतः भूयोदर्शनसहकृततर्कज्ञानं व्यभिचारज्ञानविरहसहकृतसह-चारज्ञानद्वारा व्याप्तिं ग्राहयतीति संक्षेपः।

२-४-३ प्राभाकरसिद्धान्तः—व्याप्तिग्रहः व्याप्तिज्ञानम्। अस्य व्याप्तिज्ञानस्योत्पत्तौ विवदन्ते वादिनः। प्राभाकरास्तु अव्यभि-चारः व्याप्तिरिति वदन्ति। स चाव्यभिचारः कथं गृह्यत इत्यत्र प्रभाकरः कथयति बृहत्याम् – 'अव्यभिचारः असकृ-द्दर्शनगम्यः' इति। अर्थात् किमायातम्? भूयोदर्शनेनैव व्याप्तिः गृह्यत इति।

किन्तु प्राभाकरैकदेशी नन्दीश्वरः प्रभाकरविजये सकृ-द्दर्शनगम्यत्वमेव व्याप्तेः लक्षणं प्रत्यपीपदत् (प्र. वि. ९८)।

न तावता स तूष्णीं तिष्ठति किन्तु व्याप्तिग्रहे भूयोदर्शनमनावश्यकमिति च निरूपयति[1] ।

नन्दीश्वरादन्यैश्च भूयोदर्शनस्य अङ्गीकृततया ऋते तस्मात् अन्येषां प्राभाकराणां, भूयोदर्शनसहकृतं तर्कज्ञानं व्यभिचारज्ञानविरहसहकृतसहचारज्ञानद्वारा व्याप्तिग्रहणे उपाय इत्यत्र नास्ति विप्रतिपत्तिरित्युत्पश्यामः ।

२–४-४ **समीक्षणम्**—व्याप्तेः ग्रहः व्याप्तिज्ञानम् । तस्मिन्नुपायः व्याप्तिग्रहोपायः । अथवा व्याप्तेः ग्रहणं व्याप्तिग्रहणम् । तस्मिन् उपायः व्याप्तिग्रहणोपायः । यथाकथञ्चित् ग्रहो वा ग्रहणं वाऽस्तु । उभयमपि ज्ञानपरमेव । नव्यन्यायग्रन्थे व्याप्तिग्रह, व्याप्तिग्रहोपायः इति प्रयोगाः ग्रहपदघटिता एव समुपलभ्यन्ते । जयन्तभट्टस्तु न्यायमञ्जर्यां व्याप्तिग्रहणोपायमिति प्रायुङ्क्त ।

व्याप्तिग्रहोपायनिरूपणावसरे नैयायिकमतमेव भाट्टैः प्राभाकरैश्च स्वीकृतम् । नन्दीश्वर एक एव भूयोदर्शनमनावश्यकमिति प्रत्यपीपदत् । नैयायिकैरपि भूयोदर्शनस्य व्याप्तिनिश्चये न कारणत्वमभ्युपगतम् । किन्तु व्यभिचारशङ्काविधूननार्थमेव तदङ्गीकृतम् । व्यभिचारास्मृतौ तैरपि भूयोदर्शना-

1. न तत्रापि भूयोदर्शनस्य ग्राहकत्वम् । किन्तु विवेचकाकारग्रहणे प्रवृत्तस्य चातिसौक्ष्म्यात् मनःसमवधानाद्यभावाच्च न तत्त्वं ग्रहीतुं प्रभवति, केवलं रत्नमात्रमेव गृह्णाति । एवमनेकदर्शने जाते मनःसमवधानादिसामग्रीसंभवात् अथविकवा तत्त्वं गृह्णाति। अतः न भूयोदर्शनस्य तत्त्वग्रहण उपयोगः । [प्र. वि. ९९]

पेक्षां विनैव सकृद्दर्शनेनैव व्याप्तिग्रहः क्वचिद् भवतीति उक्तम् (मुक्ता. ७६७)। अत्र भूयोदर्शनं नाम भूयस्सु स्थानेषु साध्य-साधनसहचारदर्शनम्, भूयसां साध्यानां साधनानां सहचारदर्शनं, साध्यसाधनसहचारविषयकबहुत्वदर्शनं चेत्यभिप्रायः। कदाचित् भूयोदर्शनादपि शङ्का नापगच्छति। तत्र बाधकतर्कः विपक्षे प्रदर्शनीयः। यत्र शङ्कैव नास्ति तत्र न तर्कस्यापि अपेक्षेत्यव-गन्तव्यम् (मुक्ता. ७७१)। एवं तर्हि भूयोदर्शनविषये कुत आग्रह इति चेत् - उच्यते तस्य व्याप्तिनिश्चयं प्रति अकारणत्वे क्वचित् तत्प्रयोजकमिति तस्मिन् आदर इति दिनकरभट्टः (दिन. ७६८)। अतः भूयोदर्शनमप्यावश्यकमेव। एवं च मण्याद्युक्तरीत्या व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनमेव व्याप्तिग्राहकमिति सिद्धान्तः। अत्र सुविशदमनवद्यं नैयायिक-मतमिति तदेव भाट्टैः प्राभाकरैश्च स्वीकृतमिति तत्तद्ग्रन्थ-सादृश्यपरिशीलनेन निश्चीयते। अथ तत्त्वप्रदीपिकायां 'प्रमाण-स्याभावाद् दुरधिगमः व्याप्तिग्रह" इति यदुक्तम् (त. प्र. ३८८) तत्तु लोकवृत्तापलापनिबन्धनमिति नोपादेयम्। भूयोदर्शनसह-कृततर्कज्ञानेनैव तदुपपत्तेः। सामान्यलक्षणाप्रत्यासत्त्या च निखिलवह्निधूमसहचारप्रत्यक्षस्य सुलभतया प्रत्यक्षेणैव व्याप्ति-ग्रहः सुलभ इति विज्ञेयम्।

सि. डि. बिजिल्वान्महोदयेन भारतीयदर्शनेषु व्याप्ति-ग्रहोपायविषये न प्रभूत आदरः प्रदर्शित इति यदुक्तम्[1] तत्

1. *I. T. K.* 152: "This in fact, is the problem of induction and does not find an exclusive treatment in Indian logic".

पाक्षिकं सत्यम् । किन्तु अन्यदर्शनापेक्षया न्यायदर्शने, तत्रापि नव्यनैयायिकैः तस्मिन् विषये बद्धादरैः एव स सम्यक् विचारितः निशितमतिभिः महता आग्रहेणेति अस्माभिरवश्यमङ्गीकार्यम् ॥

## २-५ तर्कनिरूपणम्

२-५-१ न्यायसिद्धान्तः— यस्यार्थस्य तत्त्वं न विज्ञातं, तत्र तत्त्वावगतये क्रियमाण ऊहः तर्क इति सूत्रकाराभिप्रायेण तर्कस्वरूपम्[1] । अयं भावः—अविज्ञाततत्त्वेऽर्थे जायते च जिज्ञासा "ज्ञातव्योऽयमर्थ" इति । तस्यार्थस्य विरुद्धौ धर्मौ विविच्य विमृशति, "इदमित्थमन्यथा वे"ति । तयोः विमृश्यमानयोर्धर्मयोः कारणोपपत्त्या एकस्मिन् अवधारणा जायते, "एवमेवेदमि"ति । ततः इदमित्थमेव नान्यथेति ऊहः क्रियते,स तर्क इति ।

यथा - अयमात्मा किं नित्यः उत अनित्य इति, पूर्वजन्मार्जितकर्मानुभवान्यथानुपपत्त्या अयमनित्य इति वक्तुं न शक्यते । लोके चोत्पन्नः अनित्यः पदार्थः अवश्यं नश्यति । तथा अस्याप्यात्मनः अनित्यत्वं यद्यङ्गीक्रियते कर्मानुबन्धः नोपपद्यते । अतः अयं नानित्यः किन्तु नित्य एवेति ऊह्यते तर्केण । अस्य च ज्ञानस्य अनवधारणात्मकत्वात् तर्कोऽयं तत्त्वज्ञानार्थः न तु तत्त्वज्ञानमेवेति (न्या. भा. ५८१) । अविज्ञाततत्त्वार्थप्रवृत्तिरूप-

---

1. अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्त्वज्ञानार्थं ऊहस्तर्कः । [न्या. द. १-१-४०]

साम्ये सत्यपि तर्कोऽयं संशयाद् इच्छायाश्च भिद्यते, प्रमाणोपपत्तिबलात्[1]।

शिवादित्यः सप्तपदार्थ्यां तर्कस्वरूपम् अनिष्टव्यापकप्रसञ्जनरूपं वर्णयामास[2]। तर्कशब्दस्य अनुमानपर्यायतयापि प्रयोगाः तत्र तत्र ग्रन्थेषु समुपलभ्यन्ते[3]। अथापि अत्र पुनः ऊहरूपतैव तर्कस्याभ्युपेयात्। अस्य च तत्त्वज्ञानसाधनता च प्रमाणानुग्राहकत्वेन; न तु साक्षात्[4]। (न्या. म. ५८८)

मीमांसकास्तु न्याये, न्यायफले च तर्कपदं प्रयुञ्जते। नैयायिकैः पुनः प्रमाणव्यतिरिक्त ऊह उपपाद्यते[5]। सकलशास्त्रार्थसंग्रहरूपे मानमेयरहस्यश्लोकवार्तिके तर्क एवमभिलक्षितः 'व्याप्याङ्गीकारेण अनिष्टस्य व्यापकस्य प्रसक्तिः तर्कः।

---

1. समानजातीयात् संशयादेः असमानजातीयाच्चेच्छादेः व्यवच्छिद्यते। यद्यपि संशयजिज्ञासे अपि अविज्ञाततत्त्वेऽर्थे प्रवर्तेते तथापि न कारणोपपत्तित इति तयोर्व्यवच्छेद इति। [ता. टी. ५८५–५८६]

2. अनिष्टव्यापकप्रसञ्जनं तर्कः। [स. प. ७५]

3. आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ [न्या. म. ५८८]
तर्कशब्दं पुनः केचिदनुमाने प्रयुञ्जते।
अनुमानविशेषोऽयम् इति केचित् प्रचक्षते॥ [मा. र. वा. ३७५]

4. श्रीहरिरामशुक्लः, "तर्कस्वरूपविमर्शः", सरस्वतीसुषमा, १७ (३-४) पृ. ३८७-९२।

5. तदेव मीमांसककल्प्यमानो नोहः प्रमाणव्यतिरेकमेति।
प्रमाणसन्देहदशान्तरालवर्ती तु तर्कः कथितोऽत्र शास्त्रे॥ [न्या. म. ५९०]

स च पञ्चधा षोढा वा भवति। तस्य च व्याप्तिः, तर्काप्रतिहतिः, विपर्यये अवसानम्, अनिष्टम्, अननुकूलत्वम् इति पञ्चाङ्गानि भवन्ति[1]' इति।

मणिकारस्तु लक्षणमिदं परिष्कृत्य तर्कस्य स्वरूपमित्थं प्रत्यपीपदत्, यथा - धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात् नोत्पन्नः स्यात्। (गादा. ६७५) इति। व्याप्यस्य पदार्थस्यारोपेण व्यापकस्य आरोपः तर्क इत्यस्माद् ज्ञायते। अयं च तर्कः व्यभिचारशङ्कानिवर्तकतया व्याप्तिग्रहोपयोगी। शङ्कावधिः अयमिति उदयनाचार्यः[2], शङ्कानिवर्तकत्वात्।

सत्तर्कस्यास्य व्याप्तिप्रमाजनकता, तर्काभासात् व्याप्त्यप्रमा च जायेते इति मणिकारः[3]। न हि तावत् धूमस्याग्निसाहचर्ये उपाधिः कश्चिदस्ति। यद्यभविष्यत् तर्हि अद्रक्ष्यत्। अदर्शनात् नास्तीति तर्कसहायेन अनुपलम्भसहितेन प्रत्यक्षेणैव उपाध्यभावः अवगम्यते। एवं चोपाध्यभावग्रहणजनितसंस्कारसहितेन साहचर्यग्राहिणा प्रत्यक्षेणैव धूमवह्न्योः व्याप्तिः निश्चीयते (त. भा. ३८)।

---

1. व्याप्याङ्गीकरणेऽनिष्टव्यापकस्य प्रसञ्जनम्।
तर्कस्स चोभयविधविषयोपेत इष्यते ॥ [मा. र. वा. ३७४-७५]

2. शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ [न्या. कु. २८५]
तर्कः क्वचिच्छङ्कानिवर्तकः। [मुक्ता. ८०]

3. सत्तर्कात् व्याप्तिप्रमा, तदाभासात्तदप्रमा, विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव। [त. प्र. ३९-४०]

तर्कोऽसौ द्विविध इति दिनकरभट्टः मुक्तावलीव्याख्याने निरूपयति। यथा-'तर्कश्च द्विविधो विषयपरिशोधको व्याप्तिग्राहकश्चेति। तत्र विषयपरिशोधकः निर्वह्निः स्यान्निर्धूमः स्यात् इत्यादिः। धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यात् इत्यादिश्च व्याप्तिग्राहकः' (दिन. ७७२) इति।

यत्र भूयोदर्शनेनापि शङ्कायाः न निवृत्तिः तत्र विपक्षे बाधकतर्कप्रयोगः, यथा - वह्न्यभाववत्यपि धूमोऽस्तु इति यद्याशङ्का तर्हि तत्रैवं तर्कः प्रयोगमर्हति। "यदि धूमः वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यात्" इति। अयं व्याप्तिग्रहोपयिकः तर्कः। विश्वनाथेन "यद्ययं वह्निमान् न स्यात् तदा धूमवान् न स्यात्, कारणं विना कार्यानुत्पत्तेः" इति विषयपरिशोधकतर्काकार एव दर्शित इति व्याख्यातृभिः स परिष्कृतः। यदि कदाचित् कारणं विनापि कार्यं भविष्यति तदा अहेतुक एव भविष्यति इति तदुपरि शङ्का, तर्हि सा व्याघातप्रदर्शनेन वारणीया। यदि कारणं विनापि कार्यमुत्पद्येत तदा धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य वा नियमेनोपादानं न स्यात् इति (मुक्ता. ८०)।

व्याप्यारोपेण व्यापकारोपस्तर्क इति नव्यनैयायिकः अन्नंभट्टः तर्कस्वरूपं संक्षेपेणाकथयत् (त. स. ६९)। आपादयामीत्यनुभवविषयतावच्छेदकतर्कत्वं जातिरिति केषांचिदभिप्रायः। व्यापकाभावप्रकारकनिश्चयविषयीभूते धर्मिणि आहार्यव्याप्यारोपेण तथाविधव्यापकारोपस्तर्क इति अन्येषां मतम्। पक्षे आपाद्यव्याप्यापादकवत्तानिश्चयजन्यज्ञानं तर्क इति वामाचरणभट्टाचार्याः (त. प्र. वि. १)।

२-५-२ भाट्टसिद्धान्तः— प्रमाणैः साध्यमानस्यार्थस्य अन्यथाभावशङ्कायां तन्निरासाय अन्यथात्वे दोषोद्घाटनं तर्कः। तर्कमिमं बाधकपदेनापि व्यवहरन्ति भाट्टाः (मा. मे. ३५)। अस्येदं स्वरूपम् - प्रमाणेन साध्यमानस्यार्थस्य अन्यथात्वशङ्कायां तन्निरासार्थम् अन्यथात्वे दोषकथनं तर्कः। यद्यत्राग्निः न स्यात् तर्हि धूमोऽपि न स्यात् (मा. मे. ३५) इति।

तर्कस्य चास्य पञ्चाङ्गानि भवेयुः। यथा व्याप्तिः, तर्काप्रतिहतिः, विपर्यये अवसानम्, अनिष्टम्, अननुकूलत्वमिति[1]। एतादृशाङ्गविशिष्टेन तर्केण साध्यवैपरीत्यं वह्न्यभावादिकमारोप्य हेतुभूतेन तेन हेत्वभावाद्यनिष्टप्रसञ्जनं क्रियते[2] एतादृशाङ्गवैकल्ये तर्काभासः स भवेत् (मा. मे. ३६)। आत्माश्रयादयः दोषाः अनिष्टप्रसङ्गरूपतया अस्मिन्नेव तर्के अन्तर्भवन्ति।

तर्कोऽयं अनुकूल-प्रतिकूलभेदेन द्विविधः[3]। अयं च व्याप्तिग्रहणसमये अथवा अनुमानोदयवेलायां व्यभिचारशङ्कां

---

1. व्याप्तिस्तर्काप्रतिहतिः अवसानं विपर्यये।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्॥ [मा. मे. ३५]

2. तत्र प्रसञ्जकस्य आहार्यलिङ्गस्य प्रसञ्जनीयेन व्याप्तिरेष्टव्या। तथा प्रतितर्कैः अप्रतिघातः। प्रसञ्जनीयविपर्यये पर्यवसानम्। एवं चेदेवं स्यात् न चैवमिति। प्रसञ्जनीयस्य चानिष्टत्वं प्रसिद्धम्। अननुकूलत्वं प्रतिपक्षासाधकत्वमिति। [तत्रैव ३५-३६]

3. साध्यानुभावानुवादेन दोषः साध्ये गुणोऽपि वा।
यत्रानुकूलतर्कोऽसौ साध्यसिद्धावनुग्रहात्॥
साध्यस्यैवानुवादेन यदनिष्टप्रसञ्जनम्।
स तर्कः प्रतिकूलः स्यात् साध्यसिद्धिनिरोधनात्॥ [तत्रैव ३९]

व्युदस्य व्याप्तिशोधनं कुर्वन् अनुमानमनुगृह्णाति[1] । न केवलमयं तर्कः अनुमानप्रमाणस्यैव अनुग्राहकः, किन्तु सर्वेषामपि प्रमाणानाम् । यथा प्रत्यक्षस्य - अयं घटः इति प्रत्यक्षं बौद्धोक्तपरमाणुप्रत्यक्षनिरासकेन तर्केण अनुगृहीतमेव अवयविगोचरं कल्पते । "यदि परमाणुगोचरता स्यात् तर्हि एकत्वेन महत्वेन चायं नावभासेत" इति हि तर्कः (मा. मे. ४२) । एवं सर्वप्रमाणानुग्राहकः तर्कः कथ्यते[2] ।

अस्य अविज्ञाततत्त्वोऽर्थः संदिग्धविषयः भवति । आरोपितं लिङ्गं हेतुः, तत्त्वार्थनिर्णयः फलं च संभवतः[3] । गागाभट्टेन भाट्टचिन्तामणौ तर्कलक्षणमेवमभ्यधायि, यथा - व्याप्यारोपेण व्यापकारोपद्वारा अनिष्टप्रसञ्जनं तर्कः (भा. चि. २७) इति ।

२-३-५ प्राभाकरसिद्धान्तः— प्राभाकरसिद्धान्ते सुप्रथितेषु बृहती-प्रकरणपञ्चिका-तन्त्ररहस्य-प्रभाकरविजयादिषु न मात्रयापि तर्कस्वरूपप्रस्तावः उपलभ्यते । नायमर्थः - तावता प्राभाकराणां तर्कः अनावश्यक इति वा, अनिष्ट इति वा । तत्र कारणमिदमुत्पश्यामः यत् - सामान्यतः प्रमाणेषु, विशेषतश्च

1. भूयोदर्शनतो शक्या दृश्योपाधिनिराक्रिया ।
अदृश्योपाधिशङ्का तु तर्केरेव निरस्यते ।। [मा. मे. ४७]
2. तस्मात्सर्वप्रमाणानां तर्कोऽनुग्राहकः स्थितः ।
साध्ये विपर्ययाशङ्काविच्छेदः तदनुग्रहः ।। [तत्रैव ४५]
3. अस्याविज्ञाततत्त्वोऽर्थः सन्दिग्धो विषयो मतः ।
हेतुरारोपितं लिङ्गं फलं तत्त्वार्थनिर्णयः ।। [तत्रैव ४६]

अनुमाने युक्तिग्रहपरिष्कारप्रणयनप्रवीणानां नैयायिकानां मार्गमनुधावद्भिः तैः तदीयसिद्धान्त एव अत्रापि अनुसरणीय इत्युदासितमिति ।

अथापि भवनाथमिश्रेण नयविवेकाख्ये ग्रन्थे, तद्व्याख्याने विवेकतत्त्वाख्याने च रविदेवेन, व्याप्तिग्रहोपयिकतया तर्कः प्रकीर्तितः । अतः प्राभाकरैः अन्येषु ग्रन्थेषु अनुट्टङ्कितमपि भवनाथेन नैयायिकवत् व्याप्तिग्रहपरिपन्थ्युपाधिविधूननार्थं तर्कस्य कण्ठरवेणैव उक्ततया[1] इदं निश्चीयते यत् प्राभाकराणां स एव तर्कः अभिमतः, यश्च नैयायिकैरभ्युपगत इति । विवेकतत्त्वाख्याने व्याख्याने रविदेवकृते च तर्कावश्यकता सविस्तरं प्रतिपादिता[2] ।

२.५.४ समीक्षणम्— तर्क इति पदं त्रिष्वपि प्रस्थानेषु एकस्मिन्नेवार्थे प्रायोजि । इदमत्रास्माभिः मनसि निधेयं यत् भाट्टैः कैश्चित् बाधकपदेनापि अयं व्यवाहारीति । प्राभाकरास्तु तर्कविषये नातीव बद्धादराः दरीदृश्यन्ते । बृहतीप्रकरणपञ्चिकादिषु तत्प्रसङ्गाभावात् । यद्यपि मीमांसादर्शने नवमाध्याये ऊहः विचारितः, अथापि नैयायिकोक्तस्य तर्कापरपर्यायस्य ऊहस्य मीमांसकोक्तस्य ऊहस्य च महान् भेद इति

1. यदि चानेकव्यक्त्युपाधिशङ्का, तदानुगतं तदाकृतिकत्वमेकमुपाधिः लाघवात् तर्कतः, उपाधिशङ्कापनयनमपि तर्कात् मानोत्पत्तिसहायादिति दिक् । [ न. वि. १२२–२३]
2. नच विषयविवेकेनैव तर्कस्य सहायतेति नियमः, तर्कानुग्राह्यतोपपत्तेरित्यर्थः । [तत्रैव १२२-२३]

उभयदर्शनपरिशीलनेन विभावयामः। अयं च निरुपाधिक-सम्बन्धावधारणे भूयोदर्शनस्य सहायकारी ऊहरूपस्तर्कः, स तु एतस्माद् भिन्नः[1]।

तर्कविषये नैयायिकमतमेव मीमांसकैः स्वीकृतम्। अत एव मीमांसकग्रन्थेषु प्राचीनेषु तत्प्रसङ्गः न भूयान् उपलभ्यते। न्यायवासनावासितेषु नव्यमीमांसकग्रन्थेषु तत्स्वरूपविचारादि समुपलभ्यते। नैयायिकैः तर्कोऽसौ अनुकूल-प्रतिकूलभेदेन प्रथमतः द्विविध इत्युक्तः। ततश्च विषयपरिशोधकव्याप्तिग्राहक-भेदेन च द्वैविध्यं तस्य तैरभ्युपागामि। मीमांसकानामपि अनु-कूल-प्रतिकूलविभाग इष्ट एव। विषयपरिशोधकादिरूपेण विविच्य विभागः न मीमांसकग्रन्थेषु समुपलभ्यते।

भाट्टैः व्याप्तिः, तर्काप्रतिहतिः, विपर्ययेऽवसानम्, अनि-ष्टम्, अननुकूलत्वमिति तर्काङ्गानि पञ्चाङ्गीकृतानि। नैयायिका-नामप्येतानि न विरुद्धानीति तेषामपि इमान्युपादेयान्येव। अपि च भाट्टैर्यत् सर्वप्रमाणानुग्राहकत्वं तर्कस्य प्रतिपादितं तदपि नैयायिकानां सम्मतमेव।

एवं च नैयायिकैः प्रथमतः प्रतिपादितः तर्कः भाट्टैः परिगृहीतः सम्यगुपयुक्तः स्वग्रन्थेषु स्वदर्शनानुरोधं परिष्कृत-श्चेति तद्ग्रन्थपरिशीलनेन सम्यगस्माभिरवगम्यते। प्राभाकरेषु

1. Cf. *EBP*. p. 246 : "*Tarka* is defined as a method of removing doubt regarding the validity of a proposition by first assuming the truth of its contradictory and then showing that such an assumption leads to an absurd conclusion."

तावत् सुचरितमिश्र-भवनाथमिश्रावन्तरा अन्यैः तर्कविषये न बहु व्यवसितम् । नयविवेक-विवेकतत्त्वाभ्यामेव शङ्कानिवर्तकतया प्राभाकरैः तर्कः समुपयुक्त इति वयं जानीमः ।

## २–६ पक्षता

२–६-१ न्यायसिद्धान्तः— अनुमितिलक्षणैककार्यानुकूलत्वसङ्गत्या समग्रव्याप्तिनिरूपणानन्तरं पक्षधर्मता निरूपणीया। सा च पक्षधर्मता व्याप्यस्य पक्षसम्बन्ध एवेति शिवादित्यः[1] । तदौपयिकी च पक्षता नैयायिकैः सम्यग् व्युत्पादिता । तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायः पक्षतास्वरूपमेवं न्यरूरुपत् – "सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावः यत्रास्ति स पक्षः । ---- यत्र साधकप्रमाणे सति असति वा सिषाधयिषा, यत्र वा उभयाभावतः तत्र विशिष्टाभावात् पक्षत्वम्" (गादा. १०९२) । इति । उक्तं च विश्वनाथेनापि कारिकावल्यामेवं पक्षतालक्षणम्[2] । एवं च सिषाधयिषाविरहविशिष्टविध्यभावः पक्षतेति फलितम् । तद्वांश्च पक्षो भवति । न केवलं सिषाधयिषा अथवा साध्यसन्देहो वा पक्षता भवितुमर्हति । घनगर्जितेनैव मेघानुमानोदयात्[3] । उक्तानुमाने सिषाधयिषाया वा साध्यसन्देहस्य वा

---

1. पक्षधर्मता च व्याप्यस्य पक्षसम्बन्धः । [स. प. ७०]

2. सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्रवृत्तित्वज्ञानादनुमितिर्भवेत् ॥ [कारि. ७६]

3. See *HIL*. p. 433 : "The State of being the locus or the minor term (*pakṣatā*) has been defined by some logicians as the state in which it is doubtful whether the major term abides in it or not. Gaṅgeśa prefers to define the minor term as that whose connection with

अकारणत्वात् । सत्यामपि सिद्धौ यदि सिषाधयिषा भवति तर्हि अनुमितिः भवत्येवेति सिषाधयिषाविरहविशिष्टसिध्यभावः पक्षतेति विशिष्टान्तं विशेषणम् ।

एवं च सिद्धेरभावे, असत्यां सत्यां वा सिषाधयिषायां पक्षता, यत्र वा सिषाधयिषा वर्तते यत्र सत्यां असत्यां वा सिद्धौ पक्षता भवति । यत्र च सिद्धिरेवास्ति नास्ति सिषाधयिषा तत्र न पक्षता । सिषाधयिषाविरहविशिष्टायाः सिद्धेरेव तत्र सत्त्वात्, तदभावाभावात् । अतः सिषाधयिषाविरहविशिष्टसिध्यभावः पक्षता इति सारः । (मुक्ता. १६-१७)नवीनैस्तु अनुमित्युद्देश्यत्वम्, अथवा अनुमितिप्रयोजनकत्वं पक्षत्वमिति निर्दुष्टं पक्षतालक्षणमुक्तम्[1] ।

२-६-२ भाट्टसिद्धान्तः— असत्यामनुमितिसिद्धौ सत्यां वा, असत्यां च अनुमित्सायां, उभयासत्त्वे वा अनुमितिः उत्पद्यत इति लोकानुभवः । अतः अनुमित्साविरहविशिष्टायाः अनुमितिसिद्धेः अभावः पक्षतेति कल्प्यते । यादृशयादृशेच्छासत्त्वे अनुमितिरुत्पद्यते सा सा अनुमित्सा अत्र भवितुमर्हति (भा. चि. २७) ।

एवं च तत्साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टतत्पक्षतावच्छेदकविशिष्टभिन्नविषयिकानुमितित्वभिन्नप्रमितिविभाज -

---

the major term is not known with certainty in consequence of the absence of a desire to know the connection."

1. प्राचीनमतं विहाय नवीनैः अनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम् । [न्या. को. ४३]

कधर्माविषयकतल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारकत्वे सति तदन्यलिङ्गतावच्छेदकावच्छिन्नलिङ्गकत्वप्रकारिका तल्लिङ्गतावच्छेदकाविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वावच्छिन्नानुद्देशियका तद्विशिष्टलिङ्गकत्वाप्रकारकत्वे सति तद्विरुद्धधर्मविशिष्टलिङ्गकत्वाप्रकारिका तल्लिङ्गकान्यकालाविषयिणी या तदन्यानुमित्सा तद्विरहविशिष्टसिध्यभावः पक्षतेति निष्कृष्टं पक्षतास्वरूपम् (भा. चि. २७-२८)।

२-६-३— प्राभाकरसिद्धान्तः— प्राभाकराणां पक्षता नानुमानाङ्गमिति प्रसिद्धिः। किन्तु बृहतीव्याख्याने ऋजुविमलपञ्चिकायाम् अनुमानाङ्गपरिगणनमेवं कृतम् शालिकनाथेन। यथा - "तदेवं सम्बन्धव्याप्तिपक्षधर्मत्वे हेतुरूपे निश्चिते अनुमानाङ्गमिति स्थितिः" (बृहती. प. ९७) इति। प्रकरणपञ्चिकायां शालिकनाथेन असाधितविषयत्वस्य अनुमितिहेतुत्वमाशङ्क्य खण्डितम् (प्र. प. २११)। तदनन्तरं प्राभाकरमतानुरोधम् अनुमानकारणजातं तेनैवं परिगणितम्। यथा - "तस्मात् पूर्णमिदम् अनुमानकारणपरिगणनम् - नियतसंबन्धैकदेशदर्शनं, सम्बन्धनियमस्मरणम्, अबाधितविषयत्वं चेति" (प्र. प. २१२) इति।

अतः प्राभाकरमते पक्षतायाः नाङ्गत्वमिति निश्चीयते। उभयत्रापि पक्षतायाः अनुमानाङ्गतया अपरिगणनात्। बृहती-नयविवेकविवेकतत्त्वादिषु च पक्षतायाः प्रस्तावोऽपि नोपलभ्यते। अतः प्राभाकरमतानुरोधं पक्षता अनुमानाङ्गतया नाभ्युपगम्यत इति सारः। अत्रैवं निर्णये अनुमानचिन्तामणिस्थपक्षताप्रकरणे

पक्षता प्राभाकरमते नानुमानाङ्गमिति वदतः गङ्गेशोपाध्यायस्य वचनमस्माकम् अत्यन्तमुपयोगि कल्पत इत्यवगन्तव्यम् ।

२-६-४ समीक्षणम्— नैयायिकैः भाट्टैश्च पक्षतापदं तुल्येऽर्थे प्रयुज्यते । प्राभाकरास्तु कुत्रापि अनुमानाङ्गतया पक्षतेति पदं न प्रयुञ्जते । तेषां मते पक्षताया एव अनङ्गीकारात् ।

पक्षतानिरूपणावसरे नैयायिकमतमेव भाट्टैरभ्युपगतम् । तत्रापि न प्राचीनैः भाट्टैः किन्तु नव्यैः । प्राभाकरैस्तु पक्षताया एव अनङ्गीकारात् नात्र तेषां प्रसक्तिः ।

पक्षस्य भावः पक्षता । सा च साध्यसन्देहः, अथवा सिषाधयिषाविरहविशिष्टसिध्यभावो वेति प्राचीनानां नैयायिकानां भाट्टानां च मतम् । नव्यानां मते तु गगनविशेष्यकमेघप्रकारसन्देहाभावेऽपि गृहध्यस्थस्य घनगर्जितेन "गगनं मेघवत्" इत्यनुमितिरुत्पद्यत इति अनुमित्युद्देश्यत्वमेव पक्षतेति निश्प्रचम् । एतत्तु समीचीनम् ।

प्राभाकरैरपि अनुमानाङ्गतया पक्षधर्मत्वस्य अभ्युपगमेन पक्षता च तैरङ्गीकृतप्रायेति विभावयाम । अस्मदभिप्रायमुपोद्बलयति शालिकनाथवचनकदम्ब एवम् - "प्रमातारस्तु निवृत्तप्रमित्साः सम्बन्धनियमानुसन्धानं प्रति नाद्रियन्त इति, नानुमानमुदेति" (प्र. प. २१२) इति । वाक्येनानेनेदं ज्ञायते यत्— यदि तेषां प्रमातॄणां प्रमित्सा जायेत तावदनुमितिरुत्पद्यत इति । एवं च सिषाधयिषाविरहविशिष्टरूपं पक्षतालक्षणं प्राभाकरैरपि अवश्यमङ्गीकार्यमित्यायातम् ।

अन्यच्च पक्षताश्रयत्वस्यैव पक्षलक्षणत्वकथनाद् या काचित् पक्षता तैरप्यवश्यमनुमानाङ्गतया अभ्युपगन्तव्या। पक्षपदस्य विलक्षणेऽर्थे पारिभाषिकत्वात्। पक्षप्रतिपादने तेषामपि वैमत्याभावात्। पक्षाभासादिकस्यापि तैः प्रतिपादितत्वात्। अतः तैरप्यवश्यं अनुमानाङ्गभूता पक्षता अङ्गीकार्यैव। दार्शनिकेषु प्राभाकरैः पक्षतायाः अनुमानाङ्गत्वं नाङ्गीकृतमिति प्रसिद्धिः[1], तदनुत्कीर्तननिबन्धना अथवा विनष्टप्राचीनप्राभाकरग्रन्थमूला वेति अभ्यूह्यते॥

## २·७ परामर्शविचारः

२-७·१ न्यायसिद्धान्तः— परामर्शशब्दोऽयम् इदंप्रथमतया न्यायवार्तिककारेण भारद्वाजोद्द्योतकरेण पारिभाषिकतया अस्मिन्नर्थे प्रयुक्तः। "स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते" इति वात्स्यायनभाष्यपङ्क्तिव्याख्यानावसरे लिङ्गदर्शनपदं लिङ्गपरामर्शरूपतया अभ्यधायि वार्तिककारेण[2]।

ये केचिद् एनं परामर्शं नाभ्युपजिगमिषन्ति तैः उपनयोऽपि नैषितव्य इति उदयनाचार्यः परिशुद्धौ अवादीत्। नच

---

1. प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरललग्नस्य आनुभविकत्वात् कालभेदकल्पनायां च मानाभावात् भानाभावाच्च पक्षता नानुमितिहेतुः। [त. चि. अ. ११७५]

2. बुभुत्सावतो द्वितीयात् लिङ्गदर्शनात् संस्काराभिव्यक्त्यनन्तरकालं स्मृतिः, स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनम्, "अयं धूम" इति। तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं लिङ्गपरामर्शरूपमनुमानं भवति। [न्या. वा. २९२]

स्वार्थानुमाने द्वितीयलिङ्गदर्शनेनैव पक्षधर्मतायाः अवगमात् परामर्शः अनावश्यक इति वाच्यम् । पक्षधर्मतायाः अनुमानोपयोगित्वात् । सा च उपनयेन प्रदर्श्यते, न द्वितीयलिङ्गदर्शनेन । अतः स्वार्थानुमाने परामर्शं, परार्थानुमाने चोपनयम् अवश्यमभ्युपगच्छन्ति तार्किकाः (परि. ३३८) ।

न्यायसारव्याख्याने न्यायमुक्तावल्याम् अपरार्कदेवेनैवमुक्तम् - "सामर्थ्यं पुनः इदमेव साधनस्य, यद् व्याप्तिग्रहणोपकृतं पक्षधर्मत्ववेदनम्" (न्या. मु. १९३) इति । अर्थात्, व्याप्तिविशिष्टपक्षधर्मताज्ञानमित्येव फलति । तत्त्वचिन्तामणिकारोक्तं परामर्शलक्षणद्वयमिदम् - "पक्षधर्मे व्याप्तिविशिष्टज्ञानं, तदनन्तरविशिष्टवैशिष्ट्यज्ञानं, पक्षे वा तृतीयलिङ्गपरामर्शः" (त. चि. अ. १२६२) इति । दीधितिकारः रघुनाथशिरोमणिस्तु "व्याप्यपक्षयोः वैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वम् । विनिगमनाविरहेण अन्यतरविशेषणविशेष्यभावस्य अतन्त्रत्वात्" (त. चि. अ. दी. १२६२-६३) इति ।

विश्वनाथस्तु व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानं परामर्शः । तच्च अनुमितिजनकम् । एतच्च ज्ञानं पक्षे व्याप्यः इति अथवा पक्षो व्याप्यवान् इति वा ज्ञानम् । तत्र च क्रमेण पक्षे साध्यम्, पक्षः साध्यवान् इत्यनुमितिर्जायते इत्यवोचत्[1] । उभयविधादपि परामर्शात् पक्षः साध्यवान् इत्येवानुमितिरुपजायत इति अन्येषां मतम् । वस्तुतस्तु अनुभवानु-

---

1. व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते । [कारि. ४७५]

रोधेन पक्षविशेष्यकपरामर्शस्यैव हेतुत्वमिति दिनकरभट्टः । तत्र व्युक्तिस्तु "वह्निव्याप्यधूमवांश्चायम्" इत्याकारकः पक्षविशेष्यक उपनय एव; सर्वसम्मतत्वात् (दिन. ४७७)। व्याप्तिविशिष्टं च यत्पक्षधर्मताज्ञानं स परामर्श इति अन्नंभट्टः[2] ।

२-७-२ भाट्टसिद्धान्तः—भाट्टैस्तावत् परामर्शस्य अनुमितिहेतुत्वं नाङ्गीक्रियते । अत एव तैः वाक्यावयवेषु उपनयोऽपि नोररीकृतः । पार्थसारथिमिश्रस्तु परामर्शपदं शास्त्रदीपिकायां प्रयुङ्क्ते[3] । किन्तु स्वमते तस्य अङ्गीकार इति न कुत्रापि प्रतिपादयति । अन्यैश्च भाट्टैः परामर्शशब्दोऽपि न प्रयुज्यते ।

अथ तार्किकैरुच्यमानः व्याप्तिविशिष्टवैशिष्ट्यावगाहिरूपः परामर्शः नानुमितित्वावच्छिन्नं प्रति हेतुर्भवितुमर्हति । वह्निव्याप्यधूमवान् पर्वत इति ज्ञानमन्तरापि यत्र वा पर्वतः धूमवान् इति प्रत्यक्षं, ततश्च वह्निव्याप्यः धूमः इति स्मरणं, तत्र ज्ञानद्वयादेव अनुमितिरुत्पद्यत इति । न सर्वत्र व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं अनुमित्युत्पत्ति प्रत्यपेक्षितम् । परन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वं तत्रावश्यकम् । अतः विशिष्टज्ञानकल्पनं नैयायिकमते गौरवावहमेवेति भाट्टैः परामर्शस्य अनुमितिं प्रति नियमेन कारणत्वं नाभ्युपगम्यते (त. चि. अ. ११७७) ।

2. व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा - वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः । [त. स. ३४]

3. स्मरणस्यापि तत्परामर्शप्रमोषेण अनुभवाभिमानोपपत्तेः । वस्तुतः अनुभवत्वं स्वसिद्धमेव, प्रमाणाभावात् । [शा. दी. ६३]

२-७-३ प्राभाकरसिद्धान्तः— प्राभाकरैरपि भाट्टैरिव परामर्शस्य अनुमितिकारणत्वं नाभ्युपगम्यते । बृहती-ऋजुविमला-पञ्चिका-काशिका-नयविवेक-विवेकतत्त्व-प्रकरणपञ्चिका-तन्त्ररहस्य-प्रभाकरविजयादिषु प्रामाणिकेषु प्राभाकरग्रन्थेषु परामर्शनिरूपणस्य मृग्यत्वात् । प्रत्युत केषुचन ग्रन्थेषु वाक्यावयवनिरूपणावसरे प्रतिज्ञा-हेतु-उदाहरणान्येवाभ्युपगतानि, नोपनयः (न. वि. १३९) । अत एवमनुमीयते यत् - प्राभाकराणामपि भाट्टवत् नेष्टं परामर्शस्यानुमितिकारणत्वमिति ।

२-७-४ समीक्षणम्— परामर्श इति पारिभाषिकं पदम् अस्मिन्नर्थे इदंप्रथमतया न्यायवार्तिककारेण उद्द्योतकरेण प्रायोजीति प्रागवोचाम । ततः प्रागिदं लिङ्गदर्शनपदेन व्यवहृतं दार्शनिकैः नैयायिकैरेव अयं शब्दः विलक्षणेऽस्मिन् अर्थे असकृत् प्रयुक्तः । भाट्टैः प्राभाकरैश्च विशिष्टज्ञानस्यैव अनुमानकारणता नाङ्गीकृतेति तैरयं विशिष्टज्ञानरूपपरामर्शशब्दः न प्रयुक्तः । परामृश्यत इति हि परामर्शः ।

अत्र विषये नैयायिकमतं भाट्टैः प्राभाकरैश्च परित्यक्तमित्येव वक्तव्यम् । किन्तु सर्वत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानं नानुमितौ हेतुः इति तैरुक्ततया इदमस्माभिर्ज्ञायते यत् - क्वचित् कारणता तेषामप्यविरुद्धैवेति । तत्परित्यागे ते गौरवरूपं कारणमुत्पादयन्ति ।

अत्र त्रिष्वपि मतेषु परामर्शस्यानुमितौ कारणत्वमभ्युपगच्छतां तार्किकाणां मतमेव साधीयः । तथा हि — विशिष्ट-

ज्ञानाङ्गीकारे मीमांसकैः यद् गौरवमुपदर्शितं तन्न समीचीनम् । व्याप्यातवच्छेदकाज्ञानेऽपि वह्निव्याप्यवान् धूम इति ज्ञानादपि अनुमित्युत्पत्तेः लाघवाद् व्याप्तिप्रकारपक्षधर्मताज्ञानत्वेन हेतुत्वम् । एवं च तदा "धूमवान् पर्वतः" इति ज्ञानादप्यनुमितिरुत्पद्येत इत्यापत्तिः । व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकस्य पक्षधर्मताज्ञानस्य च विद्यमानत्वात् । यदि तत्र गृह्यमाणता विशेषणीक्रियते तर्हि चैत्रस्य व्याप्तिग्रहे, मैत्रस्य पक्षधर्मताज्ञानाद् अनुमित्यापत्तिः । यदि तत्पुरुषीयत्वनिवेशः तदा अनन्तकार्यकारणभावः आपतति । एवं च वृश्चिकभिया पलायमानस्य आशीविषमुखे निपातः ।

नैयायिकमते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेन अनुमितिं जनयति । अतः नैवानन्तकार्यकारणभावकल्पनायासः । यदि व्याप्तिप्रकारकस्य पक्षधर्मताज्ञानस्य स्वातन्त्र्येण कारणत्वं, तदा कार्यकारणभावद्वयमभ्युपगन्तव्यं भवेत् । अन्यच्च वह्निव्याप्यो धूमः, आलोकवान् पर्वतः इति ज्ञानादपि अनुमितिः जायेत इत्यापत्तिः ।

अतः यत्र भवद्भिः ज्ञानद्वयमिष्यते तत्र विशिष्टज्ञानं तत् कल्पनीयम् । फलमुखगौरवं नैव दोषावहम् इति नैयायिकानां राद्धान्तः (मुक्ता. ४७६) । पूर्वोक्तोभयपक्षपरामर्शेन इदमस्माभिः निश्चीयते यत् - मीमांसकमतापेक्षया नैयायिकमतमिदम् अनुमितिकारणतया परामर्शाभ्युपगन्तृ युक्ततरमिति ।

२-८ लिङ्गविचारः—

**२-८-१ न्यायसिद्धान्तः—** अथ परोक्षः अर्थः लिङ्ग्यते गम्यत इति लिङ्गम् । तच्चेदं लिङ्गं पञ्चलक्षणम्[1] । तानि चेमानि लक्षणानि - पक्षधर्मत्वम्, सपक्षधर्मत्वम्, विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति न्यायमञ्जरीकारः जयन्तभट्टः अवादीत् (न्या. म. १११) ।

लिङ्गं हेतुरित्यनर्थान्तरम् । लिङ्गपदं चेदं हेतुपरतया वात्स्यायनेन न्यायभाष्ये ऐदंप्राथम्येन प्रायोजि[2] । इदं च लिङ्गं अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकिभेदेन त्रिविधमिति प्रथमतः वार्तिककारेण भारद्वाजोद्योतकरेण सलक्षणं स्पष्टचकारि (न्या. वा. २९४) ।

**२-८-१-१ अन्वयव्यतिरेकि—** विवक्षिततज्जातीयोपपत्तौ विपक्षावृत्तित्वम् अस्य लक्षणम् । यथा, अनित्यः शब्दः, सामान्यविशेषवत्वे सति अस्मदादिबाह्यकरणप्रत्यक्षत्वात्, घटादिवत् । इदं द्विधा भिद्यते - सर्वसपक्षव्यापक-सपक्षैकदेशभेदात्[3] ।

**२-८-१-२ केवलान्वयि—** विवक्षिततज्जातीयवृत्तित्वे सति विपक्षहीनत्वम् अस्य लक्षणम् । यथा सर्वानित्यत्ववादिनाम् "अनित्यः शब्दः कृतकत्वात् ।" अत्र विपक्षराहित्यम् । इदमपि लिङ्गं सर्वसपक्षव्यापक-सपक्षैकदेशवृत्तिभेदात् द्विधा भिद्यते । (न्या. ता. च. १०६) ।

---

1. See Varadachari V. "Requisites of a good Hetu", Annals, B.O.R *Institute*, Vol. XLVI., pp. 43-48 (1965)
2. लिङ्गलिङ्गिनोः सम्बन्धदर्शनम् । [न्या. भा. २९१]
3. अन्वयव्यतिरेकिणः अवान्तरभेदावाह - स द्विविधः सपक्षवृत्तिभेदादिति । (न्या ता च. १०३)

२-८-१-३ केवलव्यतिरेकि— विवक्षितव्यापित्वे सति सपक्षाभावे सति विपक्षावृत्तित्वमस्य लक्षणम्। यथा, "नेदं जीवच्छरीरं निरात्मकम्, अप्राणादिमत्त्वप्रसङ्गात्' इति। जयसिंहसूरिणा चेदं द्विधा विभक्तम् - प्रसङ्गोन्नेयी, अप्रसङ्गोन्नेयी चेति[1]।

अयं च विभाग: व्याप्तिभेदनिबन्धनः। व्याप्तिः खलु द्विविधा — अन्वयव्यतिरेकभेदेन। अन्वयव्यतिरेकोभयव्याप्तिमत् लिङ्गं अन्वयव्यतिरेकीत्युच्यते। अन्वयमात्रव्याप्तिकं लिङ्गं केवलान्वयि इत्याख्यायते। व्यतिरेकमात्रव्याप्तिकं लिङ्गं केवलव्यतिरेकीति समाम्नायते। सूचितं चेदं न्यायवार्तिककृतैव (न्या. वा. २९६)। उक्तं चैवमेव न्यायसारव्याख्याने, न्यायतात्पर्यचन्द्रिकायां जयसिंहसूरिणा च व्याप्तिसद्भावासद्भावावभिलक्ष्यैव[2]।

शिवादित्येन सप्तपदार्थ्याम् इदमेव त्रैविध्यमभ्युपगतम्[3]। लिङ्गमिदं पुनः द्विविधं स्वार्थपरार्थभेदेनेति तदभिप्रायः। केचित्

1. केवलयव्यतिरेकी द्वेधा–प्रसङ्गोन्नेयी, अप्रसङ्गोन्नेयी च। तत्र प्रागप्रासङ्गोन्नेयिनमाह, यथा-सर्ववित्कर्तृपूर्वकं सर्वं कार्यम् कादाचित्कत्वात्। यत् सर्ववित्कर्तृपूर्वकं न भवति, तन्न कादाचित्कम् यथाकाशादीति। प्रसङ्गोन्नेयिनमाह-प्रसङ्गद्वारेण वा यथा - नेदं निरात्मकं जीवच्छरीरम् - अप्राणादिमत्वप्रसङ्गात् लेष्ठवदिति। [न्या. ता. च. १०८]
2. साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः। साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिः व्यतिरेकः तद्वान् हेतुरन्वयव्यतिरेकी। व्यतिरेकव्याप्तिरहितः केवलान्वयी। अन्वयव्याप्तिरहितः केवलव्यतिरेकी। [न्या. ता. च. ६९]
3. लिङ्गस्य त्रैविध्यात्। अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति। [स. प. ३०]

इमं लिङ्गभेदमुपलक्ष्यैव अनुमानमपि त्रिविधमाहुः। तच्च कार्ये कारणोपचारनिबन्धनम् (जि. व. ३०)। मीमांसकैस्तु केवलव्यतिरेकिलिङ्गं नाङ्गीक्रियते। अर्थापत्तेः पृथक् प्रमाणत्वस्य स्वीकृतत्वात्[1]।

मुक्तावलीकारः विश्वनाथः लिङ्गविभागमिमं अनुमानभेदरूपतया अकरोत्। विषयेऽस्मिन् अयं तत्त्वचिन्तामणिकारं गङ्गेशोपाध्यायम् अनुगच्छति[2]। लिङ्गमिति पदं मणिकारवदेव अयमप्यत्र न प्रयुङ्क्ते[3]। यथा–

क) असद्विपक्षः केवलान्वयी। यथा - 'घटोऽभिधेयः प्रमेयत्वात्'। (ख) असत्सपक्षः केवलव्यतिरेकी। यथा - पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वात्'। (ग) सत्सपक्षविपक्षोऽन्वयव्यतिरेकी। यथा - 'वह्निमान् धूमात्' (मुक्ता. ७९०) इति।

एतद्विभिन्नतया अन्नम्भट्टः लिङ्गं त्रिविधमिति लिङ्गप्रभेदतयैव अन्वयव्यतिरेकिप्रभृतीनि लिङ्गानि दर्शयामास (त. स. ४०)। न त्वनुमानविभागावसरे।

एवं च नैयायिकैः अङ्गीकृतानि अन्वयव्यतिरेकि-केवलान्वयि-केवलव्यतिरेकिभेदेन त्रीणि लिङ्गानीति अवगन्तव्यम्।

---

1. See Bhattacharya, B. K.; "The Anomaly of Vyatireki Inference"; *AIOC* XXV, SP. PP. 236 38 (1969)

2. तच्चानुमानं त्रिविधम् - केवलान्वयि - केवलव्यतिरेकि - अन्वयव्यतिरेकिभेदात्। [त. चि. अ. १३२६]

3. त्रैविध्यमनुमानस्य केवलान्वयिभेदतः। [कारि. १४२]

२-८-२ भाट्टसिद्धान्तः— लिङ्गं हेतुरित्यनर्थान्तरम् । कैश्चिदनुमानप्रयोगे अस्यैव हेतोः प्रधानतया लिङ्गं अनुमानमित्यपि व्यवह्रियते (मा. मे. ५३) । तच्च अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति त्रिविधम् । अयं च विभागः व्याप्तिद्वैविध्यनिबन्धनः (मा. मे. ५३) । व्याप्तिः खलु अन्वयव्याप्तिः व्यतिरेकव्याप्तिरिति इतः प्रागेव द्विधा विभक्ता ।

२-८-२-१ अन्वयव्यतिरेकि— पूर्वोक्तोभयविधव्याप्तिमत् अन्वयव्यतिरेकि लिङ्गम् । यथा - धूमः वह्न्यनुमाने (मा. मे. ५४) ।

२-८-२-२ केवलान्वयि—यस्य पुनः केवलमन्वयव्याप्तिरेवास्ति तत् केवलान्वयिलिङ्गम् । यथा - "ज्ञानं ज्ञानान्तरप्रकाश्यम् वस्तुत्वाद् घटवत्" इत्यादिस्थलेषु । अत्र व्यतिरेकव्याप्तिः दुर्लभेति लिङ्गमिदं केवलान्वयि कथ्यते (मा. मे. ५५) ।

२-८-२-३ केवलव्यतिरेकि— केवलं व्यतिरेकव्याप्तिमत् लिङ्गं केवलव्यतिरेकि । यथा - सर्वं ज्ञानं स्वप्रकाशम्, ज्ञानत्वात् । यत्र यत्र स्वप्रकाशत्वाभावः तत्र तत्र ज्ञानत्वाभाव इति व्यतिरेकव्याप्तिरेवास्ति । न तु यस्य स्वप्रकाशत्वं तस्य ज्ञानत्वमप्यस्तीति क्वचित् दृष्टान्ते दर्शयितुं शक्यत इति अन्वयव्याप्तिर्नास्ति । केवलव्यतिरेकिलिङ्गमिदं अवीतलिङ्गमित्यपि भाट्टैः व्यवह्रियते (मा. मे. ५५) ।

केवलव्यतिरेकिलिङ्गमिदं कौमारिलैः नाङ्गीक्रियते । पक्षस्य अप्रसिद्धविशेषणत्वात् । तत्स्थाने अर्थापत्तिरिति पञ्चमीं प्रमामभ्युपगच्छन्ति । यत्तु तार्किकाः कथयन्ति सत्यनुकूलतर्के अप्रसिद्धविशेषणत्वं पक्षस्य नैव दोषायेति तदसङ्गम् । तर्केणापि

अप्रसिद्धार्थस्य साधयितुमक्षमत्वात्। एवं केवलव्यतिरेकि लिङ्गम् अनभ्युपगच्छतां भाट्टानां राद्धान्तः[1]।

यदि सामान्यतः प्रसिद्धे, पुनर्विशेषणपक्षे साध्यमानतया नाप्रसिद्धविशेषणत्वं पक्षस्य, यथोक्तम् --

"सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे।
कथं कथय पक्षोऽयमप्रसिद्धविशेषणः॥" (मा. मे. ७५)

इति। तर्हि सामान्यतः सिद्धिरहिताः व्यतिरेकिणः निरसनीयाः। सामान्यतः सिद्धिमन्तश्च व्यतिरेकिणः अभ्युपगन्तव्याः। अत एव चिदानन्देनापि नीतितत्त्वाविर्भावे केवलव्यतिरेकी हेतुः न साक्षात् निराकृतः, नच साक्षात् उपात्तोऽपि[2]। अत एवं वक्तुं शक्यते यत् भाट्टमते त्रिविधं द्विविधं वा लिङ्गमिति (मा. मे. ६०)।

---

1. तं च कौमारिलाः प्रायो नेच्छन्ति व्यतिरेकिणम्।
तत्स्थाने चाभिषिञ्चन्ति पञ्चमीं प्रमितिं पुनः॥
क्वचित्प्रसिद्धमन्यत्र साध्यते ह्यनुमानतः।
स्वप्रकाशत्वधर्मो हि सिद्धो नान्यत्र कुत्रचित्॥
तेन तत्साधने पक्षो ह्यप्रसिद्धविशेषणः।
एवं च दुष्टपक्षोऽयं व्यतिरेकी निवार्यताम्॥
यच्चानुकूलतर्के सत्यप्रसिद्धविशेषणः।
न दोष इति भाषन्ते तार्किकास्तदसङ्गतम्॥
तर्को हि नाप्रसिद्धार्थं क्वचित्साधयितुं क्षमः।
अतोऽप्रसिद्धता दोषः तर्के सत्यपि दुस्त्यजः॥ [मा. मे. ५६-५७]

2. अत एव चिदानन्दः केवलव्यतिरेकिणम्।
नैव साक्षान्निराचक्रे नापि साक्षादुपाददे॥
तस्मात्सामान्यतः सिद्धिहीनाश्चेद् व्यतिरेकिणः।
सर्वथा वारणीया इत्येतत्तावद् व्यवस्थितम्॥ [तत्रैव ५८]

२-८-३ प्राभाकरसिद्धान्तः— प्राभाकरग्रन्थेषु कुत्रापि लिङ्ग-भेदमधिकृत्य किञ्चिदपि स्पष्टतया नोपलभ्यते । अथापि लिङ्ग-पदं तैः प्रयुज्यत एव (बृहती प. ९३) । लिङ्गस्वरूपविषये अथवा लिङ्गविभागविषये च न किमपि तैर्विशदीकृतम् ।

अत एवं स्थितेऽपि तद्ग्रन्थपरिशीलनेनेदं वक्तुं प्रभवामः यत् - तैरपि भाट्टवत् अन्वयव्यतिरेकि, केवलान्वयिरूपं द्वि-विधं लिङ्गमभ्युपगतमिति । अर्थापत्तेः अङ्गीकृततया भाट्टवत् तेषामपि केवलव्यतिरेकिलिङ्गे नाभ्युपगमः इति स्पष्टमेव समेषाम् । अन्वयव्यतिरेकि-केवलान्वयिलिङ्गयोः कण्ठरवेणानुक्तावपि व्याप्तिप्रस्तावे अन्वय-व्यतिरेकविभागस्य दृश्यमानतया, उभयथापि प्रयोगाणां च अवलोक्यमानतया अन्वयव्याप्तिः, तथा व्यतिरेकव्याप्तिश्च प्राभाकराणामविरुद्धे इति निश्शङ्कं वक्तुं शक्यते ।

तथा च यस्य लिङ्गस्य अन्वयव्याप्तिः, व्यतिरेक-व्याप्तिश्च भवितुमर्हतः तत् अन्वयव्यतिरेकीति, यस्य वा केवलमन्वयव्याप्तिरेव भवति तत् केवलान्वयीति वक्तुं शक्यते । विषयेऽस्मिन् अधोनिर्दिश्यमानाः पङ्क्तयः प्राभाकरहृदयाव-गमाय कटाक्षार्हाः—

"धूमो हि वह्निकार्यतया वह्निसंयोगितया व्याप्तः, अग्निस्तु न सर्वदा धूमसम्बन्धीति सम्बन्धाव्याप्तो न गमकः । कथमयं विभागः विवेचनीय इति चेत्, अन्वयव्यतिरेकाभ्याम्" (बृहती. प. ९५) इति । एवमेव

प्रकरणपञ्चिकायां शालिकनाथोऽप्यवादीत् – "तेन नाग्नेः धूमसम्बन्धस्य कालावच्छेदो अनुप्रवेश्यते । धूमस्य तु कदाचिदप्यग्निसंयोगरहितस्यावगमो नास्ति" (प्र. प. २०४) इति ।

अतः धूमरूपस्य हेतोः वह्निसाधनावसरे अन्वयव्यतिरेकित्वं एतेषामविरुद्धमिति ज्ञायते । अन्वयव्याप्तेः प्रतिपादनेन केवलतद्व्याप्तिमतः हेतोः केवलान्वयित्वं च कुत्रापि अप्रतिषिद्धमिति तदपि वक्तुं शक्यते । अप्रतिषिद्धं परमतं अनुमतमिति हि तन्त्रयुक्तिः ।

**२-८-४ समीक्षणम्**— लिङ्गपदं नैयायिकैः, भाट्टैश्च समानेऽर्थे प्रयुक्तम् । हेतुपरतया प्रथमतः लिङ्गपदस्य प्रयोग उभयत्रापि दरीदृश्यते । गच्छति काले अनुमानप्रयोगे लिङ्गस्य, अथवा हेतोः अन्यावयवापेक्षया प्राधान्यात् अनुमानमेव लिङ्गपदेनापि व्यवाहारि। उभयत्राप्येतत् समानमिति तद्ग्रन्थदर्शनेनावगच्छामः ।

एतादृशव्यवहारे नैयायिका एव भाट्टानां मार्गदर्शका इत्यपि सुगमं प्रेक्षावताम् । वार्तिककारेण उद्द्योतकरेण हेतुपर्यायतया प्रयुक्तं त्रिविधं लिङ्गं परिगृह्य तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायः अनुमानविभागावसर एवमुपयुक्तवान् । यथा - "तच्चानुमानं त्रिविधम्, केवलान्वयि - केवलव्यतिरेकि अन्वयव्यतिरेकिभेदात्" (त. चि. अ. १३२६) इति । तत्त्वचिन्तामणेरनन्तरं तत्प्रभावभावितत्वात् सकलशास्त्राणां भाट्टप्रस्थानमपि मनागिव तच्छायायां अभिवृद्धम् ।

प्राभाकरास्तु लिङ्गपदं तत्र तत्र प्रयुञ्जते पुनः तत्स्वरूपविभागादिषु न बद्धादरा दरीदृश्यन्ते । न चापि नैयायिकमतं तैः खण्डितमुपलभ्यते अत्र विषये कुत्रापि ।

इयान् विशेषः यत् - भाट्टैः प्राभाकरैश्च अर्थापत्तेः प्रत्येकप्रमाणत्वस्य अभ्युपगतत्वात् नैयायिकोक्तं केवलव्यतिरेकिलिङ्गं तैः सर्वैः नाङ्गीकृतम् ।

सूक्ष्मेक्षणिकया विचारे क्रियमाणे नैयायिकमतमेवात्र विषये समुचितमिति तावदवगम्यते । तथा हि - लिङ्गविभागः खलु व्याप्तिनिबन्धनः । यदा अन्वयमात्रव्याप्तिकं लिङ्गं केवलान्वयीत्युच्यते । तदा व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकीति अङ्गीकार एव औचित्यं वरीवर्ति । केवलव्यतिरेकव्याप्तिमत् लिङ्गं अपलाप्य अर्थापत्तेः पृथक् प्रमाणताङ्गीकारे न किञ्चिद्विनिगमकमुत्पश्यामः । लोके च विना व्याप्तिं कस्यचनार्थस्य अन्येन नियतानुबन्धस्य दुर्बोधतया[1] अर्थापत्तेः अनुमानप्रमाण एवान्तर्भावात् । यथाऽमाणि जयन्तभट्टेन न्यायमञ्जर्याम् -- "अपि च तेन विना नोपपद्यते इति च व्यतिरेकभणितिरियम् । व्यतिरेकश्च प्रतीतः तस्मिन् सत्युपपद्यते इत्यन्वयमाक्षिपति, अन्वयव्यतिरेकौ च गमकस्य लिङ्गस्य धर्म इति कथमर्थापत्तिः नानुमानम्? केवलव्यतिरेकी हेतुः अन्वयमूल एव गमक इति वक्ष्यामः" (न्या. म. ३८) इति ।

---

1. एषा विचार्यमाणा तु भिद्यते नानुमानतः ।
प्रतिबन्धाद्विना वस्तु न वस्त्वन्तरबोधकम् ।। [न्या. म. ३७]

अतः नैयायिकमतानुरोधं अन्वयव्यतिरेकि-केवलान्वयि-केवलव्यतिरेकि चेति त्रिविधं लिङ्गं निर्दिष्टम् अभ्युपगन्तव्यमिति सारः। अर्थापत्तिनिरासस्तु विशेषतः पञ्चमे अर्थापत्त्यधिकारे विस्तरेण अधिकरिष्यते।

## २-९ वाक्यावयवनिरूपणम्

**२-९-१ न्यायसिद्धान्तः—** सूत्रकारेण गौतममुनिना अवयवा इमे सप्तमपदार्थरूपतया उद्दिष्टा लक्षिताः परीक्षिताश्च। स्वार्थानुमानेन कस्यचन पदार्थस्य आनुमानिके ज्ञाने जाते परं प्रति तद् बोधयितुं वाक्यप्रयोगः कर्तव्यो भवति। वाक्यं च तत् परार्थानुमानप्रयोग इति, न्याय इति च आख्यायते[1]। अत एव न्यायाप्रयोज्यं स्वार्थानुमानं न्यायप्रयोज्यं परार्थानुमानमिति गोवर्धनपण्डितः अवादीत्[2]। तच्च वाक्यं किं त्र्यवयवम् उत पञ्चावयवमित्यत्र दार्शनिकानां विभिन्ना मतिः। नैयायिकैस्तु पञ्चावयवं वाक्यमिति आगौतमात् अन्नंभट्टावधि निश्चप्रचम्।

ते चावयवाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चेति सूत्रकारः[3]। भाष्यकारस्तु वात्स्यायनः दशावयवाङ्गीकारि नैयायिकैकदेशिमतं स्वभाष्ये उपपाद्य शिष्टानामपि जिज्ञासा,

---

1. सोऽयं परमो न्यायः। [न्या. भा. ४]
अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यम्।[त.चि.अ.]

2. स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम्। तत्प्रयोज्यानुमानं परार्थानुमानम्। न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम्। अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम्। [न्या. बो. ३८]

3. प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। [न्या. द.-१-१-३२]

संशयः, शक्यप्राप्तिः, प्रयोजनं, संशयव्युदास इत्याख्यानाम् अवयवत्वं नास्तीति न्यरूरुपत् ।

२-९-१-१ प्रतिज्ञा— साध्यनिर्देशः प्रतिज्ञेति सूत्रकारः । (न्या. द. १-१-३३) प्रज्ञापनीयधर्मविशिष्टस्य धर्मिणः परिग्रहवचनं प्रतिज्ञा । यथा - अनित्यः शब्दः इति (न्या. भा. ५१३) । शिवादित्यस्तु साध्यविशिष्टपक्षवचनं प्रतिज्ञेति प्रतिज्ञामभिदधे[1] ।

साध्यत्वं हि शुद्धधर्मिणः धर्मस्य वा द्वयोर्वा स्वतन्त्रयोः, धर्मिविशिष्टस्य धर्मस्य वा नोपपद्यत इति धर्मविशिष्टो धर्मी साध्य इति अभ्युपगन्तव्यम् । तस्य निर्देश एव प्रतिज्ञेति भाष्यवचनमुपोद्बलयति न्यायमञ्जरीकारः जयन्तभट्टः (न्या. म. ५७०) । साध्यवत्तया पक्षवचनं प्रतिज्ञेति दीपिकायामन्नंभट्टेन प्रावोचि ।

२-९-१-२ हेतुः—उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः (न्या. द. १-१-३४) इति गौतमोक्तं हेतुलक्षणम् । उदाहरणेन समानधर्मतया साध्यस्य धर्मस्य साधनतावचनं हेतुरित्युच्यते । यथा - उत्पत्तिधर्मकत्वात् ।

तदा उदाहरणवैधर्म्यादपि साध्यसाधनं हेतुरिति द्विविधो हेतुः यथा - अनित्यः शब्दः, उत्पत्तिधर्मकत्वात् । अनुत्पत्ति-

---

1. तत्र व्यापकवचनं प्रतिज्ञा । [स. प. ७३]

धर्मकं नित्यं दृष्टम् आत्मादय इति[1]। साधनस्य पक्षाश्रितत्वेन कथनं हेतुरिति शिवादित्यः[2]।

२-९-१-३ **उदाहरणम्**— उदाहरणं दृष्टान्त इत्यर्थान्तरम्। साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् (न्या. द. १-१-३६) इति गौतमोक्तमुदाहरणलक्षणम्। साध्यसमानधर्मतया तद्धर्मभावः यस्मिन् वर्तते स दृष्टान्तः तद्धर्मभावीत्युच्यते। यथा— "स्थाल्यादिद्रव्यम् उत्पत्तिधर्मकम् अनित्यं दृष्टमि"ति। तथा उदाहरणं चेदं द्वितीयमप्यस्ति— "तद्विपर्ययाद्वा विपरीतम्" (न्या. द. १-१-३७) इति साध्येन विरुद्धधर्मतया अतद्धर्मभावी दृष्टान्तोऽपि उदाहरणम्। यथा - अनित्यः शब्दः उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मकं नित्यम् आत्मादि इति[3] (न्या. भा. ५६५)। इदं च हेतुद्वितयम् उदाहरणद्वितयम् च अन्वयव्याप्तिव्यतिरेकव्याप्तिभेदमुपलक्ष्य प्रसक्त इत्यवगन्तव्यम्।

२-९-१-४ **उपनयः**—"उदाहरणापेक्षः तथेत्युपसंहारः न तथेति वा साध्यस्योपनयः" (न्या. द. १-१-३८) इति गौतमोक्तमुपनयलक्षणम्। उदाहरणवशात् क्रियमाण उपसंहारः एवमेवेदमिति वा नैवमिदमिति वा उपनयः। अयमप्युपनयः उदाहरणद्वैताद्भिद्यते।

---

1. तथा वैधर्म्यात्। [न्या. द. १-१-३५]
2. लिङ्गस्य पक्षधर्मत्ववचनं हेतुः। [स. प. ७३]
3. See Raghunadhacharya, S. B., "A Note on the word Pretya-Bhava", Paper presented at the Indo-Aryan Linguistics section of the *VI All India Conference of Linguists* 1976.

साधर्म्योदाहरणानुरोधं स्थाल्यादिद्रव्यस्य उत्पत्तिधर्मकस्यानित्यत्वं दृष्टम् । तथा च शब्दोऽपि उत्पत्तिधर्मकः । तत्रोत्पत्तिधर्मकत्वमुपसंह्रियते । वैधर्म्योदाहरणानुरोधम् आत्मादि द्रव्यमुत्पत्तिधर्मकं नित्यं दृष्टम् । शब्दस्तु न तथा अनुत्पत्तिधर्मक इति प्रतिषेधवशात् शब्दे उत्पत्तिधर्मकत्वमेवोपसंह्रियते । उपसंह्रियते अनेनेत्युपसंहारः (न्या. भा. ५७१) ।

२-९-१-५ निगमनम्— "हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" (न्या. द. १-१-३७) इति सूत्रकारीयं निगमनलक्षणम् । यथोदाहरणोपसंहारं प्रतिज्ञायाः पुनर्वचनं निगमनमुच्यते । तस्मात् उत्पत्तिधर्मकत्वात् अनित्यः शब्द इति । निगम्यन्ते अनेन प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम् (न्या. भा. ५७४) ।

इतरेतराऽभिसंबन्धशालिन इमे अवयवाः सम्भूयैकार्थप्रतिपादकाः[1] । एषु चावयवेषु प्रमाणसमवायः । प्रतिज्ञा - शब्दः । हेतुः - अनुमानम् । उदाहरणम् - प्रत्यक्षम् । उपनयः - उपमानम् । सर्वेषां एकार्थसमवाये सामर्थ्योपदर्शनं निगमनम् (न्या.

---

1. इतरेतराभिसम्बन्धोऽपि - असत्यां प्रतिज्ञायाम् अनाश्रया हेत्वादयः न प्रवर्तेरन् । असति हेतौ कस्य साधनभावः प्रदर्श्येत? उदाहरणे साध्ये च कस्योपसंहारः स्यात् ? कस्य चापदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति? असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत? कस्य वा साधर्म्यवशात् उपसंहारः प्रवर्तेत? उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मः नार्थं साधयेत् । निगमनाभावे च अनभिव्यक्तसम्बन्धानां प्रतिज्ञादीनाम् एकार्थेन प्रवर्तनं कथयति प्रतिपादनं कस्येति । [न्या. भा. ५७४]

मा. ४) । प्रमाणचतुष्टयरूपाः एते पञ्चावयवाः नैयायिकैः अङ्गीकृताः । यतस्ते चतुःप्रमाणवादिनः[1] ।

प्रमाणचतुष्कानुगृहीतत्वम् उक्तपूर्वाणामवयवानां जयन्तभट्टेन न्यायमञ्जर्यामप्युपपादितम् (न्या. म. ५८४-८५) । अवयवप्रयोगे च कश्चन क्रमः नैयायिकैरादृतः । विना प्रतिज्ञां हेतुः निराश्रय इति प्रथमं प्रतिज्ञायाः प्रयोगः । परस्य हेतुजिज्ञासा अस्तीति ततः हेतुवचनम् । श्रुते हेतौ व्याप्तिरस्य क्वावगतेति वक्तुम् उदाहरणप्रयोगः । तत एतादृशोऽयं हेतुः पक्षे भवेन्न वेति असिद्धताशङ्कामपाकर्तुम् उपनयवाक्यम् । एवं साध्यप्रतीतिरस्त्विति सर्वानवयवान् एकत्र समर्थयितुं निगमनवाक्यम् अन्ते प्रयोक्तव्यमिति (न्या. म. ५८५) ।

२९-२ **भाट्टसिद्धान्तः**— स्वार्थानुमानेन प्रतिपन्नस्यार्थस्य बोधनोपयिकतया प्रयुज्यमाने परार्थानुमानवाक्ये भाट्टमतानुरोधं त्रयः अवयवाः भवन्ति । प्रतिज्ञा - हेतु-उदाहरणानि अथवा, उदाहरण-उपनय-निगमनानि वेति त्र्यवयवमेव वाक्यं भाट्टानुमतम् । असूचि भाष्यकारेण शबरस्वामिनाप्येवम् - "यत् कर्म तत् फलवत्, होमोऽपि कर्म, तेनापि तत्फलवता भवितव्यम्" (शा. दी. ६४) इति । अतः अस्माभिः त्र्यवयवं वाक्यमन्यूनातिरिक्तं स्वीक्रियते (शा. दी. ६४) । यथा - "अनित्यः शब्दः, कृतकत्वात्, यत्कृतकं तदनित्यम् यथा

1. दृश्यतां किशोरनाथ झा, "नैयायिकाचार्यशङ्करमतालोचनम्", *J. G. J. K. S. V.* Vol. XXVIII, Parts 3-4, Pp. 187-195, (1972)

घटादि" इति प्रतिज्ञाहेतूदारणरूपम् । अथवा "यत्कृतकं तदनित्यम् यथा घटादि, कृतकश्च शब्दः तस्मादनित्य." इत्युदाहरणोपनयनिगमानरूपम्[1] ।

सौगताः कथयन्ति - "यो धूमवान् सोऽग्निमान्, यथा महानसः । धूमवांश्चायम् - इत्येवमुदाहरणवाक्ये उपनयवाक्ये चोक्ते सति अर्थात् सिध्यति तस्मादग्निमानिती"ति । तत्तु न समीचीनम् । साध्यांशे अध्याहारदोषप्रसङ्गात् (मा. मे. ६५) ।

अतोऽस्माभिः मध्यमम् अन्यूनानतिरिक्तं पक्षमाश्रित्य अवयवत्रयम् उक्तपूर्वमङ्गीकृतम्[2] । अवयवत्वं च अनुमानवाक्यैकदेशत्वम् । तत्र साध्यविशिष्टपक्षप्रतिपादकवाक्यत्वं प्रतिज्ञात्वम् । यथा - पर्वतो वह्निमान् इति । तृतीयान्तपञ्चम्यन्तान्यतरानुमितिप्रयोजकवाक्यत्वम् हेतुत्वम् । यथ धूमवत्वात् इति । सदृष्टान्तव्याप्तिप्रतिपादकवाक्यत्वम् उदाहरणम् । यथा -

---

1. तच्च पञ्चतयं केचित् द्वयमन्ये वयं त्रयम् ।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥ [शा. दी. ६४]

Cf *PMS.*, p. 95: The statement of the proof consists according to the Bhāṭṭa, of three statements: – 1. statement of the conclusion ("word-sound is transitory"); 2. statement of the probans or the reason ('because it is an effect); 3. statement of the major premises along with corroborative instance ('all effects are transient, e.g. the Jar').

2. प्रतिज्ञया निगमनम् हेतुनोपनयस्तथा ।
गतार्थ इति कः कुर्यात् पञ्चावयवघोषणम् ॥
तस्मात् त्र्यवयवं ब्रूमः पौनरुक्त्यासहा वयम् ।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥
तदेवं पौनरुक्त्येन तथाध्याहारदोषतः ।
तर्कबौद्धमते हित्वा वयं त्र्यवयवे स्थिताः ॥ [मा. मे. ६४-६५]

यो धूमवान् सोऽग्निमान् यथा महानस इति । व्याप्तिविशिष्टवैशिष्ट्यावगाहि पक्षप्रतिपादकवाक्यत्वमुपनयत्वम् । यथा-तथा-चायमिति । व्याप्तिविशिष्टवैशिष्ट्यहेतुकसाध्यविशिष्टपक्षप्रतिपादकवाक्यत्वं निगमनत्वम् । यथा - वह्निव्याप्यधूमवत्वात् वह्निमानिति । उपनयनिगमनयोः अथवा प्रतिज्ञाहेत्वोर्वा व्यर्थता अवश्यमभ्युपगन्तव्या । तदपेक्षामन्तरापि साध्यसिद्धेः । अतः अस्तु अवयवत्रितयमिति (भा. चि. ३०-३१) ।

२९-३ **प्राभाकरसिद्धान्तः**—प्राभाकरैः वाक्ये त्रयः अवयवाः स्वीकृताः, प्रतिज्ञा-हेतु-उदाहरणानीति[1] । इमे च अवयवाः अनुमानप्रमाणलक्षणवाक्य एव तैरेवं लक्षिताः । यथा - लक्षणस्थम् अबाधितपदं प्रतिज्ञाबोधकम् । ज्ञातसम्बन्धनियमस्येति दृष्टान्तप्रतिपादकम् । एकदेशदर्शनादिति हेतुप्रख्यापकम्[2] ।

प्रतिज्ञा खलु साध्यनिर्देशः । यथा - शब्दः नित्य इति । अनुमानस्य विषयः प्रतिज्ञावाक्येन निर्दिश्यते । हेतुहेतुमतोः व्याप्यव्यापकभावः परस्य प्रदर्शनीय इति दृष्टान्तवाक्यं प्रयुज्यते । यत्र वा सम्बन्धनियमः दृश्यते स दृष्टान्तः । यथा - महानसादिः । पर्वतो वह्निमान् धूमात् इति प्रतिज्ञाय यो यो धूमवान् स स वह्निमान्, यथा महानसादिः इति (प्र. प. २२२)

---

1. पञ्चावयवता तार्किकोक्ता न मता । प्रतिज्ञाहेतुदृष्टान्तानन्तरं धूमवांश्चायम् इत्युपनयः, तस्मादयमग्निमान् इति निगमः - द्वयं व्यर्थम् । धूमवत्वात् इत्युक्तेः धूमवांश्चायम् इति पुनरुक्तिः । तस्मादयमग्निमान् इति च पुनरुक्तिः । [न. वि. १३९] ।

2. तत्राबाधित इति प्रतिज्ञा । ज्ञातसम्बन्धनियमस्य इत्यनेन दृष्टान्तवचनम् । एकदेशदर्शनादिति हेत्वभिधानम् । तदेवं त्र्यवयवं साधनम् । (प्र. प. २२०)

सम्बन्धनियमं स्मरतः, हेतुदर्शनात् अनुमितिरुत्पद्यत इति हेतुप्रदर्शनाय हेतुवाक्यं प्रयोक्तव्यम् । यथा - वह्निमत्वे साध्ये धूमवानयमिति (प्र. प. २२२) ।

प्राभाकरमतानुरोधं हेतुदृष्टान्तयोः पौर्वापर्यनियमः नास्तीति प्रकरणपञ्चिकायां शालिकनाथः अवादीत्[1] ।

अथ नैयायिकैस्तु उपनय-निगमने च वाक्ये प्रयुज्येते । तेषामियं सरणिः पर्वतो वह्निमान्, धूमवत्वात्, यो यो धूमवान् स स वह्निमान्, यथा महानसः, तथा चायं तस्मात्तथेति । अत्र तथा चायमित्यनेन उपनयवाक्येन धूमवांश्चायमिति हेतुमत्ता बोध्यते । हेतूपनययोः अन्यतरप्रयोगेणापि साध्यसिद्धिर्भवतीति एकं फलमुद्दिश्य उभयोरुपादानं व्यर्थमिति प्राभाकरैः उपनयवाक्यं न प्रयुज्यते (प्र. प. २२३) ।

तस्मात्तथेति निगमनवाक्यम् । तस्मात् धूमवत्वात् तथा अयं पर्वतः वह्निमानिति अयमप्यंशः पूर्वोक्तहेतुबलादेव सिद्ध इति इदमपि वाक्यं निष्प्रयोजनमिति परित्यज्यते प्राभाकरैः (प्र. प. २२३) ।

अन्यैः द्विविधः दृष्टान्तः अभ्युपगतः, साधर्म्यदृष्टान्तः वैधर्म्यदृष्टान्त इति । अन्वय-व्यतिरेकदृष्टान्तयोरेव साधर्म्य-वैधर्म्यदृष्टान्ताविति व्यवहारः । तयोः साधर्म्यदृष्टान्तः प्राभा-

1. दृष्टान्तहेतुवचनयोश्च प्रयोगे क्रमनियमो नादरणीयः । एकदेशदर्शनपूर्वकादपि सम्बन्धनियमस्मरणादनन्तरं साध्यज्ञानं जायते । तथा सम्बन्धनियमस्मरणपूर्वकमपि एकदेशदर्शनम् अनुमानमुत्पादयत्येव । (प्र. प. २२३)

करैरभ्युपगम्यते । वैधर्म्यदृष्टान्तस्तु न । साधर्म्यदृष्टान्तेनैव सर्वस्यापि उपपद्यमानत्वात् । वैधर्म्यदृष्टान्तोऽपि— "यत्राग्नि-र्नास्ति तत्र धूमोऽपि नास्ति । यथाजलह्रद" इति । नच साधर्म्यदृष्टान्तमात्रेण साध्यधर्मवति हेतोः वृत्तिः अवगम्यते, न तु तदभाववतः निवृत्तिः । तादृशनिवृत्तिं विना साधनस्य साध्य-सम्बन्धनियमः अवतिष्ठते । अतः वैधर्म्यदृष्टान्तः अवश्यमुपादेय इति वाच्यम् ।

साधर्म्यदृष्टान्तेन साध्यधर्मवति साधनस्य वृत्तिमात्रम् उच्यत इति केनोक्तम् ? तेन नियतः साध्यधर्मसम्बन्धः अभिधीयते । अत एव अन्यतो निवृत्तिज्ञापनायैव वीप्सावधारण-वचनयोः प्रयोगः, यथा - यो यो धूमवान् स स वह्निमानेवेति । अतः साधर्म्यदृष्टान्तप्रयोगेणैव सम्बन्धनियमस्य गृह्यमाणत्वात् वैधर्म्यदृष्टान्ताभ्युपगमः निरर्थक एवेति (प्र. प. २२४) ।

अथ मास्तु नाम दृष्टान्तद्वयस्याङ्गीकारः । परन्तु विकल्पोऽस्तु, तुल्यकार्यत्वात् इति चेत् - न । ऋजुमार्गेणैवार्थ-सिद्धौ को हि नाम वक्रमार्गमनुधावति[1] ? साधर्म्यदृष्टान्तो हि साध्यसाधनयोः सम्बन्धावगमे ऋजुमार्गः । वैधर्म्यदृष्टान्तः वक्र इति अनयोः विकल्पः न युज्यते । उपायवैषम्यात् । अतः साधर्म्यदृष्टान्त एव प्रयोक्तव्यः न वैधर्म्यदृष्टान्त इति प्राभाकराणां परिष्कारः ।

वाक्ये अवयवत्रैविध्यम्, हेतूदारणयोः पौर्वापर्यनियमाभावः, उपनय-निगमनयोः नैरर्थक्यं, वैधर्म्यदृष्टान्तनिरासः इतीमे विषयाः

---

1. ऋजुमार्गेण सिध्यन्तं को हि वक्रेण साधयेत् । (बे. उ. ६२)

तन्त्ररहस्येऽपि पूर्ववदेव सङ्ग्रहेण समुट्टङ्किताः (त. र. ११)। एवं च इदमवगम्यते यत् - प्राभाकराश्च त्र्यवयववादिन इति।

२-९.४ समीक्षणम् — वाक्यमनुमानप्रयोगः। तत्र प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनानीति पञ्चावयवा आवश्यका इति नैयायिकानाम् अभिसन्धिः। तत्सङ्ख्यानैयत्ये दार्शनिकानाम् अभिप्रायाः भिन्नभिन्ना दरीदृश्यन्ते।

भाट्टैस्तावत् कथ्यते यत् प्रतिज्ञा-हेतु-उदाहरणरूप-मवयवत्रितयम् उत, उदाहरण-उपनय-निगमनरूपमवयवत्रय-मङ्गीक्रियताम्, कुतः समानार्थकपञ्चावयवाभ्युपगमप्रयास इति। तथैव प्रतिज्ञा-हेतु-उदाहरणरूपमवयवत्रितयमेवाङ्गीकार्यम् नातोऽधिकमावश्यकमिति प्राभाकराः प्रतिपादयन्ति। स्थूल-दृष्ट्या आद्यावयवत्रितयाङ्गीकारे नैयायिक-भाट्ट-प्राभाकराणां न किञ्चित् वैमत्यमिति वक्तुं शक्यते। प्राभाकरैस्तावत् अन्याङ्गीकृतः वैधर्म्यदृष्टान्तः नाभ्युपगतः। किन्तु साग्रहं निरस्तः।

प्रथमावयवत्रितयाङ्गीकारावधि नैयायिकमतमेव मीमांसकैः अङ्गीकृतम्। किन्तु बहुष्वंशेषु नैयायिकेभ्यः भाट्टाः प्राभाकराश्च विभिन्नं पन्थानमाश्रयन्ते। अतः अत्र विषये मीमांसकैः नैयायिकमतं सर्वांशेन नानुसृतमित्येव वक्तव्यम्।

त्रिष्वप्येतेषु मतेषु नैयायिकमतमेव युक्तिसहमिति तदेवोचितमित्युत्पश्यामः। तथा हि - अवयवा इमे इतरेतराभिसम्बन्धशालिनः सम्भूयैकार्थप्रतिपादका इति नैयायिकानां राद्धान्तः। तैरेतेष्ववयवेषु प्रमाणसमवायः प्रत्यपादि। यतस्ते प्रमाण-

चतुष्कवादिनः अवयवैरप्येभिः प्रमाणचतुष्टयानुगृहीतैः निगमन-द्वारा चैकार्थसमवाये सामर्थ्यं प्रदर्श्यत इति तेषां मनीषा ।

भाट्टैस्तावत् पञ्चावयवाः अङ्गीकृताः । किन्तु पूर्वोक्त-त्रितयस्यैव वाक्याङ्गत्वं तैरभ्युपागामि । प्रथमतस्तैरपि पञ्चाना-मप्यवयवानां वाक्याङ्गत्वम् अभ्युपगतं स्यात् । किन्तु गच्छति काले नव्यैः अवयवत्रयवादः उत्थापितः भवेत् । यतस्तैः प्रकारा-न्तरेण पञ्चावयवाः अङ्गीकृताः । सोऽयम् अवयवत्रयवादः अद्यावधि भाट्टैः प्रमाणतया स्वीक्रियते । प्राभाकरैस्तु त्रयः एव अवयवा अङ्गीकृताः । भाट्टानां, प्राभाकराणां च अवय-वेषु पौर्वापर्यनियमः नाभ्युपगतः, यश्च नैयायिकैः ऊरीक्रियते ।

भाट्टैः परामर्शस्य अनुमितिकारणत्वम् अनभ्युपगच्छद्भिः परार्थानुमाने तदर्थबोधकस्य उपनयस्याङ्गीकारोऽपि न घटते । अतः सर्वथा नैयायिकमतमेव सुस्थमिति विभाव्यते । भाट्टै-रुपदर्शिता व्यर्थता न लोकानुभवसाक्षिणी । तथैव प्राभाकरैः वैधर्म्यदृष्टान्तस्य अनङ्गीकारोऽपि न युज्यते । साधर्म्यदृष्टा-न्तेन सर्वस्याप्यनुपपद्यमानत्वात् ॥



## २-१० हेत्वाभासविचारः

२-१०-१ न्यायसिद्धान्तः— हेत्वाभासपदमिदं न्यायसूत्रकारेण गौतमेनैव प्रथमतः प्रयुक्तं दरीदृश्यते । यथा - सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासा इति पञ्च-विधान् हेत्वाभासान् स निरूपयति स्म[1] । अनन्ता इमे हेत्वा-भासाः तत्तत्स्थलभेदेन । अथापि प्रधानविभागः पञ्चधेति प्रति-पादयितुमत्र सूत्रकृता कण्ठरवेणैव पञ्चत्वमुक्तम् ।

यद्यपि कणादेन त्रयः हेत्वाभासाः अनपदेशपदेन वैशे-षिकदर्शने प्रतिपादिताः[2] । अथापि शिष्टयोरङ्गीकारे काणा-दानां न विप्रतिपत्तिरिति वैशेषिकसूत्रोपस्कारात् अवगम्यते[3] ।

जयन्तभट्टस्तु न्यायकलिकायामेवमाह–"अहेतवो हेतुवदा-भासमानाः हेत्वाभासाः । हेतोः पञ्च लक्षणानि पक्षधर्मत्वादीनि उक्तानि । तेषामेकैकापाये तत्र हेत्वाभासा भवन्ति । असिद्ध-विरुद्ध-अनैकान्तिक-कालात्ययापदिष्ट-प्रकरणसमाः" (न्या. क. १४) इति । यद्यपि प्रशस्तपादाचार्यैः विरुद्धासिद्धसन्दिग्धेभ्यः

---

1. सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता-हेत्वाभासाः । [न्या. द. १-२-४]
2. अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः । [वै. द. ३-१-५]
3. वृत्तिकारस्तु "अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः" इति सूत्रस्थ-चकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थतामाह । तेन सव्यभिचारविरुद्धप्रकरण-समसाध्यसमातीतकालाः पञ्च हेत्वाभासा इति गौतमीयमेव मतमनुधावति । [वै. उ. १८]

भिन्नतया अनध्यवसितनामानं हेत्वाभासमङ्गीकरोति[1]। वस्तुतस्तु सः असाधारणानैकान्तिक एवान्तर्भवतीति विज्ञेयम्। शिवादित्येनापि षष्ठः अनध्यवसिताख्यः हेत्वाभास उररीकृतः[2]।

स्वार्थ-परार्थभेदेन द्विधा भिन्नस्य हेतुपदवाच्यस्य लिङ्गस्य अङ्गानि पञ्च प्रतिपादितानि सप्तपदार्थ्यां शिवादित्येन, तथैव तर्कामृते जगदीशेन च (तर्का. १८), येषां वा अङ्गानां लोपे आभासविषयाणि लिङ्गानि भवेयुः[3]। सर्वदेवसूरिणा प्रमाण-मञ्जर्यां लिङ्गाभासा इति व्यवहृता इमे हेत्वाभासाः[4]।

इदं च हेत्वाभासानां सामान्यलक्षणम् - लौकिकसंनिकर्षा-जन्यदोषविशेषाजन्यतद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धा-वच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिबुद्धिं प्रति तद्धर्मावच्छिन्न-विषयतानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिता-काभाववत्ताप्रकारताशालि अनाहार्याप्रामाण्यज्ञानानास्कन्दित-निश्चयः, तादृशाभावव्याप्यवत्तानिश्चयश्च प्रतिबन्धक इति।

---

1. अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥
विपरीतमतो यत्स्यात् एकेन द्वितयेन वा।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्॥ [प्र. भा.]

2. तदाभासाः - असिद्ध-विरुद्ध अनैकान्तिक-अनध्यवसित-कालात्ययापदिष्ट-प्रकरणसमाः। [स. प. ३३]

3. उभयांगानि पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद् व्यावृत्तिः, अबाधित-विषयत्वम्, असत्प्रतिपक्षं चेति। [तत्रैव ६२]

4. लिङ्गलक्षणरहिता लिङ्गाभिमानविषया लिङ्गाभासाः। [प्र. म. १०]

तर्ककौमुद्यां लौगाक्षिभास्करेण हेत्वाभासाः पञ्चविधा इति । सूत्रकारोक्त एव मार्गोऽनुसृतः[1] । कारिकावल्यां विश्वनाथेनापि तथैव पञ्च हेत्वाभासाः अङ्गीकृता.[2] । रघुनाथेन पदार्थरत्नमालायामपि पञ्च हेत्वाभासाः प्रतिपादिताः[3] ।

| हेत्वाभासोत्पत्तिः | | |
|---|---|---|
| १ पक्षधर्मत्वाभावे | आश्रयासिद्धः<br>स्वरूपासिद्ध. | असिद्धः |
| २ सपक्षसत्त्वाभावे | असाधारणः<br>अनुपसंहारी | सव्यभिचारः |
| ३ विपक्षासत्त्वाभावे | व्याप्यत्वासिद्धः<br>विरुद्धः<br>साधारणः | |
| ४ अबाधितविषयत्वाभावे | बाधः | |
| ५ असत्प्रतिपक्षत्वाभावे | सत्प्रतिपक्षः | |

1. अथ हेत्वाभासाः । अनुमितितत्करणान्यतरप्रतिबन्धज्ञानविषयधर्मः हेत्वाभासत्वोपाधिः । तद्वान् हेत्वाभासः । ते चानैकान्तिक-विरुद्ध-सत्प्रतिपक्ष-असिद्ध बाधिताः पञ्च । [त. कौ. ११]

2. अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ।। [कारि. ७१]

3. अनुमितिकारणविघटकज्ञानविषया हेत्वाभासाः । ते च असिद्ध-विरुद्ध-अनैकान्तिक-प्रकरणसम-कालात्ययापदिष्टाः पञ्चैव । [प. र. मा. ५५]

२·१०·१-१ सव्यभिचारः—एकत्र नियमेन अनवस्थितिः व्यभिचार उच्यते । तया सह वर्तत इति सव्यभिचारः । अत एव गौतमेनापि सव्यभिचारः अनैकान्तिकरूपतया अभिवर्णितः[1] । अस्येदमुदाहरणम् - नित्यः शब्दः अस्पर्शत्वात् । कुम्भश्च स्पर्शवान् अनित्यः दृश्यते । शब्दः न तथा, स्पर्शवान् । अतः अस्पर्शत्वात् नित्यः शब्दः इति (न्या. भा. ६४२) ।

अत्र स्पर्शवत्त्वानित्यत्वे साध्यसाधनरूपे न भवतः । स्पर्शवानप्यणुः नित्य एवेति । आत्मादौ च अस्पर्शत्वादिति हेतुः नित्यत्वं व्यभिचरति । बुद्धिश्चास्पर्शा अनित्या दृष्टा । अतः उभयविधदृष्टान्तयोरपि व्यभिचारात् नास्ति साध्य-साधनभाव इति हेत्वाभासोऽयम्[2] ।

एकस्मिन्नन्ते नियत ऐकान्तिकः, साध्यसाधकः । अर्थात् पक्षे सपक्षे च वर्तमानः । न ऐकान्तिकः अनैकान्तिकः । न केवलं पक्षे सपक्षे च किन्तु विपक्षे च वर्तमानः (न्या. वा. ६४२) ।

सव्यभिचारोऽयं त्रिविधः — साधारणासाधारणानुपसंहारिभेदेन । तत्र सपक्षविपक्षवृत्तिः साधारणः सव्यभिचारः; यथा — 'पर्वतो वह्निमान् सत्वात्' इति । सपक्षविपक्षव्यावृत्तः असाधारणः; यथा— 'पृथिवी मिथ्या गन्धवत्वात्' इति ।

---

1. अनैकान्तिकः सव्यभिचारः [न्या. द. १-२-५] ।
2. See *Varadachari, V.* "Anaikāntika Fallacy in the Nyāya-Vaiśeṣika schools," *S. V. U. O. R. J.* vol. IV. pp. 1-4, (1961).

अन्वयव्यतिरेकदृष्टान्तरहितः अनुपसंहारी; यथा – 'सर्वं तुच्छं प्रमेयत्वात्' इति[1]।

२–१०-१-२ विरुद्धः— स्वसिद्धान्तविरुद्धार्थसाधकः हेतुः विरुद्धः[2]। अभ्युपगतं सिद्धान्तमेव विरुणद्धि अयमिति विरुद्धो नाम हेत्वाभासोऽयम्। वार्तिककारः अन्यदपि लक्षणं विरुद्धस्य अभिदधौ। प्रतिज्ञाविरोधी हेतुः विरुद्ध इति[3]।

साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वमिति फलितार्थः[4]। यथा - शब्दो नित्यः कृतकत्वात् इति। अत्र कृतकत्वरूपः हेतुः नित्यत्वाभावेन अनित्यत्वेन व्याप्त इति साध्याभावव्याप्तत्वं हेतोः सम्भवतीति विरुद्धोऽयं हेत्वाभासः[5]।

२-१०-१-३ सत्प्रतिपक्षः—अयं गौतमेन प्रकरणसमपदेन व्यवहृतः। प्रकरणं नाम पक्षप्रतिपक्षौ विमर्शाधिष्ठानौ अनिर्णीतार्थौ। तेन प्रकरणेन समः प्रकरणसमः[6]। सत्प्रतिपक्षापरपर्यायः हेत्वाभासोऽयम्। यथा -

---

1. आद्यः साधारणस्तु स्यात् असाधारणकोऽपरः।
तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत्॥
यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः।
यस्तूभयस्माद् व्यावृत्तः स चासाधारणो मतः॥
तथैवानुपसंहारी केवलान्वयिपक्षकः। [कारि. ७२-७४]
2. सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः। [न्या. द. १–२-५]
अभ्युपगतार्थविरोधी विरुद्धः। [न्या. वा. ६४७]
3. प्रतिज्ञाहेत्वोर्वा विरोधः। यो वा प्रतिज्ञाहेत्वोः विरोधः, स विरुद्धहेत्वाभासः। [न्या. वा. ६४८]
4. यस्साध्यवति नैवास्ति स विरुद्ध उदाहृतः। [कारि. ७४]
5. दृश्यतां किशोरनाथ झा, "विरोध्यप्रतीतौ विरोधाप्रतीतिः", *J.G.J.K.S.V.* Vol. XXIX. 1973, pp. 11-18
6. यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः। [न्या. द. १-२-७]

क) शब्दः नित्यः श्रावणत्वात् । शब्दत्ववत् ।

ख) शब्दः अनित्यः कार्यत्वात् । घटवत् ।

इति । यस्य हेतोः साध्याभावसाधकः अपरः हेतुः विद्यते स सत्प्रतिपक्षो भवति[1] ।

बौद्धादयः अस्य पृथक् हेत्वाभासत्वं नेच्छन्ति । न चास्य विरुद्धेऽन्तर्भावो भवितुमर्हति । विरुद्धसत्प्रतिपक्षयोः भेदस्य स्पष्टत्वात् । इदंप्रथमतया तात्पर्यटीकापरिशुद्धौ उदयनाचार्येण प्रकरणसमोऽयं सत्प्रतिपक्षपदेन व्यवाहारि । किंच तं सत्प्रतिपक्षं त्रिधा विभज्यापि स समुपदर्शयामास तत्रैवम्— सिद्धोभयहेतुकं, असिद्धोभयहेतुकं, सिद्धसाध्योभयहेतुकं चेति[2] ।

२–१०-१-४ असिद्धः— गौतमेनायं साध्यसम इति लक्षितः[3] । साध्यवत् यत्र हेतुरपि साधनीय एव भवति स साध्यसम इत्युच्यते[4] । वार्तिककारेण असिद्धत्रैविध्यमेवम् अभ्युपगतम्—प्रज्ञापनीयधर्मसमानः, आश्रयासिद्धः, अन्यथासिद्धश्चेति[5] । टीका-

---

1. विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ।
श्रावणत्वादितो नित्योऽनित्यो जन्यत्वहेतुभिः ॥ [कारि. ७७]
स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः । [मुक्ता. २८]
2. तच्च सत्प्रतिपक्षत्वं सिद्धोभयहेतुकम्, असिद्धोभयहेतुकं सिद्धसाध्योभयहेतुकं च । [परि. ६५५]
3. साध्याविशिष्टः साध्यत्वात् साध्यसमः । [न्या. द. १-२-८ ]
4. साध्येनाविशिष्टः यः साधनधर्मः साध्यवत् प्रज्ञापयितव्यः स साध्यसमो हेत्वाभासः । [न्या. वा. ६५७]
5. सोऽयमसिद्धस्त्रेधा भवति । प्रज्ञापनीयधर्मसमानः, आश्रयासिद्धः, अन्यथासिद्धश्चेति । [तत्रैव. ६५८]

कार: वाचस्पतिमिश्रः असिद्धिमेवं व्यभजत्। असिद्धिः प्रथमतो द्विविधा। स्वरूपतः असिद्धिः, हेतुत्वेन चासिद्धिरिति। स्वरूपतः असिद्धिः पुनः द्वेधा वक्तव्या। स्वतः, आश्रयासिद्ध्या च। वार्तिककारोक्ता अन्यथासिद्धिस्तु साध्यसमे अन्तर्भावमर्हति इति[1]।

नव्यनैयायिकैस्तु असिद्धः आश्रयासिद्ध-स्वरूपासिद्ध-व्याप्यत्वासिद्धभेदेन त्रिधा अभ्युपागामि[2]।

क) आश्रयासिद्धः - 'गगनारविन्दं सुरभि, अरविन्दत्वात् सरोजारविन्दवत्'। अयमेव पक्षासिद्धिरित्युच्यते।

ख) स्वरूपासिद्धः - 'शब्दो गुणः चाक्षुषत्वात्'।

ग) व्याप्यत्वासिद्धः - 'सोपाधिकः हेतुः व्याप्यत्वासिद्ध इत्युच्यते। यथा - 'पर्वतो धूमवान् वह्नेः' इत्यत्र आर्द्रेन्धन-संयोगः उपाधिः। सोपाधिकत्वात् वह्निरूपः हेतुः व्याप्यत्वासिद्ध इत्युच्यते।

उपाधिः साध्यव्यापकत्वे सति साधनाव्यापकत्वम्। अयं हि चतुर्विधः-केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति (दीपिका ४७)।

---

1. सेयं हेतोरसिद्धिः द्विधा - स्वरूपतो हेतुत्वेन च। स्वरूपतोऽपि द्वेधा, स्वत आश्रयासिद्ध्या च। --- अन्यथासिद्धस्य तु तद्विशेषणत्वायोगिनः हेतुत्वासिद्धिमात्रेण साध्यसमेऽन्तर्भाव इति। [ता. टी. ६५९]
2. आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ। व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा॥ [कारि. ७५]

२-१०-१-५ बाधः—सूत्रकृता गौतमेनायं कालातीत इत्यभिहितः[1]। परिशुद्धौ उदयनाचार्येण बाधोऽयं दशधा प्रदर्शितः। तत्र बाधस्यावश्याङ्गीकर्तव्यता तेन सुष्ठु प्रतिपादिता[2]।

अर्वाचीनैस्तु साध्यशून्यपक्षत्वं बाध इत्युक्तम्[3]। यस्य हेतोः साध्याभावः अन्येन प्रमाणेन निश्चितः स बाधितः। यथा· 'वह्निरनुष्णः द्रव्यत्वात्' इति। अत्र अनुष्णत्वरूपसाध्यस्याभावः उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बाधोऽयम्। अयं च ग्राह्याभावनिश्चयरूप इति अनुमितिप्रतिबन्धकः भवति। एवं सव्यभिचार-विरुद्ध·सत्प्रतिपक्ष-असिद्ध·बाधभेदेन पञ्च हेत्वाभासाः नैयायिकैः अभ्युपगताः[4]।

२-१०·२ भाट्टसिद्धान्तः—भाट्टैरपि हेत्वाभासपदं द्विधा व्याख्यायते। हेतोराभासाः, हेत्वाभासाः अथवा हेतुवदाभासन्त इति हेत्वाभासा इति[5]।

यादृशविशिष्टविषयत्वेन यथार्थज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्वं हेत्वाभासत्वमिति गागाभट्टः (भा. चि. ३१)।

---

1. कालात्ययापदिष्टः कालातीतः [न्या. सू. १-२-९]
2. एवं नवविधोऽयं एकविधोपमानबाधेन संक्षेपतो दशविध इति [परि. ६६८]
3. साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते॥ [कारि. ७८]
4. रघुनाथाचार्यः, एस्. बि. "दिङ्नागोक्तहेत्वाभासविमर्शः" अखिलभारतीयप्राच्यविद्यासम्मेलने पण्डितपरिषदि धारवारनगरे पठितं पत्रम् १९७६
5. अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानप्रकारो हेतुनिष्ठदोषो हेत्वाभासः। —· यद्वा तादृशप्रमाविषयत्वम्। तेन दुष्टो हेतुः हेत्वाभासः। [भा. चि. १३]

हेत्वाभासविभागे भाट्टेषु मतभेदो दरीदृश्यते । हेतुदोषास्त्रय असिद्धि, अनैकान्तिकत्वं, बाधकत्वमिति पार्थसारथिमिश्रः शस्त्रदीपिकायां प्रत्यपीपदत्[1] । अत्रैवं हेतुदोषा इति उक्तपूर्वाणां त्रयाणां सङ्कीर्तनेन हेत्वाभासपदस्य हेतुदोषपरतया व्याख्यान एवास्य नैर्भर्यमिति प्रतीयते ।

गागाभट्टस्तु व्याख्याद्वयमप्युपन्यस्य दुष्टहेतुपरतायामेव नैर्भर्यं वहन्निव असिद्ध-अनैकान्तिक-बाधकभेदेन व्यभजत्[2] । तदनु अवान्तरविभागे पुनः दोषपरतयैव हेत्वाभासान् निर्दिदेश[3] । विभागे त्वयं पार्थसारथिमिश्रमेव अनुसरति उक्तपूर्वत्रित्वाङ्गीकारेण ।

मनमेयोदयकारः नारायणस्तु-असिद्ध विरुद्ध-अनैकान्तिक-साधारणभेदेन हेत्वाभासचतुष्टयं अङ्गीकरोति[4] । इयान् विशेषः यत् - नामनिर्देशे अवान्तरविभागे चायं असिद्धविरुद्धादिरूपेण दुष्टहेतुपरतयैव तान् कीर्तयतीति (मा. मे. ७०) ।

२–१०-२-१ **असिद्धिः**— व्याप्तिमत. हेतोः पक्षसम्बधितया अवगमः सिद्धिरित्युच्यते । तेषु हेतुव्याप्तिपक्षसम्बन्धज्ञानेषु अन्यतमेनांशेन यदि हीयते तर्हि असिद्धि.[5] ।

---

1. असिद्धिः, अनैकान्तिकत्वं बाधकत्वं चेति त्रयो हेतुदोषाः [शा.दी. ६४]
2. ते त्रयः असिद्धानैकान्तिकबाधकाः [भा. चि. ३१]
3. हेत्वप्रसिद्धिः स्वरूपासिद्धिः [तत्रैव ३१]
4. असिद्धो विरुद्धोऽनैकान्तिकोऽसाधारणश्चेति चत्वारः तदाभासाः [मा. मे. ६९]
5. हेतोर्व्याप्तिमतः पक्षसम्बन्धित्वेन वेदनम् ।
सिद्धिरित्युच्यते हेतुसम्पूर्तिः तावतैव हि ॥
तेषामेकतमांशस्याप्यभावे स्यादसिद्धता ।
हेतोर्व्याप्तेश्च पक्षस्य सम्बन्धस्य ग्रहस्य च ॥ [तत्रैव ६९]

तत्रासिद्धिः स्वरूपासिद्धि-सम्बन्धासिद्धि-व्यतिरेकासिद्धि-आश्रयासिद्धि-व्याप्यत्वासिद्धिभेदेन पञ्चविधेति पार्थसारथिमिश्रगागाभट्टौ। (शा. दी. ६४-६६, भा. चि. ३१)। मानमेयोदयकारः नारायणस्तु स्वरूपासिद्ध-व्याप्यत्वासिद्ध-आश्रयासिद्ध-सम्बन्धासिद्ध-भागासिद्ध- (व्याप्त्यसिद्ध) विशेषणासिद्ध-विशेष्यासिद्ध-व्यर्थविशेषणासिद्ध-व्यर्थविशेष्यासिद्ध-व्यधिकरणासिद्ध-व्यतिरेकासिद्ध-अज्ञानासिद्ध- (संदिग्धासिद्ध) -व्याप्त्यज्ञानासिद्ध-अन्यतरासिद्ध-उभयासिद्धभेदेन पञ्चदशविधान् असिद्धभेदान् निरदिशत्। (मा. मे. ७०-७२)

तत्र विशेषणासिद्ध-विशेष्यासिद्धभेदेन स्वरूपासिद्धः द्विविधः (मा. मे. ७०)। हेतुस्वरूपस्यासिद्धौ स्वरूपासिद्धः। यथा - 'बुद्धो धर्माधर्मवेदी सर्वज्ञत्वात्' (शा. दी. ६४) इति। हेतोः पक्षसम्बधाभावे सम्बन्धासिद्धः। यथा - 'शब्दोऽनित्यः चाक्षुषत्वात्' (मा. मे. ७१) इति। यस्य हेतोः पक्षैकदेशे सम्बन्धः नास्ति स भागासिद्धः। यथा 'वेदाः पौरुषेयाः उपाख्यानात्मकत्वात्' (मा. मे. ७१) इति। अयमेव व्याप्त्यसिद्ध इत्यप्युच्यते। विशेषणस्य पक्षसम्बन्धाभावे विशेषणासिद्धः। यथा - 'अनित्यं गगनम्; जन्यत्वे सति द्रव्यत्वात्' (मा. मे. ७१) इति। विशेष्यस्य पक्षसम्बन्धाभावे विशेष्यासिद्धः। यथा-'अनित्यं गगनम् द्रव्यत्वे सति जन्यत्वात्' (मा. मे. ७१) इति। यत्र वा विशेषणं व्यावर्त्याभावात् व्यर्थं सम्बन्धानर्हं च भवेत् स व्यर्थविशेषणासिद्धः। यथा - 'घटोऽनित्यः द्रव्यत्वे सति कृतकत्वात्' (मा. मे. ७१) इति। यत्र वा विशेष्यं व्यावर्त्यविर-

हात् व्यर्थं सम्बन्धानर्हं च भवति स व्यर्थविशेष्यासिद्धः । यथा - 'घटोऽनित्यः कृतकत्वे सति द्रव्यत्वात्' (मा. मे ७१) इति । यत्र हेतोः पक्षसम्बन्धित्वेन न प्रयोगः, अपि तु आश्रयान्तरसम्बन्धितया, सः व्यधिकरणासिद्धः । यथा - 'गोशब्दः सास्नादिमद्वचनः गोशब्दत्वात्' (भा. चि. ३२) इति । स्वरूपाद्यज्ञाने अज्ञानासिद्धः । स एव सन्दिग्धासिद्ध इत्यप्युच्यते । यथा - 'देवदत्तो बहुधनो भविष्यति तद्धेतुभूतादृष्टशालित्वात्' (मा. मे. ७२) इति । 'अग्निमान् पर्वतः धूमवत्वात्' इति प्रयोगे व्याप्तेरप्रदर्शितत्वात् व्याप्त्यज्ञानासिद्धः ।

एते च असिद्धप्रभेदाः अन्यतरस्य वादिनो यदा असिद्धा भवन्ति तदा अन्यतरासिद्धा इत्यभिधीयन्ते । यथा - 'बुद्धो मोहरहित सर्वज्ञत्वात्' (मा. मे. ७२) इति । वादिनोः उभयोरप्यसिद्धौ उभयासिद्धा इत्युच्यन्ते । यथा 'शशो हिंस्रः विषाणित्वात्' (मा. मे. ७३) इति ।

२-१०-२-२ अनैकान्तिकः—पार्थसारथिमिश्रः शास्त्रदीपिकायां द्विधा अनैकान्तिकत्वं व्यभजत् । सव्यभिचारं सप्रतिसाधनं चेति । सव्यभिचारो यथा - 'नित्यः शब्दः अमूर्तत्वात्' इति । अनित्येषु कर्मादिष्वपि अमूर्तत्वस्य सम्भवात् व्यभिचारि अमूर्तत्वम् । सप्रतिसाधनो यथा - 'अप्रत्यक्षो वायुः द्रव्यत्वे सति अरूपत्वात्' । 'प्रत्यक्षो वायुः; महत्वे सति स्पर्शवत्वात्' इति । अत्र सप्रतिसाधनत्वात् उभयमपि निर्णयाजनकं संशयनिमित्तं भवति । उभयोरपि अगृह्यमाणबलाबलत्वात् (शा. दी. ६५-६६) । अयमेव निरुद्धाव्यभिचारीत्युच्यते । यथा - कुमारिल-

भट्टैः श्लोकवार्तिके अभिहिताः साधारणासाधारणविरुद्धाव्यभिचारिभेदात् त्रिविधा अनैकान्तिका.[1]।

मानमेयोदये नारायणस्तु विपक्षेऽपि वर्तमानः सव्यभिचारः अनैकान्तिक इत्यलिलक्षत्। तन्मतानुरोधं साधारण एवानैकान्तिकः भवितुमर्हति। यथा - 'अनित्यः शब्दः प्रमेयत्वात्' (मा. मे. ७५) इति। यत्र विपक्षवृत्तित्वं सन्दिग्धं स सन्दिग्धानैकान्तिक इत्युच्यते। यथा - 'क्षणिका भावाः सत्त्वात् (मा. मे. ७६) इति। सपक्षे वर्तमानत्वे सति पक्षमात्रवृत्तित्वं असाधारणत्वम्। यथा - 'नित्या भूः गन्धवत्त्वात्' (मा. मे. ७६) इति। यथा अन्वयस्य विपक्षेऽपि वर्तनात् व्यभिचारित्वं, तथा व्यतिरेकस्यापि स्वस्थानभूतविपक्षमतिक्रम्य सर्वसपक्षवृत्तित्वमपि व्यभिचारावहमिति अस्यानैकान्तिकत्वम्। असाधारणस्य अनैकान्तिकत्वे नारायणस्य न नैर्भर्यम्[2]।

२-१० २-३ **बाधकः**—साध्याभावसाधकः बाधक इत्युच्यते (भा. चि. ३२)। अयं च विरुद्ध इति नैयायिकैः, मानमेयोदयकर्त्रा नारायणेन च व्यवहृतः। केचित्तस्य षड्विधत्वं, केचिच्चतुर्विधत्वं, अन्ये च एकविधत्वमुपपादयन्ति। वस्तुतः अवान्तर-

---

1. तत्साध्ये तदभावे च द्वाभ्यां व्यावृत्त एव च।
द्वौ विरुद्धार्थसम्बद्धौ यावेकत्रैकदेशिनि॥ [श्लो. वा. ३७३-७४]

2. सत्यं किन्त्वन्वयस्यैव स्वस्थानादतिलङ्घनम्।
व्यभिचारतया ख्यातं क्लिष्टस्त्वदुदितः क्रमः॥
तेन साधारणस्यैव व्यभिचारित्वमीरितम्।
हेत्वाभासान्तरत्वेन चासाधारण ईरितः॥ (मा. मे. ७७)

भेदस्यानुपयोगात् अयमेकविध एवेति, यद्यवान्तरभेदः अवश्यं वक्तव्यस्तर्हि धर्मस्वरूपबाधः, धर्मविशेषबाध इति द्वैविध्यमङ्गीकार्यमिति पार्थसारथिमिश्रः प्रोवाच (शा. दी. ६६)। गागाभट्टस्तु एकविधत्वमेवास्य अभिप्रैति (भा. चि. ३२)।

मानमेयोदयेऽपि अयं नैयायिकानामिव विरुद्ध इत्येव व्यावह्रियमाणः द्विधा विभक्तः। स्वरूपविरुद्धः, विशेषविरुद्ध इति। स्वरूपविरुद्धो यथा – 'शब्दः नित्यः कृतकत्वात्' इति। विशेषविरुद्धो यथा – 'क्षित्यादिकं सकर्तृकम् कार्यत्वात् घटवत्' (मा. मे. ७४) इति। एवं वार्तिक-शास्त्रदीपिका-भाट्टचिन्तामणिकाराणां मते असिद्ध-अनैकान्तिक-बाधका इति त्रयः हेत्वाभासाः; मानमेयोदयकारमते तु असाधारणसहितास्ते चत्वार इति तद्ग्रन्थपरिशीलनेन स्पष्टमवगच्छामः।

२–१०·३ प्राभाकरसिद्धान्तः— बृहतीव्याख्याने ऋजुविमलापञ्चिकायां शालिकनाथेन साधारण-असाधारण-विरुद्धाख्याः त्रयः हेत्वाभासाः अनुमानलक्षणघटकज्ञातसम्बन्धपदसार्थक्यनिरूपणव्याजेन प्रतिपादिताः[1]। प्रकरणपञ्चिकायां तेनैव असिद्ध-असाधारण-साधारण-बाधितविषया इति चत्वारः हेत्वाभासाः निरूपिताः[2]। एवं च द्वयोर्मेलनेन इदमस्माभिर्ज्ञायते यत् - प्राभा-

---

1. अत्र च ज्ञातसम्बन्धशब्देन असाधारण-साधारण-विरुद्धहेतवः व्युदस्ताः [बृहती. प. ९६]।

2. हेतोर्दूषणमसिद्धत्वं (स्वरूपासिद्धत्वम् एकदेशासिद्धत्वं च) असाधारणत्वं साधारणत्वं बाधितविषयत्वं चेति। [प्र. प. २२५]

करमते असिद्ध-असाधारण-साधारण-विरुद्ध-बाधाः पञ्चहेत्वाभासाः अङ्गीक्रियन्त इति ।

एतेषां मते सत्प्रतिपक्षस्य न हेत्वाभासत्वम् । प्रबलदुर्बलयोर्विरोधे सति प्रबलापहृतविषयः दुर्बलः आत्मानमेव न लभते । नहि नाम तुल्यबलयोः कुत्रचिद्विरोधः घटते । अतः न सत्प्रतिपक्षस्य दूषणान्तरत्वम् (प्र. प. २२७) ।

२-१०-४ समीक्षणम्— हेत्वाभासपदमिदं नैयायिकैः भाट्टैश्च स्वग्रन्थेषु असकृत् प्रयुज्यते । प्राभाकरास्तु न कुत्रापि तत्प्रसङ्गे हेत्वाभासपदं प्रयुञ्जते । किन्तु हेतुदूषणमित्येव । अन्यत्र च तैः दुष्टहेतुपर्यायतया केवलहेतुपदमपि प्रयुक्तमिति ऋजुविमलापञ्चिकातः अस्माभिरवगम्यते (बृहती प. ९६) । नैयायिकैः भाट्टैश्च हेत्वाभासपदं हेतुदोषपरतया, दुष्टहेतुपरतया च अर्थद्वये प्रायोजि इति तत्तद्ग्रन्थदर्शनेन अवगच्छामः । प्राभाकराणामपि इदमर्थद्वयमिष्टमेव ।

इयान् विशेषः यत् हेत्वाभासस्य कैश्चित् हेतुदोषपरतायां, अन्यैश्च दुष्टहेतुपरतयां च नैर्भर्यं तत्तदभीष्टानुरोधं प्रतिसिद्धान्तं प्रादर्शि इति । तत्र कैः कैः कुत्र कुत्र वा नैर्भर्यं प्रदर्शितमिति तु तत्तत्सिद्धान्ते प्रागेवास्माभिः स्पष्ट्यकारीति नात्र बहु तन्यते ।

हेत्वाभासविभागावसरे नैयायिकानुसृतं पन्थानमुत्सृज्य भाट्टाः प्राभाकराश्च विभिन्नेन पथा क्वचित् संचरन्ति । तथा

हि - सत्प्रतिपक्षः प्राभाकरैः नाङ्गीकृतः । तस्य प्रत्येकं हेत्वाभासत्वं भाट्टैर्नाङ्गीकृतम्, किन्तु अनैकान्तिके तस्यान्तर्भाव उक्तः । भाट्टैः बाधकमिति पदं विरुद्धपर्यायतया प्रयुक्तम् । न तु बाधपर्यायतया । प्रकरणपञ्चिकायां बाधितविषयत्वरूपप्रयोगदर्शनात् । यत् कैश्चित् विमर्शकैः बाधितपदेन विरुद्धमेवोच्यत इति उक्तं, तन्न युक्तिसहमिति अवधारयामः । वस्तुतत्वे विचार्यमाणे प्राभाकरैश्च बाधितविषयादिप्रसङ्गेन न विरुद्धरूपः हेत्वाभासः, किन्तु बाधरूपः हेत्वाभास एव अभ्युपगत इति निर्णय एव उचिततर इति प्रतिभाति । असिद्धेष्वपि तेषां परस्परं मतभेदः दरीदृश्यत इति सुदृढमवगच्छामः ।

२-१०-४-१ सव्यभिचारः— नैयायिकैरयं साधारण-असाधारण-अनुपसंहारिभेदेन त्रिविध इत्यङ्गीकृतः । भाट्टेष्वेतद्विषये मतभेदः दरीदृश्यते । पार्थसारथिमिश्रः एनं अनैकान्तिक इति व्यवहरति । तन्मतानुरोधं सव्यभिचार-सत्प्रतिसाधनभेदेन स द्विविधः (शा. दी. ६५) । अत्र शास्त्रदीपिकाव्याख्याने सिद्धान्तचन्द्रिकायां रामकृष्णः हेत्वाभासानां चातुर्विध्यं परित्यज्य वार्तिककारविरोधेन कुतः पार्थसारथिमिश्रः त्रित्वमङ्गीकृतवान् इत्यहं न जाने इत्यवादीत्[1] ।

अयं सप्रतिसाधनः नैयायिकोक्तसप्रतिपक्षात् न भिद्यते । भाट्टचिन्तामणिकारः गागाभट्टः विषयेऽस्मिन् पार्थसारथि-

---

1. स्वबुध्या ग्रन्थकारस्य यद्धेत्वाभासवर्णनम् ।
वार्तिकव्यतिरेकेण किमर्थं तन्न वेद्म्यहम् ।। [सि. च. ६६]

मिश्रमेवानुसरति । परन्तु मानमेयोदयकारः नारायण अनैकान्तिकाद् भिन्नतया असाधारणाख्यं हेत्वाभासं स्वीकुरुते[1] । अत्र अस्य गुरुः नीतितत्त्वाविर्भावकर्ता चिदानन्दपण्डितः मार्गदर्शकः (नीति. १४१) । प्राभाकरास्तु सव्यभिचारपदं वा अनैकान्तिकपदं वा अप्रयुञ्जानाः साधारणासाधारणयोः प्रत्येकं हेत्वाभासत्वमभिदधति ।

सपक्षसत्त्वाभावप्रयुक्तमसाधारणं, विपक्षसत्त्वाभावप्रयुक्तं सधारणं अन्वयव्यतिरेकदृष्टान्तरहिततया सपक्षसत्त्वाभावप्रयुक्तम् अनुपसंहारिणं च सव्यभिचारपदेन राशीकृत्य दर्शयतां नैयायिकानां मतमेव युक्तिसहमत्रेति विभावयामः । व्यभिचारबहिर्भूतानां अन्यत्र ग्रहणमित्येव सप्रतिसाधनादीनां नात्र प्रवेश उचितः ।

२-१०-४-२ विरुद्धः— अयं नैयायिकैः विरुद्ध इति, भाट्टैः बाधकमिति, तत्रापि नारायणेन विरुद्ध इति, प्राभाकरैश्च विरुद्ध इत्येव अभ्युपगतः । अतः अत्र विषये नैयायिकमतमेव भाट्टैः प्राभाकरैश्च अनुसृतमिति तर्क्यते ।

२-१०-४-३ सत्प्रतिपक्षः— नैयायिकैः पृथक् हेत्वाभासतया अङ्गीकृतोऽयं पार्थसारथिमिश्रेण सप्रतिसाधनपदेन अनैकान्तिकप्रभेदतया अभ्युपागामि । प्राभाकरैस्त्वयं नाङ्गीकृतः । नैयायिकमतानुरोधं नास्य विरोधे वा अनैकान्तिके वा अन्तर्भावः ।

---

1. तेन साधारणस्यैव व्यभिचारित्वमीरितम् ।
हेत्वाभासान्तरत्वेन चासाधारण ईरितः ॥ [मा. मे. ७७]

## सिद्धान्तभेदप्रदर्शिनी—अनुमानाधिकारे

| न्यायसिद्धान्ते | भाट्टसिद्धान्त | प्राभाकरसिद्धान्तः |
|---|---|---|
| १ व्याप्तिज्ञानं लिङ्गपरामर्शो वानुमानम् | असंनिकृष्टेऽर्थे व्याप्यदर्शनजं ज्ञानमनुमानम् | ज्ञातसम्बन्धनियमेनैकदेशेन सदिग्धैकदेशान्तरज्ञानमनुमानम् |
| २ प्राचीनमते पूर्ववत्-शेषवत्-सामान्यतोदृष्टभेदेन त्रिविधमनुमानम्; स्वार्थपरार्थभेदेन नव्यमते द्विविधम् | प्राच्यमते प्रत्यक्षतोदृष्टसम्बन्धसामान्यतोदृष्टसम्बन्धभेदेन द्विविधम्, नव्यमते स्वार्थपरार्थभेदेन द्विविधम् | प्राचीनमते भाट्टवत्; नव्यमते स्वार्थपरार्थभेदेन द्विविधम् |
| ३ साहचर्यनियमो व्याप्तिः | स्वाभाविकसम्बन्धो व्याप्तिः | निरुपाधिकसम्बन्धः व्याप्तिः |
| ४ व्याप्तिः भूयोदर्शनगम्या | तथैव | तथैव; सकृद्दर्शनगम्येति नन्दीश्वरः |
| ५ व्याप्यारोपेण व्यापकारोपस्तर्कः अनूकूलप्रतिकूलभेदेन द्विविधः | तथैव; बाधकपदेनापि तर्कव्यवहारः | अप्रतिपादितोऽपि इष्ट एव |
| ६ सिषाधयिषाविरहविशिष्टसिध्यभावः पक्षतेति प्राचीनैः; अनमित्युद्देश्यत्वं पक्षत्वमिति नव्यैश्चोक्ता सा चानुमानाङ्गम् | प्राचीनैर्नोता; नव्यैः नैयायिकवदेव | न प्रतिपादिता, अनुमानङ्गतया नाङ्गीकृतेति प्रसिद्धिः; किन्तु अङ्गीकार्यैव |
| ७ परामर्शः अनुमितिकारणम् | नोक्तः; अनुमितिकारणत्वं नास्ति | भाट्टवदेव |
| ८ अन्वयव्यतिरेकि-केवलान्वयि-केवलव्यतिरेकिभेदेन लिंगं त्रिविधम् | अन्वयव्यतिरेकि-केवलान्वयिभेदेन द्विविधम् | भाट्टवदेव |
| ९ प्रतिज्ञा-हेतु-उदाहरण-उपनयनिगमनानि पचावयवाः | प्रतिज्ञा-हेतु-उदाहरणानि वा, उदाहरण-उपन-निगमनानि वा त्रय एवावयवाः | प्रतिज्ञा-हेतु-उदाहरणानि त्रीण्येव वैधर्म्यदृष्टान्तः नास्ति |
| १० सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः | असिद्धानैकान्तिकबाधकास्त्रयः | असिद्धासाधारणविरुद्धबाधाः |

अनुमित्यनुत्पादकत्वरूपविलक्षणप्रयोजनस्यानेन साध्यमानत्वात्। अतोऽस्य वैलक्षण्यमुपपादयतां नैयायिकानां मतमेवात्र आदरमर्हति ।

२-१०-४-४ असिद्धः— आश्रयासिद्ध-स्वरूपासिद्ध-व्याप्यत्वासिद्धभेदेन त्रिविधोऽयमिति नैयायिकाः । पञ्चदशविधोऽयमिति भाट्टाः, स्वरूपासिद्ध-एकदेशासिद्धभेदेन द्विविधोऽयमिति प्राभाकराश्च प्रत्यपीपदन् । तत्र भाट्टप्राभाकरापेक्षया अन्यूनानतिरिक्तं पन्थानमनुगच्छन्ति नैयायिका इति विभाव्यते ।

२-१०-४-५ बाधः—अयञ्च भाट्टैर्नाङ्गीक्रियते । प्राभाकरैस्त्वङ्गीक्रियत इत्येव शालिकनाथपंक्तिदर्शनेनास्माभिरवगन्तुं शक्यते । यथा - बाधितविषयत्वं चेति - प्रतिज्ञादीनां अवाचकपदप्रयोगश्चेति इत्येताभ्यां प्रयोगाभ्यां बाधः नैयायिकवत् एतेषां अपि इष्ट एवेत्यवधार्यते । साध्यवत्ताग्रहप्रतिबन्धरूपविलक्षणप्रयोजनवान् बाधः नापलपितुं शक्यः (परि. ६६८) । अतः सोऽवश्यमभ्युपगन्तव्य इति नैयायिकानां नय एव प्राभाकराणामपि इष्ट इव । अत्र भाट्टाः नैयायिकेभ्यः प्राभाकरेभ्यश्च भिद्यन्ते ।

वैशेषिकरसायने च अनपदेशविभागसूत्रव्याख्यानावसरे वैशेषिकदर्शनानुरोधं हेत्वाभासत्रित्वमेव अङ्गीक्रियते इति सयुक्तिकं प्रत्यपादि । परन्तु न्यायदर्शन इवात्रापि हेत्वाभासपञ्चविधत्वकल्पनमनावश्यकम् इत्युक्ततया आद्ये पञ्चविधत्वम् एषामपि इष्टमेवेति तर्क्यते ।

एवं च हेत्वाभासविषये अनुभवसाक्षिकः नैयायिकानां विभागमार्गं एव साधीयानिति युक्तमुत्पश्यामः ॥

# तृतीयाध्यायः

## ३ उपमानाधिकारः

### ३-१ उपमानलक्षणम्

३ १-१ न्यायसिद्धान्तः — गौतमोक्तं उपमानलक्षणमिदम् - "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" (न्या. द. १-१-६) इति। प्रज्ञातस्य वस्तुनः साधर्म्यात् प्रज्ञापनीयस्य वस्तुनः प्रज्ञापनमुपमानम्। यथा - 'गौरेवं गवय' इति। गोसदृशो गवय इति ज्ञानवान् जनः यदा अरण्ये कञ्चित् पिण्डं पश्यति गोसदृशं, तदा अतिदेशवाक्यार्थस्मरणेन पुरः दृश्यमानः अयं गवय इति संज्ञासंज्ञिसम्बन्धज्ञानमुपजायते। तदेवोपमानमिति। गवय इति समाख्याशब्दस्य गवयपदार्थस्य च सम्बन्धज्ञानमेव अस्योपमानप्रमाणस्य फलम्।

प्रसिद्धं साधर्म्यं यस्य, प्रसिद्धेन वा साधर्म्यं यस्य इति प्रसिद्धसाधर्म्यः गवय इति वार्तिककारः। अयं च भाष्यकार-विरुद्धः पक्षः। शब्दप्रमाणाहितसंस्कारजन्यस्मृत्यधीनं सारूप्य-ज्ञानमेवोपमानम् (न्या. वा. ३५६)। तात्पर्यटीकायां प्रसिद्ध-साधर्म्यात् इत्यत्र प्रसिद्धिः द्विविधा समभिवर्णिता[1]—श्रुतमयी प्रत्यक्षमयी चेति। तत्र समाख्यासम्बन्धहेतुः प्रत्यक्षमयी प्रसिद्धिः।

---

1. प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिरुभयी श्रुतमयी, प्रत्यक्षमयी च। श्रुतमयी यथा-गौरेवं गवय इति। प्रत्यक्षमयी च यथा - गोसादृश्यविशिष्टोऽयमीदृशः पिण्ड इति [न्या. वा. ३५७]

न्यायमञ्जरीकारः जयन्तभट्टस्तु - श्रुतातिदेशवाक्यस्य प्रमातुरप्रसिद्धे पिण्डे प्रसिद्धपिण्डसारूप्यज्ञानमिन्द्रियजं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिफलमुपमानम् (न्या. म. १२९) इति । उदयनाचार्येणापि उपमानविषये सुबहु विचार्य तल्लक्षणमुक्तम्[1] ।

नव्यैस्तु नैयायिकैः उपमितिकरणत्वमुपमानस्य लक्षणमुक्तम् । तथा हि - आरण्यकपुरुषेण ग्रामीणं प्रति 'गोसदृशो गवयपदवाच्यः' इति गवयमृगः अभिवर्णितः । ततः परं, यदा अरण्ये गवयः तेन दृष्टः तदा गौसादृश्यज्ञानं यद् जायते तदुपमानम् । 'गोसदृशो गवय' इति अतिदेशवाक्यार्थस्मरणं व्यापारः । ततः जायमानं गवयः 'गवयपदस्य वाच्य' इति यद् ज्ञानं तदुपमितिः, फलम्[2] । तदेव प्राचीनैः संज्ञासंज्ञिसम्बन्धज्ञानमित्युक्तम् । न कदापि 'अयं गवयपदवाच्यः' इति उपमितिः भवति । गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् । (मुक्ता. २९ ३०)

अन्नंभट्टेन 'असौ गवयपदवाच्यः' इत्युपमितिर्जायित इत्युक्तम्[3] । तच्च पदपदार्थसम्बन्धज्ञानस्यैव उपमितिरूपत्वात्, असौ पुरः दृश्यमानः गवयः जन्तुविशेषः, गवय इति शब्देन

---

1. लक्षणं त्वस्यानवगतसंगतिसंज्ञासमभिव्याहृनबाह्यार्थस्य संज्ञिनि अनुसन्धानमुपमानम्, वाक्यार्थश्च क्वचित् साधर्म्यं क्वचित् वैधर्म्यम् अतो नाव्यापकम् । तस्मान्नियतविषयत्वादेव । [न्या. कु. ३२३]

2. ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीः गवादीनां या स्यात्सा करणं मतम् ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ [कारि. ७९-८०]

3. तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते [त. स. ४९]

वाच्य इति युज्यत एवेत्यभिप्रायेण। तर्कसंग्रहव्याख्यायां सिद्धान्तचन्द्रोदयाख्यायां उपमानमिदं त्रिधा विभक्तम्। सादृश्य-विशिष्टपिण्डज्ञान, असाधारणधर्मविशिष्टपिण्डज्ञान, वैधर्म्य-विशिष्टपिण्डज्ञानभेदेन।

क) सादृश्यविशिष्टपिण्डज्ञानम् - 'गोसदृशो गवयः'।
ख) असाधारणधर्मविशिष्टपिण्डज्ञानम् - 'नासिकालसदेकश्रृंगः खङ्गमृग.'।
ग) वैधर्म्यविशिष्टपिण्डज्ञानम् - 'उष्ट्रो नाश्वादिवत् समानपृष्ठह्रस्वग्रीवशरीरः'।

अत्र द्वितीयतृतीयोदाहरणयोरपि सादृश्यपदं उपलक्षण-विधयाऽस्माभिः स्वीकार्यम्। महादेवपण्डितप्रणीते न्यायसारे अलक्षि चैवमुपमानम् - "उपमितिकरणमुपमानम्। उपमितित्वं न उपमिनोमीत्यनुभवसिद्धो जातिविशेषः। तत्करणं च सादृश्यादिविशिष्टे विशिष्यागृहीतशक्तिकपदवाच्यताज्ञानम्। तत्स्मृतिः व्यापारः" (न्याय. १६३) इति।

३-१-२ भाट्टसिद्धान्तः—भाष्यकारेण शबरस्वामिना उपमान-लक्षणमेवमभ्यधायि। यथा - "उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा - गवयदर्शनं गोस्मरणस्य" (शा. भा. १०७) इति। पूर्वानुभूते स्मर्यमाणेऽर्थे दृश्यमानार्थ-सादृश्यज्ञानं उपमानमिति। यथा - 'या नगरे अस्माभिः दृष्टा गौः सा गवयेनानेन सदृशीति सादृश्यज्ञानम् (शा. दी. ७४)। दृश्यमानगवयमृगनिरूपितसादृश्यप्रकारकगोविशेष्यकप्रमा उप-

मितिरिति भावः। तत्करणं गवयमृगदर्शनमुपमानम्। वाक्यार्थस्मरणमवान्तरव्यापारः (भा. चि. ४५)। मानमेयोदये नारायणेनाप्येवमेवोक्तम्। किन्तु गवये गोसादृश्यप्रत्यक्षानन्तरं स्मर्यमाणे गवि गवयसादृश्यं उपमानादिति तस्य पक्षः[1]।

३-१-३ प्राभाकरसिद्धान्तः— शाबरभाष्योक्तोपमानलक्षणे (बृहती. १०७) गोस्मरणस्येति भाष्यमनुचितं मन्यमानेन प्रभाकरेण अनुभूतगोः पुरुषस्येति बृहत्यामर्थोऽभिवर्णितः[2]। एवं च दृश्यमानसादृश्यजन्यं गवयसादृश्यज्ञानमुपमानमिति उपमानलक्षणं फलितम्[3]। यथोक्तं शालिकानाथेन ऋजुविमलापञ्चिकायाम्—

"सादृश्यात् दृश्यमानाद्यत् प्रतियोगिनि जायते।
सादृश्यविषयं ज्ञानं उपमानं तदुच्यते॥" (बृहती. १०९)

इति। एवमेव च प्रकरणपञ्चिकायामप्युक्तं तेन। अभ्यधायि च तेन[4] स्पष्टतया उपमानलक्षणं तत्रैवम्— "दृष्टगोः पुरुषस्य तत्सदृशं गवयं पश्यतो यद् गोविषयकं गवयगतसादृश्यज्ञानं, तदुपमानम्" (प्र. प. २६७) इति। तन्त्ररहस्यकारेणापि एव-

---

1. दृश्यमानार्थसादृश्यात् स्मर्यमाणार्थगोचरम्।
असंनिकृष्टसादृश्यज्ञानं ह्युपमितिर्मता॥
यथा गवये गोसादृश्यदर्शनानन्तरं स्मर्यमाणे गवि गवयसादृश्यज्ञानम्
[मा. मे. १०८-१०९]

2. गोस्मरणस्येति, अनुभूतगोः पुरुषस्येत्यर्थः। [बृहती. १०७]

3. दृश्यमानार्थसादृश्यात् स्मर्यमाणार्थगोचरम्।
असन्निकृष्टसादृश्यज्ञानं ह्युपमितिर्मता॥ [मा. र. वा ८७]

4. सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम्। [प्र. प. २६७]

मेव उपमानं निरूपितम् । यथा— "सदृशदर्शनात् तत्सदृश-वस्त्वन्तरगतसादृश्यज्ञानमुपमानम् । यथा– पूर्वदृष्टगोः पुरुषस्य वने गवयं तत्सदृशं पश्यतो यद् गोगतगवयप्रतियोगिकसादृश्य-ज्ञानम् । अनेन सादृशी मदीया गौः इति तदुपमानम्" (त. र. १२) इति ।

**३-१·४ समीक्षणम्**— यद्यपि उपमानपदं त्रिष्वपि प्रस्थानेषु समानतया प्रयुज्यते, तथापि उपमानस्वरूपं तु नैकधा प्रति-पादितम् । तथा हि – नैयायिकमतानुरोधं गोसदृशो गवय इत्य-तिदेशवाक्यार्थस्मरणद्वारा जायमानं गोसादृश्यज्ञानं उपमान-प्रमाणम् ।

भाट्टमतानुरोधं पूर्वानुभूते स्मर्यमाणेऽर्थे दृश्यमानार्थ-सादृश्यज्ञानं उपमानम् । यथा - या नगरे अस्माभिः दृष्टा गौः सा गवयेनानेन सदृशी इति सादृश्यज्ञानम् । नारायणस्तु गवये गोसादृश्यप्रत्यक्षानन्तरं, स्मर्यमाणे गवि गवयसादृश्यमुपमान-मिति वर्णयति ।

प्राभाकरैरप्येवमेव दृष्टगोः पुरुषस्य तत्सदृशं गवयं पश्यतः यद् गोविषयकं गवयगतसादृश्यज्ञानं तदुपमानमिति भाट्टप्रस्थानानुरोधमेव उपमानस्वरूपमभिवर्णितम्[1] । एवं च उपमानमिति समानतया त्रिभिरपि तत्तद्ग्रन्थेषु उपमानं प्रत्य-पादि । तत्स्वरूपे तु नैयायिकमतात् भिद्यमानाः मीमांसकाः अन्यदेवोपमानं प्रतिपादयन्ति ।

---

1. श्यामसुन्दर शर्मा, "मीमांसक-तार्किकाभिमतोपमास्वरूपविचारः," स. सुषमा १७ (३-४) पृ. २९७-३०३ ।

शबरस्वामिप्रभृतिभि. मीमांसकैः नैयायिकमतं उपमान-विषये न स्वीकृतम् । किन्तु अन्यथयितम् । तदनन्तरकालिकैः प्राभाकरैरपि किञ्चिदिव भाट्टेभ्यः भिद्यमानैः नैयायिकमतं परित्यक्तम् । अतः स्थूलतया अंशेऽस्मिन् नैयायिकानां पन्थाः मीमांसकैः नानुसृत इति वक्तुमेवोचितम् ।

शबरस्वामिना प्रत्यक्षानुमानशब्दार्थापत्त्यनुपलब्धिविषये प्रमायाः लक्षणमुक्तम् । किन्तु उपमाननिरूपणावसरे उपमिति-लक्षणमनुक्त्वा उपमानलक्षणमेव न्यरूपि तेन । उपमानस्य उपमितेश्च प्रकटतरं भेदं मनसि निधाय अनेन तथा अत्र प्रमाणस्यैव लक्षणमुक्तं स्यात् । अन्यत्र तु क्वचित् तदेव पदं प्रमाणपरतया प्रमापरतया च प्रयुङ्क्ते स इति अस्माभिः द्रष्टुं शक्यते ।

पूर्वोक्तेषु त्रिष्वपि मतेषु नैयायिकमतमेव साधीयः । तथा हि - न कदापि मीमांसकोक्तः प्रकारः घटते । प्रसिद्धेन हि लोके अप्रसिद्धस्य साधर्म्यं दृश्यते । न कुत्रापि अप्रसिद्धेन प्रसिद्धस्य साधर्म्यमस्ति । गोसदृशो गवय इति युज्यते, पुनः न गवयसदृशी गौरिति[1] । अथापि यदि कदाचित् गवयसदृशी गौरित्युक्तावपि सा स्मृतिरेव भवति । न त्वनुभवः ।

---

1. प्रसिद्धेन हि साधर्म्यमप्रसिद्धस्य गम्यते ।
गवा गवयपिण्डस्य न तु युक्तो विपर्ययः ।।
तथा हि, अश्रुतातिदेशको नागरकः कानने परिभ्रमन् अदृष्टपूर्वं गोसदृश-प्राणिनं उपलभमान एवं बुध्यते । ब्रवीति चाहो नु गवा सदृश एष कश्चन प्राणीति । न त्वनेन सदृशो गौरिति ज्ञानमभिधानं वा तदानीं कस्यचिद-स्तीति । अतः प्रमितेरेवाभावात् किं प्रमाणचिन्तया, भवतु वैषा बुद्धिरनेन तु सदृशो गौरिति । तथापि स्मृतित्वात् न प्रमाणफलम्, न्या. म. १३३.

किञ्च मीमांसकमतेऽपि ज्ञातेतिकर्तव्यताकेन गोवत् प्रसिद्धेन आग्नेयेन सौर्यस्य अज्ञातस्य गवयवदप्रसिद्धस्य सादृश्यं-मवगम्यते, न तु सौर्येण आग्नेयस्य। यत्रेतिकर्तव्यार्थिता न तत्र उपमानात् सादृश्यावगम इति तन्मतमेव तैर्विस्मृत्य अकाण्ड-ताण्डवं क्रियते (न्या. म. १३६)।

नच वाच्यम्, गोपिण्डमात्रे सा स्मृतिरेव, किन्तु प्रकृतोप-गतगवयसादृश्यविशिष्टत्वं तु तस्य न पूर्वानुभूतं अधुनैव गम्यत-इति तदंशे न स्मृतिरिति। गवयसादृश्यस्यापि प्रागेव गृही-तत्वात्। तथा हि - वने गवयं पश्यतः नागरकस्य न करेणोः, करभस्य, तुरंगस्य वा स्मृतिरुपजायते, किन्तु विशिष्टस्यैव गोः स्मृतिः। अत एवं वक्तुं शक्यते यत् - यत्र वा परिदृश्यमान-पिण्डसादृश्यं पूर्वं गृहीतं स एव पिण्डः दृश्यमानेऽस्मिन् स्मृति-पथमवतरति नान्य इति (न्या. म. १४७)। अतः नैयायि-कोक्तमुपमानलक्षणमेव समीचीनमिति सारः।

## ३-२ सादृश्यविचारः

३-२-१ न्यायसिद्धान्तः— न्यायसिद्धान्तानुरोधं सादृश्यस्य न पदार्थान्तरत्वम्। वात्स्यायनेन हि उपमानलक्षणव्याख्याने प्रज्ञातेन सामान्यात् इत्याद्युक्तम्। टीकाकारः वाचस्पतिमिश्रः तद्व्याख्यानावसरे गवा सामान्यात् - साधर्म्यात् गवयस्येति अभिधाय भाष्यकारहृदयमाविश्चकार। सूत्रस्थं साधर्म्यं सामान्यमिति विवृण्वतः भाष्यकारस्य, सामान्यविलक्षणं सादृश्याख्यं नास्ति पदार्थान्तरमित्यभिप्राय इति[1]।

1. प्रज्ञातेन प्रसिद्धेन। गवासाधर्म्यात् सामान्यात् गवयस्य। साधर्म्यं च सामान्यमभिदधता न सामान्यातिरिक्तं सादृश्यं नाम पदार्थान्तरमस्तीत्युक्तं भवति [ता॰ टी॰ ३५६]

विश्वनाथस्तु मुक्तावल्यां पदार्थनिरूपणावसर एव शक्त्या सह सादृश्यस्य पदार्थान्तरत्वं आशंक्य खण्डयामास[1]। ननु सादृश्यमतिरिक्तः पदार्थः। न तत् भावपदार्थेष्वन्तर्भवति। सामान्येऽपि वर्तमानत्वात्। यथा - गोत्वं नित्यं तथा अश्वत्वमपीति प्रतीतेः उपलभ्यमानत्वात्। न चाप्यभावे अन्तर्भावमर्हति तत्। सत्पदार्थतया अनुभूयमानत्वात्। अतः सादृश्यमिति किञ्चित् पदार्थान्तरं अङ्गीकार्यमिति चेत् - न।

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वरूपत्वात्तस्य। तथा हि - 'घटसदृशः पटः' इत्यादौ तस्य जातावेवान्तर्भावः। यथा 'गोत्वं नित्यं तथा अश्वत्वमपि नित्य'मित्यादौ नित्यत्वरूपोपाधौ, 'चन्द्रसदृशं मुखमि'त्यादौ आह्लादकत्वरूपोपाधौ च यथाक्रमं सादृश्यस्यान्तर्भावात्। अतः अतिरिक्तपदार्थत्वं नास्ति तस्येति भावः। उपाधिश्चायं सामान्य एवान्तर्भवति। सामान्यस्य जात्युपाधिरूपतायाः वर्धमानोपाध्यायेन प्रतिपादितत्वात्[2]।

नव्यनैयायिकास्तु सादृश्यमतिरिक्तपदार्थ इत्यभ्युपगच्छन्ति[3]। अन्यथा सदृश इत्याकारकप्रतीतेः सर्वदा बहुत्र समाना-

---

1. एवं सादृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावेष्वन्तर्भवति। सामान्येऽपि सत्वात्। यथा गोत्वं नित्यं तथा अश्वत्वमपीति सादृश्यप्रतीतेः। नाप्यभावे, सत्वेन प्रतीयमानत्वात् इति चेत् - न। सादृश्यमपि न पदार्थान्तरम्, किन्तु तद्भिन्नत्वे सति तद्गातभूयोधर्मवत्वम्। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्वं मुखे चन्द्रसादृश्यमिति [मुक्ता. ५६-७३]

2. सामान्यं द्विविधम् जातिरुपाधिश्च [कारि० १४]

3. See BHATTACHARYA, V. B., and. BASU, Aravinda, "Later Nyāya-Vaiśeṣika" *History Of Philosophy : Eastern and Western*, Vol. I pp. 231-241.

कारतया अनुभूयमानत्वस्य विलोपापत्तेः। सादृश्यस्यातिरिक्तत्वाङ्गीकारे तु तस्याखण्डोपाधिरूपतया सर्वमुपपद्यत इति (मुक्ता. प्र. ७२)। नैतन्मतं मुक्तावलीप्रभाकारेण नृसिंहयज्वना अभ्युपगतम्। सादृश्यस्य विलक्षणपदार्थत्वाङ्गीकारे कस्यापि प्रमाणस्याभावात् नैतत् तथाङ्गीकार्यमिति (मुक्ता. प्र. ७३)।

३-२-२— भाट्टसिद्धान्तः— भाट्टमतानुरोधं न सादृश्यं पदार्थान्तरम्। किन्तु यथाप्रकरणं क्वचित् द्रव्ये, क्वचित् गुणे, क्वचिच्च कर्मणि, अन्तर्भवति। अत एव सादृश्ये सामान्यभूयस्त्वाल्पत्वनिबन्धनौ प्रकर्षाप्रकर्षौ सम्यगनुभूयेते। यथा - 'सुसदृशं, ईषत्सदृशमिति' (शा. दी. ७५)।

ननु सादृश्यमेतत् पदार्थान्तरमिति कैश्चिदभ्युपगम्यते तत्कथमिति चेत् - मैवम्। तस्य पदार्थान्तरत्वे प्रमाणाभावात्। अपि च प्रकर्षाप्रकर्षभेदः तदात्वे किंनिबन्धन इति तैस्समाधेयम्। अत एवं वक्तुं शक्यते यत् - सादृश्यमेतत् सदृशज्ञानोत्पादकत्वेन यजेत इत्येवमादिचोदनार्थोत्पादकत्वेन च अर्थक्रियाकारितया वस्त्वेव। अतः उक्तपूर्वपदार्थेषु अन्तर्भावमर्हतीति। अत एव द्रव्य-गुण-कर्मादिषु एतदन्तर्भावयता वार्तिककारेण विचित्रं सादृश्यमभ्युपगतम्। यथा —

एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः।
एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥ (श्लो. वा. ४३९)

इति। तथा हि—अवयवयोः सादृश्यं यथा - 'पद्मदलाक्षी' इति। अत्र पद्मस्य अक्ष्णोश्च स्वावयवसामान्ययोगात् सादृश्यम्।

गुणयोः सादृश्यं यथा - 'केतकीगन्धसदृशः सर्पगन्धः' इति । अत्र अवयविगुणानां अवयवगुणसामान्ययोगः सादृश्यम् । एवमेवान्यत्रापि उदाहरणानि सुलभानि (सि. च. ७५) । मानमेयोदयेऽपि सादृश्यस्यास्य पदार्थान्तरत्वं सोपष्टम्भं प्रतिक्षिप्तम् (मा. मे. २८७) ।

३-२-३ प्राभाकरसिद्धान्तः— सादृश्यमपि पदार्थान्तरमिति प्राभाकराणां पन्थाः । प्रभाकरमिश्रः बृहत्यामेवमवादीत्— "सादृश्यम् ---- इति हि सादृश्यम् (बृहती १०७)" इति । अस्यायमर्थः - सादृश्यमिति यत्र वा ज्ञानमुत्पद्यते तत्र तत्सादृश्यम् । सदृशवस्तुदर्शने हि इदमनेन सदृशमिति ज्ञानमुत्पद्यत इति लोकानुभवः । अतः तदनुरोधं हि विषयव्यवस्था कार्या । एतदनुभवबलेन गुणाद्यतिरिक्तं सादृश्यमिति किंचित्पदार्थान्तरं अभ्युपगन्तव्यमिति ऋजुविमलापञ्चिकायां शालिकानाथः प्रत्यपीपदत् (बृहती. प. १०७) । प्रकरणपञ्चिकायामपि उपमानपरिच्छेदे किं नामसादृश्यमित्युपक्रम्य अकारि सादृश्यनिरूपणमेवम्—

विषयोऽस्य वित्तिसिद्धो भिन्नो द्रव्यादिभावेभ्यः (प्र. प. २६७) इति । अस्यायं भावः — वस्तूनि सर्वाण्यपि संविदेकशरणानि । अस्ति च संवित् 'सदृश' इति । विषयानपायिनी खलु संवित् प्राभाकरैरभ्युपगता । अतः तादृशानुभवसिद्धो सादृश्यं जागर्त्येव । तच्च पदार्थान्तरम् । कुतः ? द्रव्यादिष्वनन्तर्भावात् । तथा हि - तच्च न द्रव्यं भवितुमर्हति । गुणकर्मणो-

रप्याश्रितत्वात् । न गुणः, न चैव कर्म, गन्धादीनां गुणानां कर्मणां च सदृशबुद्धिबोध्यत्वात् । नैव सामान्यम् अनुवृत्तज्ञान-निवृत्तत्वाभावात् । असम्बद्धरूपत्वात् न समवायेऽन्तर्भावः । अतः पदार्थान्तरमिदं शक्तिवत्, संख्यावच्चेति (प्र. प. २६८) । सिद्धे चैवं सादृश्यस्य पृथक् पदार्थत्वम् ।

१--२-४ **समीक्षणम्**— सादृश्यं-साधर्म्यं-सामान्यमिति त्रीणि पदानि अभिन्नार्थतकया तत्र तत्र बहुशः प्रयुज्यन्ते । सूक्ष्मेक्षणि-कया परामर्शे क्रियमाणे परस्परं विभिन्नार्थान्येव इमानि पदा-नीति अवगम्यते । तथा हि - यत्र बाहिरं साम्यं तत्रैव सादृ-श्यमिति पदस्य प्रयोगः । तस्य दृग्गम्यत्वात् । बाहिरं साम्य-मस्तु मा वा, यत्र आन्तरं साम्यं वर्वर्ति तत्र साधर्म्यप्रयोगः दरीदृश्यते । यत्रोभयं वर्तते तत्र सामान्यमितिपदस्य प्रयोगः । अथापि स्थूलदृष्ट्या समव्यक्तिषु, समस्वभावेषु च त्रयाणां प्रयोगा उपलभ्यन्त इति लोकानुभवः ।

प्रकृते उपमानप्रकरणे नैयायिकैः मीमांसकैश्च साधर्म्यं सादृश्यमिति पदद्वयमुपयुज्यते[1] (बृहती. १०७) । नैयायिकैः बहुशः साधर्म्यपदं तथा मीमांसकैश्च अधिकतया सादृश्यपदमेव प्रयुज्यत इति विशेषतोऽवगन्तव्यम् । किमिदं सादृश्यं पदा-र्थान्तरं उत पूर्वोक्तेषु पदार्थेषु कुत्राप्यन्तर्भवति वेत्यत्र नैयायि-कानां, भाट्टानां, प्राभाकराणां च परस्परं मतभेदः दरीदृश्यते ।

---

1. प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । [न्या. द. १-१-६]
गोसदृशो गवयः [त. स. ४९] ।

तथा हि - नैयायिकैः साधर्म्यापरपर्यायस्य सादृश्यस्य सामान्याख्ये पदार्थ एवान्तर्भाव उच्यते। भाट्टैस्तावत् यथायथं द्रव्ये, गुणे, कर्मणि वा तस्यान्तर्भाव इति निश्चीयते। प्राभाकरैस्तावत् सादृश्यं पदार्थान्तरमिति अभ्युपगम्यते। तन्निरूपणाय तैः प्रदर्शिताः युक्तयः प्रागेवोपस्थापिताः। तथैव नव्यनैयायिकाश्च सादृश्यस्य पदार्थान्तरत्वं अङ्गीकुर्वन्ति (मुक्ता. प्र. ७२)।

इदमत्र विचारणीयं यत् – नैयायिकैरपि सादृश्यस्य सामान्य एवान्तर्भाव इति वदद्भिः न सर्वत्र तस्य जातावेवान्तर्भाव इत्युच्यते। क्वचित् उपाधिरूपता च तस्याङ्गीक्रियते। एवं च तस्यातिरिक्तपदार्थत्वे च प्रमाणाभाव एव हेतुरिति तैरभिधीयते। अतः अत्र विषये लोकानुभवानुरोधि प्राभाकरमतमेव ज्याय इति प्रतिभाति। तस्यातिरिक्तपदार्थत्वे न कापि हानिः नैयायिकसिद्धान्तस्येति विज्ञेयम्।

अतः अत्र नैयायिकानां पन्थाः अपदार्थत्वांश एव भाट्टैरनुसृतः। किन्तु तस्य क्वचित् द्रव्ये, क्वचित् गुणे, क्वचित् कर्मणि चान्तर्भाव इति कल्पनं भाट्टानां स्वोपज्ञम्। एतदुभयविरुद्धतया नैयायिकानां, भाट्टानां च मतं परित्यज्य तस्यातिरिक्तपदार्थत्वं स्थापयन्ति प्राभाकराः। वस्तुगत्या विचार्यमाणे तदेव मतं रमणीयमिव प्रतिभाति।

### ३-३ उपमानस्य प्रमाणान्तरत्वम्

३-३-१ न्यायसिद्धान्तः— गौतमीयैः उपमानस्य पृथक् प्रमाणत्वमभ्युपगम्यते। काणादैस्तु तस्यानुमान एव अन्तर्भावः

इत्युक्तम् । तथा हि - प्रत्यक्षेण धूमेन यथा अप्रत्यक्षस्य वह्नेः सिद्धिः तथा प्रत्यक्षेण गवा अप्रत्यक्षस्य गवयस्य अनुमितिरिति उपमानमपि अनुमानमेवास्तु[1] ।

प्रशस्तपादस्तु अप्रसिद्धस्य गवयस्य गोसादृश्येन गवयशब्दवाच्यत्वप्रतिपादनात् 'यथा गौस्तथा गवय' इति अतिदेशवाक्यस्य आप्तवचनरूपत्वात् उपमानस्य आप्तवचनद्वारा अनुमान एवान्तर्भाव इति न्यरूरूपत्[2] । भासर्वज्ञेनापि न्यायसारे उपमानस्य शब्द एवान्तर्भाव उक्तः[3] । न्यायमंजर्यां जयन्तभट्टेन उपमानस्य पूर्वोक्तप्रमाणान्तर्भावमाक्षिप्य पुनः तस्य पृथक् प्रमाणता सोपष्टम्भं समर्थिता[4] (न्या. म. १३०-१३२) । विश्वनाथस्तु उपमानस्य अनुमानप्रमाणेऽन्तर्भावं वैशेषिकमतानुरोधमाशंक्य खण्डयामास[5] ।

---

1. प्रत्यक्षेणाप्रत्यक्षसिद्धेः । [न्या. द. २-१-४६]
2. आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रतिपादनात् उपमानमाप्तवचनमेव । [प्र. भा. ११०]
3. एवमेतानि त्रीण्येव प्रमाणानि । एष्वेवोपमानार्थपत्तिसम्भवाभावैतिह्यादीनामन्तर्भावः । तत्र यथा गौः; एवं गवयः, इत्युपमानं शब्देऽन्तर्भूतम् । [न्या. सा. ३३]
4. तस्मादयं स गवयो नामेत्येवंविधा मतिः ।
   उपमानैकजन्यैव न प्रमाणान्तरोद्भवा ॥ [न्या. म. १३१]
5. शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ।
   अनुमानगतार्थत्वात् इति वैशेषिकं मतम् ॥
   तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधकः ।
   गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्प्रवृत्तिनिमित्तकं, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् । यद्वा गवयपदं सत्प्रवृत्तिनिमित्तकम्, साधुपदत्वात् इत्यनुमानेन पक्षधर्मताबलात् गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध्यति [मुक्ता. ७८८]

सूत्रकारेणैव उपमानस्य अनुमानान्तर्भावत्वं निरस्तम्। तत्र हेतुद्वयं तेन प्रादर्शि[1]। उपमानप्रमाणजन्यायाः उपमितिरूपायाः प्रमायाः, अनुमानजन्यायाः अनुमितिरूपायाः प्रमायाः ऐक्यस्य दुरुपपादत्वात्। किञ्चोपमितेः व्याप्तिज्ञानानपेक्षतया सादृश्यज्ञानेनैव जन्यमानत्वात्। 'उपमिनोमि' इति अनुव्यवसायस्य आनुभविकत्वात् (न्या. वृ. १५०)।

न्यायकुसुमाञ्जलिकारेण उदयनाचार्येण उपमानस्य पृथक् प्रमाणत्वं सविस्तरं सुनिरूपितम्। तथा हि - यथा गौस्तथा गवयः इत्यतिदेशवाक्यं श्रुतवतो जनस्यारण्ये कालान्तरे गोसदृशपिण्ड पश्यतः अतिदेशवाक्यार्थस्मरणपूर्वकं अयं गवयशब्दवाच्यः इति ज्ञानं जायते। नेदं शाब्दज्ञानं भवितुमर्हति। गवयमृगमदृष्टवतोऽपि जायेतेत्यापत्तेः। नेदं प्रत्यक्षं वक्तुं शक्यते। वाक्यश्रवणमन्तरेणापि उत्पत्तिप्रसङ्गात्। नेदं समाहारः। वाक्यप्रत्यक्षयोर्भिन्नकालत्वात्। अत इदं उपमितोमीत्यनुव्यवसायसाक्षिकं उपमितिरूपं प्रमाज्ञानमिति अवश्यमङ्गीकार्यम्। यज्जनकं वा उपमानप्रमाणमित्याचक्षते[2]। अतः सिद्धं न्यायमतानुरोधं उपमानस्य पृथक् प्रमाणत्वमिति।

---

1. नाप्रत्यक्षे गवये प्रमाणार्थं उपमानस्य पश्यामः।
तथेत्युपसंहारात् उपमानसिद्धेः नाविशेषः॥ [न्या. द. २-१-४७, ४८]

2. सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह।
प्रत्यक्षादेरसाध्यत्वात् उपमानफलं विदुः॥
यथा - गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य गोसदृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थं 'अयमसौ गवयशब्दवाच्यः' इति भवति मतिः। सेयं न

३–३-२ भाट्टसिद्धान्तः— अथ उपमानमिदं न पृथक् प्रमाणम् । प्रत्यक्षे अनुमाने शब्दे वा अन्तर्भूतत्वात् इति चेत् - मैवम् । नेदं प्रत्यक्षं भवितुमर्हति । नगरस्थस्य गोः इन्द्रियसंनिकर्षाभावात् । न चापीदमनुमानम्, गृहीतसंबन्धविषयत्वात् तस्य । अत्र तु द्वयोर्मध्ये सम्बन्धस्यागृहीतत्वात् । तदा खल्वेवं वक्तव्यम् - "गौः गवयसदृशः, गवयसादृश्यप्रतियोगित्वात्" इति । इदं तु न सम्भवति । गोगवयौ मिथः सदृशावपि एकत्र प्राङ् न दृष्टौ । अनेकमेव गामुपलभ्य पूर्वं नगरे, वने गवयं पश्यन् गवयसादृश्यविशिष्टां गां उपमिनोति कश्चिदिति न तरामिदं अनुमानेऽन्तर्भवितुमर्हति (शा. दी. ७५-७६) ।

नास्य शब्दान्तर्भावशंकापि सुकरा । पदज्ञानादेरभावात् । अत इदं प्रमाणान्तरमिति निश्चीयते । एवमेव गागाभट्टेनापि भाट्टचिन्तामणौ पूर्वोक्तप्रमाणान्तर्भूतत्वमस्य प्रत्यपादि[1] ।

३-३-३ प्राभाकरसिद्धान्तः— बृहत्यां प्रभाकरमिश्रेण उपमानप्रमाणस्य अनुमानेऽन्तर्भावमाशंक्य, गौर्गवयमृगो वा तत्सादृश्यं

---

तावत् वाक्यमात्रफलम्, अनुपलब्धपिण्डस्यापि प्रसङ्गात् । नापि प्रत्यक्षफलम् । अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि समाहारफलम् । वाक्यप्रत्यक्षयोः भिन्नकालत्वात् । वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डसम्बन्धेनापि इन्द्रियेण तद्गतसादृश्यानुपलम्भे समयपरिच्छेदासिद्धेः । [न्या.कु.३०८]

1. न चेदं सादृश्यप्रत्यक्षम् । अर्थान्तरयोगिभिः धर्मः अर्थान्तरस्य तादृशयोगरूपसादृश्यस्य व्यासज्यवृत्तितया यावदाश्रयप्रत्यक्षाभावेन तदयोगात् । नानुमानम् - उपमिनोमीति अनुव्यवसायेन अनुमितिवैलक्षण्यप्रतीतेः । नापि शाब्दम् - पदज्ञानाद्यभावादिति । अत इदं मानान्तरम् [भा. चि. ४५]

वा नैकदेश. भवितुमर्हतीति, तथा गोगतसादृश्येन गवयगतसादृश्यस्य च न कोऽपि सम्बन्धोऽस्तीति च विशदय्य परिहृतम्[1] ।

शालिकानाथेन प्रकरणपञ्चिकायां उपमानस्य इतरप्रमाणानन्तर्भूतत्वं सुष्ठु निरूपितम् । तथा हि - नोपमानं प्रत्यक्षं भवितुमर्हति । चक्षुः संनिकर्षविरहिते गवि जायमानत्वात् । नानुमानम्, लिंगाभावात् । एकदेशो हि लिंगमुच्यते । अत्र गौः गवयो वा तद्गतं गोसादृश्यं वा नैकदेशः भवितुमर्हति । न स्मृतिः, गोसादृश्यानुभवाभावात् । अतः कारणभेदादेव इतरप्रमाणातिरिक्तं उपमानं प्रत्यक्षवदिति (प्र. प. २६९–२७०) । एवमेव तन्त्ररहस्येऽपि उपमानस्य स्वतन्त्रप्रमाणत्वं संग्रहेण प्रत्यपादि (त. र. १२) ।

**३-३-४ समीक्षणम्** — अथ काणादैस्तावत् उपमानस्य न प्रमाणान्तरत्वं ऊरीक्रियते । तस्य शब्दद्वारा अनुमान एवान्तर्भाव इति प्रशस्तपादशंकरमिश्रादयः । किन्तु नैयायिकमतानुरोधं तस्य पृथक्प्रमाणत्वं प्रागेव बहुग्रन्थसंवादपुरस्सरं न्यरूपि । उपमानस्य कुत्रापि प्रत्यक्षे-अनुमाने-शब्दे चानन्तर्भावात् पृथक्प्रमाणता अभ्युपेया । विलक्षणायाः प्रमायाः अनुभूयमानत्वात् ।

---

1. अतो न गवयस्थं सादृश्यं सदृशावगतेरेकदेशः । किंच असकृद्दृष्टसम्बन्धो ह्यनुमानस्य हेतुः । असजातीयव्यावृत्तिसव्यपेक्षश्च, द्वयमत्र नास्तीति प्रमाणान्तरम् [बृहती. १०८]

नात्र प्रशस्तपाद-शंकरमिश्र-भासर्वज्ञानां प्रतिपादनानि सफलानि । अनुभवाननुकूलत्वात्[1] ।

मीमांसकैस्तावत् उपमानस्य पृथक् प्रमाणताविषये नैयायिकमतमेव अन्वसारि । उपमानस्वरूपनिरूपणावसरे नैयायिकेभ्यः भिद्यन्तोऽपि भाट्टाः, प्राभाकराश्च तस्य पृथक्प्रमाणताव्यवस्थापने तन्मतमेव आश्रयन्त इति ।

---

1. See YAMAKAMI, Shodo., "Bhāsarvajña's reputation to Naiyāyikās 'Upamāna,'" *Journal of Indian and Buddhist studies*, University of Tokyo, Japan Vol. XVII (2) P. 888, 1969.

See GUHA, D.C., "Upamānam or the special source of the valid knowledge called Upamiti, "*Prabuddha Bhārata*, 48, 367 ff. Calcutta, 1943.

## सिद्धान्तभेदप्रदर्शिनी—उपमानाधिकारे

| न्यायसिद्धान्ते | भाट्टसिद्धान्ते | प्राभाकरसिद्धान्ते |
|---|---|---|
| १ गवयः गवयपदवाच्यः इत्युपमिति-करणमुपमानम् | स्मर्यमाणेऽर्थे दृश्यमानार्थसादृश्य ज्ञानरूपं अनेन सदृशी मदीया गौः इत्युपमितिकरणम् | सदृशदर्शनात् तत्सदृशवस्त्वन्तरगत-सादृश्यज्ञानम् अनेन सदृशी मदीया गौरिति उपमितिकरणम् |
| २ अतिदेशवाक्यार्थस्मरणं व्यापारः | तथैव | अतिदेशवाक्यमेव नास्ति |
| ३ प्राचीनमते सादृश्यस्य जात्युपाधि-रूपे सामान्येऽन्तर्भावः। नव्यमते अतिरिक्तपदार्थत्वम् । | न पदार्थान्तरम्, द्रव्ये-गुणे-कर्मणि वा प्रकरणानुरोधमन्त-र्भावः । | पदार्थान्तरम् |
| ४ उपमानं पृथक्प्रमाणम् वैशेषि-कानां तु तस्य शब्दद्वारा अनु-मानेऽन्तर्भावः । | तथैव | तथैव |

# चतुर्थाध्यायः

## ४ शब्दाधिकारः

### ४-१ शब्दलक्षणम्

४-१-१ न्यायसिद्धान्तः— तत्तद्धर्मसाक्षात्कारवतः आप्तस्योपदेशः शब्द इति गौतमीयानां शब्दलक्षणम्[1]। लक्षणमिदं ऋषीणां आर्याणां म्लेच्छानां च समानमिति वात्स्यायनअभाषत (न्या. भा. ३६५)। परिशुद्धावुदयनाचार्यस्तु न्यायसारमतमेवमनुवदति। समयसामर्थ्यवशात् सम्यक् परोक्षानुभवसाधनं शब्द इति[2]।

वैशेषिकास्तु शब्दस्य पृथक् प्रमाणत्वं नाभ्युपगच्छन्ति। अपि तु अनुमान एव तमप्यन्तर्भावयन्ति। तथा हि - शब्दः अनुमानम्, व्याप्तिबलेनार्थप्रतिपादकत्वात्। धूमवदिति[3]। अतः शब्दः न पृथक् प्रमाणम्। अनुमानेऽन्तर्भावादिति तेषां मतम्। सप्तपदार्थ्यामपि शिवादित्येन अनुमानविषयत्वेन,व्याप्तिबलेन च शब्दः अनुमानमेवेति समसाधि[4]। तत्त्वचिन्तामणि-

---

1. आप्तोपदेशः शब्दः [न्या. द. १-१-७]
2. तत्र समयबलेन सम्यक् परोक्षानुभवसाधनं शब्द इति एके [परि. ३७२]
3. शब्दादीनामपि अनुमानेऽन्तर्भावः। समानविधित्वात्। यथा - प्रसिद्धसमयस्य असंदिग्धलिंगदर्शनप्रसिद्धचनुस्मरणाभ्यां अतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपीति [प्र. भा. १०७]
4. शब्दस्याप्यनुमानविषयत्वेन अविनाभावोपजीवकत्वेन वा अनुमानत्वम् [स. प. ७२]

कारेण गंगेशोपाध्यायेन शब्दलक्षणमेवं प्रत्यपादि । "प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्" (त. चि. श. ५) इति । विश्वनाथन्यायपञ्चाननस्तु पदज्ञानमेव शब्दप्रमाणमिति, पदजन्यपदार्थस्मरणं व्यापार इति, शक्तिज्ञानं सहकारिकारणमिति शाब्दबोधः फलमिति च निरूपयामास[1] । अन्नंभट्टेन आप्तवाक्यस्य शब्दत्वमुक्तम् । यथार्थवक्ता आप्त इत्युक्तः (त. सं. ५०) । एवं च नैयायिकानां शब्दः प्रमाणम्, आप्तोपदेशत्वं च तस्य लक्षणमिति फलितम् ।

४-१-२ भाट्टसिद्धान्तः—भाट्टमतानुरोधं शब्दप्रमाणमेवं निरूप्यते । गृहीतपदपदार्थसंगतिमतः पुरुषस्य, कतिचित्पदश्रवणानुपदं, पदार्थस्मृतौ समुत्पन्नायां स्मृतैस्तैः पदार्थैः अज्ञाताबाधितार्थविषयकं यद्विशिष्टं वाक्यार्थज्ञानमुत्पद्यते सैव शाब्दी प्रमेत्याख्यायते[2] । तादृशप्रमाजनकः शब्दः प्रमाणं भवितुमर्हति[3] । शब्दज्ञानजन्यं व्यवहितार्थविषयकं यथार्थज्ञानं शाब्द-

---

1. प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति [न्या. सू. वृ. २६]
पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ।। [कारि. ८१]

2. तत्र तावत् पदैर्ज्ञप्तिः पदार्थस्मरणे कृते ।
असंनिकृष्टवाक्यार्थज्ञानं शाब्दमितीर्यते ।। [मा. मे. ६२]

3. शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम् [शा. भा. २०५]
विज्ञातात् शब्दात् पदार्थाभिधानद्वारेण यद वाक्यार्थविज्ञानं तच्छब्दं नाम प्रमाणम् [शा. दी. ७२]

ज्ञानम्, तत्करणं शब्दः प्रमाणम् इति भाट्टचिन्तामणौ गागाभट्टः प्राह[1] ।

ननु शाबरभाष्ये शास्त्रं शब्दविज्ञानात् - इत्यादिशब्दसामान्यलक्षणे शास्त्रपदं प्रयुक्तम् । शास्त्रमिति खलु शब्दविशेषस्य मीमांसाशास्त्रे व्यवहारः । शास्त्रलक्षणं चैवं कुमारिलभट्टैः अभ्यधायि श्लोकवार्तिके । यथा —

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

(श्लो. वा. ५६०)

इति । अतः कथं नामैतदुपपद्यत इति चेत् -

मैवम् । वेदप्रामाण्यप्रतिष्ठापनार्थं, वेदार्थविचारार्थं च शब्दविशेषस्य शास्त्रस्यैव मीमांसकैः वक्तुमुचितत्वात् । चोदनोपदेशशब्दाभ्यां तस्यैव प्रस्तुतत्वात् । वेदप्रामाण्ये तदर्थविचारे वा अनुपयोगित्वेऽपि शास्त्रैकवाक्यतया अन्येषामपि लौकिकशब्दानां उपचारात् शास्त्रत्वमभ्युपगम्यात्र शब्दसामान्यलक्षणमुच्यते ।

---

1. शब्दज्ञानजन्यं असंनिकृष्टार्थविषयकं यथार्थज्ञानं शाब्दप्रमा, तत्करणीभूतशब्दः प्रमाणमित्यर्थः । शब्दानुव्यवसाये अतिव्याप्तिवारणाय द्वितीयम् । अनुमित्यादावतिव्याप्तिवारणाय आद्यम् । एवं वाक्यश्रवणानन्तरं पदोपस्थितपदार्थानां संसर्गविषयिणी प्रमितिः प्रत्यक्षादिविलक्षणा जायते, तत्करणं शब्दः तद् ज्ञानं वा प्रमाणान्तरम् [भा. चि. ४७]

किंच अत एव मीमांसकैः मीमांसाशास्त्रपर्यायितया च 'शास्त्रम्' इति व्यवहारः क्रियते[1]। वस्तुत.—"विधायकशब्द-विज्ञानात् असंनिकृष्टेऽर्थे धर्माधर्मलक्षणे विज्ञानं शास्त्रम्" (शा. दी. ७२) इति सिद्धान्तचन्द्रिकाकारः रामकृष्णः न्यरूपयत्।

४-१-३ प्राभाकरसिद्धान्तः—मीमांसका हि शब्दं शास्त्रमिति व्यव-हरन्तीति प्रागवोचाम। शाबरभाष्यानुरोधं तस्य शास्त्रस्येदं लक्षणम्। यत् — "शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम्" (बृहती. १०५) इति। अत्र प्रभाकरः - किं शब्दा-द्विज्ञानम् शब्दविज्ञानम्? उत शब्दे एव विज्ञानं शब्दविज्ञानम्? इति विकल्प्य द्वितीयात्पक्षात् प्रेरणं न किमप्यवगम्यते। प्रेरणं नाम शासनम्। यस्मात् शासनमवगम्यते तच्छास्त्रम्। शासनात् खलु शास्त्रमिति व्यपदिशन्ति लोके। शब्दात् अर्थे यत् विज्ञानमुत्पद्यते तत् शब्दविज्ञानम्। तत्र विशेषावगतौ कारणं शास्त्रमित्युक्तम्। लक्षणं हि सर्वदा लक्ष्यानुरूपं भवति। अत्र लक्ष्यं शास्त्रम्। अतस्तदनुरूपं हि लक्षणं वक्तव्यम्। तथा च पञ्चमीसमास एवाश्रयणीयः इति (बृहती. १०५-६)

शालिकानाथस्तु प्रकरणपञ्चिकायां शास्त्रलक्षणमेव-मभिदधे। यथा -

---

1. शास्त्रदीपिका इत्यत्र भाट्टप्रस्थानस्य सर्वस्यापि शास्त्रपदेनैव व्यवहारस्य सुप्रहत्वात्।

"शब्दविज्ञानापेक्षात् आत्ममनःसंनिकर्षात् यददृष्टार्थ-विषयं विज्ञानं, तच्छास्त्रं नाम प्रमाणम्" (प्र. प. २२९)

इति । अन्विताभिधानवादिनां प्राभाकराणां अयमभिप्रायः यत्-अन्वितार्थप्रतिपादकैः आकांक्षादिविशिष्टैः पदैः अन्वयस्याप्यभिधानमिति । अर्थस्वरूपे अन्वये च पदस्यैव शक्तिः। किन्तु इयान् विशेषः - पदार्थांशे ज्ञाता शक्तिः कारणमुच्यते । अन्वयांशे च स्वरूपसती शक्तिः कारणमिति । अत एव प्राभाकराणां कुब्ज-शक्तिवादिन इत्यपि व्यपदेशः । एवं चायमत्र निर्गलितोऽर्थः यत् - प्रमाणान्तराप्रमितं शब्दज्ञानं वाक्यार्थज्ञानजनकमिति (प्र. प. २२९) ।

तन्त्ररहस्ये रामानुजाचार्यस्तु - "सम्बन्धग्रहणद्वारा अर्थ-प्रत्यायकः पदसमूह एव शाब्दम्" (त. र. २२) इति शब्दप्रमाणं लक्षयति । तदेव प्रत्यक्षाद्यसंनिकृष्टार्थं शास्त्रमित्युच्यते ।

अयमस्याभिप्रायः - शब्दज्ञानद्वारकात् आत्मसंनिकर्षात् असंनिकृष्टार्थविषयं ज्ञानं शास्त्रप्रमाणमित्यभिधीयते । इतर-प्रमाणसंनिकृष्टार्थविषयं लौकिकं वचनम् । एतच्च अनुमानरूप-मेव । अत एवैतत् लौकिकं वचनं न शास्त्रमित्युच्यते । वैदि-कस्यैव वचनस्य शास्त्रत्वमिति (त. र. २२) ।

**४-१-४ समीक्षणम्** — प्रकृतांशे नैयायिकानां मीमांसकानां च महद्वैलक्षण्यं चकास्ति । नैयायिकैः प्रमाणपरतया ऋष्यार्य-म्लेच्छसमानतया शब्दपदं प्रयुज्यते । मीमांसकैस्तावत् प्रमाण-

भूतः शब्दः शास्त्रमिति व्यवह्रियते । लौकिकस्तु केवलं शब्द इति । केषुचन ग्रन्थेषु यद्यपि सर्वस्यापि शब्दस्य शास्त्रमित्येव व्यवहारः दरीदृश्यते । उपचारात् । तथापि वस्तुगत्या प्रमाणभूतस्यैव शास्त्रमिति व्यवहारः । अत एव वेदार्थनिर्णायकशब्दशासनरूपतया मीमांसाया एव शास्त्रमित्यपि प्रसिद्धिः समजनि लोके । एवं च शब्द इति शास्त्रमिति सामान्यतः लोके एकार्थतया व्यवहारे सत्यपि प्रवृत्तिनिमित्ते मनागिव भेदो वर्तत इति विज्ञेयम् ।

वैशेषिकैः शब्दस्य पृथक्प्रमाणत्वं नाङ्गीक्रियते । नैयायिकास्तु तस्य पृथक्प्रमाणतां प्रतिपादयन्ति । शब्दस्य पृथक्प्रमाणताविषये भाट्टाः प्राभाकराश्च नैयायिकमतमेवानुसरन्ति । किन्तु तल्लक्षण-स्वरूपादि-निरूपणावसरे नैयायिकमतं परित्यज्य स्वयं नूतनं पन्थानमवलम्बन्ते ।

शब्दस्य शास्त्रस्य च मीमांसकैरभ्युपगतः भेदोऽयम् । यथा - शब्दज्ञानद्वारकात् आत्मसंनिकर्षात् यदि प्रमाणान्तरासंनिकृष्टार्थज्ञानं जायते तर्हि तत् शास्त्रं प्रमाणम् । यदि तत्र इतरप्रमाणसंनिकर्षः स लौकिकः शब्दः । अयं च प्राभाकरमतानुरोधमनुमानेऽन्तर्भवति । वैदिकमेव शब्दं शास्त्रमिति व्यवहरन्ति मीमांसकाः ।

उपरितनेषु त्रिष्वपि मतेषु ऋष्यार्यम्लेच्छसमानतया आप्तोपदेशः शब्द इति यत् शब्दलक्षणं नैयायिकैरुक्तं (न्या. क. ३) तदेव समीचीनमिति अवधार्यते । तत्रैव मीमांसको-

क्तस्य लक्षणस्यापि अन्तर्भावः। अत एव नैयायिकप्रभाव-सम्पन्नौ गागाभट्ट-रामानुजाचार्यौ क्रमेण भाट्ट-प्राभाकरग्रन्थप्रणेतारौ शब्दलक्षणविषये नैयायिकानां मतमेव अनुकुरुत इति द्रष्टव्यम्।

एवं च नैयायिकैः भाट्टैः प्राभाकरैश्च शब्दस्य स्वतन्त्रं प्रामाण्यमभ्युपगतम्। प्राचीनमीमांसकोक्तलक्षणेषु सत्यपि भेदे नव्यमीमांसकैः स्थूलतः नैयायिकमतमेव अन्वकारीति तत्तद्ग्रन्थसन्दर्भसन्दर्शनेनास्माभिः अवगम्यते[1]।

**४–२ शब्दविभागः - लौकिकः - वैदिकश्च**

**४–२-१ न्यायसिद्धान्तः—** न्यायसिद्धान्तानुरोधं शब्दोऽयं द्विविधः - दृष्टादृष्टार्थभेदेन[2]। दृष्टार्थः लौकिकः, अदृष्टार्थस्तु प्रायशः वैदिकशब्दः। द्विविधोऽपि शब्दः प्रमाणम्। वक्तृभेदेनापि शब्दः द्विविधः दृष्टादृष्टार्थप्रवक्तृकत्वात् (न्या. वा. ३८१)। प्रत्यक्षत उपलब्धः अर्थः दृष्टार्थः। अनुमानेनोपलब्धः अर्थः अदृष्टार्थः। दृष्टः अर्थः येन सः दृष्टार्थः प्रवक्ता। एवं अदृष्टः अर्थः अनुमितिः अर्थः येन सः अदृष्टार्थः। एवं च दृष्टादृष्टार्थरूपलौकिक-वैदिकभेदः शब्दे नैयायिकानां इष्ट इति[3]।

---

1. See GANGOPĀDHYĀY, M. K. "Jagadīsa on the independence of Śabda-Pramāṇa", *XXVI AIOC*, UJJAIN, *SP* : P. 246, 1972.
2. स द्विविधः - दृष्टादृष्टार्थत्वात् [न्या. द. १-१-८]।
3. See PANT, A. S. V., "Epistemology in the Nyāya-Vaiśeṣika system with special reference to Śabda," *AIOC XXV* (1969) *SP* : 228.

४-२-२ भाट्टसिद्धान्तः— शब्दप्रमाणमिदं भाट्टमतानुरोधं प्रथमतो द्विधा भिद्यते-पौरुषेयापौरुषेयभेदेन। तत्र आप्तवाक्यमेव पौरुषेयमुच्यते। वेदवाक्यं तु अपौरुषेयम्। भाट्टानां मते उभयमपि प्रमाणमेव। अनाप्तप्रणीतत्वरूपदोषविरहात्, शब्दस्य स्वत एव अदुष्टत्वात्।

पुनरिदं शब्दाख्यं प्रमाणं द्विविधम्-सिद्धार्थबोधं विधायकं चेति। 'एष राजा पाञ्चालः' इति लोके सिद्धार्थबोधकम्। वेदे च 'वज्रहस्तः पुरन्दर' इत्यादिवाक्यम्। विधायकं तावत् द्विविधम्-उपदेशकमतिदेशकं चेति अयं ह्युपदेशः यत् 'इदमित्थं कर्तव्यम्' इत्युपदिशति। यथा लोके उपदिश्यते- 'दधि-घृत-सूप-शाल्यादिभिः देवदत्तो भोजयितव्यः' इति। वेदे च प्रयाजावघातप्रोक्षणाघाराज्यभागादिभिः अङ्गैः उपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति।

स खल्वतिदेशः यः तद्वदिदं कर्तव्यम् इत्यादिशति। यथा लोके 'देवदत्तवत् यज्ञदत्तः भोजयितव्य' इति। वेदे च-"सौर्येण ब्रह्मवर्चसं संपादयेत् आग्नेयवदुपकृत्य" इति। मीमांसादर्शनेऽस्मिन् द्वितीयादिषष्ठाध्यायान्तो भागः उपदेशस्य विस्तररूपः। सप्तमाध्यायमारभ्य दशमाध्यायावधि अतिदेशस्य विस्तरः। एकादश-द्वादशाध्यायौ उभयसाधारणाविति सुधीभिर्विभावनीयम्।

४-२-३ प्राभाकरसिद्धान्तः— प्राभाकराणां मते सामान्यतः शब्दः लौकिक-वैदिकभेदेन द्विविधः। तत्र लौकिकः शब्दः न

प्रमाणं भवितुमर्हति । स्वयं तस्य निश्चयोत्पादनाक्षमत्वात् । लौकिकवचनानां असत्यभूयिष्ठत्वात् अर्थव्यभिचारस्य च शंक्यमानत्वाच्च । अतः लौकिकवचनानां अन्विताभिधानसामर्थ्ये सत्यपि अनन्वितार्थत्वशङ्कया नान्वयनिश्चय इति नास्ति तेषां प्रामाण्यम् । न च तर्हि न जायेत लोकव्यवहार इति वाच्यम् । अर्थसंशये सत्यपि लोकप्रवृत्तेः दृश्यमानत्वात् । तथा हि - वृष्टौ संदिग्धयामपि तदायत्तफले कृष्यादिके कर्मणि जनाः प्रवर्तन्ते । अतः लौकिकं वचनं न शाब्दप्रमाणमित्युच्यते (प्र. प. २४२-२४४) ।

अत एव कणादेन महर्षिणा वेदानपि पौरुषेयान् मन्यमानेन शब्दस्य न प्रत्येकप्रमाणत्वमङ्गीकृतम् । किन्तु अनुमाने एव तस्यान्तर्भाव इति निश्चयम् । वैदिकश्च शब्दः प्रमाणम् । स च शास्त्रमिति व्यपदिश्यते । शास्त्रशब्दस्य प्रमाणशब्दवत् भावव्युत्पत्तिः करणव्युत्पत्तिः द्विधा चात्र व्युत्पत्तिरुपदर्शिता । यथा - "शिष्टिः शास्त्रमिति ज्ञानम्, शास्त्रं - शिष्यते अनेनेति शब्दः" (प्र. प. २४९) इति । स च शास्त्रापरपर्यायः वैदिकश्शब्दः असंनिकृष्टार्थ इति लौकिकशब्दात् संनिकृष्टार्थात् अयं विलक्षणः । अयं च पुनः द्विविधः - प्रत्यक्षः अनुमेयश्च ।

तन्त्ररहस्यकारस्तु प्रमाणान्तरसंनिकृष्टार्थविषयं लौकिकवचनं अनुमानरूपमेवेति निश्चित्य, शब्दज्ञानसापेक्षात् आत्मनः संनिकर्षात् असंनिकृष्टार्थविषयं ज्ञानं शास्त्रमिति तस्य प्रमाणतां च न्यरूरुपत् (त. र. २७) ।

तदनन्तरं लौकिकवाक्यस्य लिङ्गतया प्रत्यायकत्वमुक्त्वा असंनिकृष्टविषयत्वाभावतया तस्याशास्त्रत्वं चाभिधाय, वैदिकमेव वाक्यं शास्त्रव्यवहारं भजत इति सम्यक् प्रतिपादयाम्बभूव। तच्च शास्त्रं प्रत्यक्षानुमानभेदेन द्विधा व्यभजत्। तत्स्वरूपमित्थम् - प्रत्यक्षशस्त्रं नाम अध्ययनपरिगृहीतः स्वाध्यायात्मकः वेदराशिः। अनुमानशास्त्रं च स्मृत्याचारादिभिः नित्यानुमेयम्। यथा - 'अष्टकाः कर्तव्याः' इत्यादिस्मृत्या मूलशास्त्रानुमानम्[1]। उभयमपि शास्त्रं असंनिकृष्टार्थविषयं प्रमाणमेव।

**४-२-४ समीक्षणम्**— शब्दविभागविषयेऽपि त्रयाणां मध्ये महान् मतभेदः दुरीदृश्यते। नैयायिकाः दृष्टादृष्टार्थभेदेन द्विधा विभजन्ति शब्दम्। तत्र दृष्टार्थः लौकिकः, अदृष्टार्थस्तु वैदिकइत्युच्यते। द्विविधोऽपि शब्दः प्रमाणम्। एवमेव दृष्टार्थप्रवक्तृकः अदृष्टार्थप्रवक्तृकश्चेत्यपि द्विधा शब्दं विभजन्ति नैयायिकाः।

भाट्टास्तु पौरुषेयापौरुषभेदेन द्विधा शब्दविभागमकुर्वन्। तत्र आप्तवाक्यं पौरुषेयम्, वेदवाक्यं अपौरुषेयम्। उभयमपि प्रमाणतया परिगृह्यते भाट्टैः। पुनश्च तैः सिद्धार्थबोधक-विधायकभेदेन शब्दद्वैविध्यमङ्गीक्रियते। विधायकं पुनः उपदेशक-अतिदेशकभेदेन द्विविधम्।

---

1. तत्र लौकिकं वाक्यं लिङ्गतया प्रत्यायकम्। तत्तु न शास्त्रम्। असन्निकृष्टविषयत्वाभावात्। वैदिकमेव शास्त्रमिति सिद्धम्। तत्तु द्विविधम् - प्रत्यक्षनुमानं च। तत्र आद्यं अध्ययनपरिगृहीतस्वाध्यायात्मको वेदराशिः। द्वितीयस्तु नित्यानुमेयः। तत्र लिङ्गं स्मृतिः आचारश्च[त. र. ३९]।

प्राभाकरास्तु लौकिक-वैदिकभेदेन सामान्यतः शब्दं द्विधा विभजन्ति । लौकिकः शब्दः न प्रमाणम् । स चानुमानरूप एव । वैदिकः केवलं प्रमाणम् । वैदिकशब्दस्यैव शास्त्रमिति व्यवहारः । अयं च प्रत्यक्षानुमेयभेदेन द्विविधः ।

नैयायिकमतं शब्दविभागविषये न मीमांसकैः स्वीकृतम् । तत्परीत्यज्य स्वप्रक्रियानुकूलतया शब्दविभागं कृतवन्तः मीमांसकाः । तत्र बीजं तु वेदस्य पौरुषेयतामातिष्ठन्ते नैयायिकाः, तदपौरुषेयतां अङ्गीकुर्वन्ति मीमांसका इति ।

त्रिष्वप्येतेषु मतेषु नैयायिकमतमेव अनौचित्यविरहितं प्रतिभाति । दृष्टार्थादृष्टार्थापरपर्यायलौकिक - वैदिकविभागः लोकानुभवसिद्ध इति स एव समीचीनः पन्थाः । आप्तोक्तत्वसाम्यात् द्विविधश्च शब्दः प्रमाणमेव ।

भाट्टोक्तः पौरुषेयापौरुषेयविभागः न घटते । वेदस्यापि पौरुषेयतायाः नैयायिकमते अङ्गीकारात्[1] । सिद्धार्थबोधकविधायकादिविभागः बहुधा भवितुमर्हतीति अविरुद्धोऽयं विभागः ।

प्राभाकरमते केवलं शास्त्रापरपर्यायस्य वैदिकशब्दस्यैव प्रामाण्यमभ्युपगम्यते । न लौकिकशब्दानापि । अतस्तदपि मतं न साधु । आप्तोक्तत्वं यदि केषुचन लौकिकेषु वाक्येषु भवति तर्हि तदपि लौकिकवाक्यं प्रमाणमेव संपद्यते । अन्यथा लोक-

1. तद्वचनादाम्नायस्य प्रामाण्यम् [वै. द. १-१-३] ।

व्यवहारविलोपापत्तेः । न च अर्थसंशये सत्यपि लोकप्रवृत्तिर्भवतीति वाच्यम् । अर्थस्यात्यन्तसंशये प्रवृत्त्यभावस्यापि दर्शनात् । अथवा श्रोत्रैकग्राह्यजातिमत्वमेव शब्दस्य लक्षणमिति नैयायिकैरुक्ततया सर्वं समंजसम् (प्र. म. १२) । अतः लौकिकः, वैदिकश्च शब्दः प्रमाणं भवतीति लौकिक-वैदिकविभागः प्रसिद्ध एवाङ्गीकार्य इति ।

## ४–३ शाब्दकारणविचारः

४-३-१ न्यायसिद्धान्तः— शाब्दबोधे कानिचित् कारणानि दार्शनिकैः व्युत्पादितानि । यद्यप्यत्र लक्षणादिषु जागर्ति मतभेदः, अथापि स्थूलरूपेण कानिचित् कारणानि आवश्यकानीत्यत्र न केषामपि विप्रतिपत्तिः । न्यायमतानुरोधं आसत्तियोग्यता आकांक्षा-तात्पर्यज्ञानानां शाब्दबोधे कारणत्वमङ्गीक्रियते । ऐदम्प्राथम्येन टीकाकारः वाचस्पतिमिश्रः आकांक्षा-योग्यता-आसत्तिरूपाणि शाब्दकारणानि शब्दतः कीर्तयामास[1] । ततः परिशुद्धिकारः उदयनाचार्यः आकांक्षा-योग्यता-आसत्तिरूपाणि कारणानीति परिशुद्धौ[2], न्यायकुसुमांजलौ च न्यरूरुपत्[3] ।

---

1. तस्मात् पदानि कृतसङ्केतानि स्वार्थान् स्मारयन्ति, आकांक्षा–योग्यता–आसत्तिसध्रीचीनानि अदृष्टपूर्वं वाक्यार्थं बोधयन्ति । न संगतिग्रहणमपि प्रतीक्षन्त इति दूरे अनुमानाद् भवन्ति । [ता. टी. ३७२]

2. आकांक्षा - योग्यता - आसत्तिमत्कदम्बकं वाक्यम् [परि. ३७३]

3. अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः ।
आकांक्षा सत्तया हेतुः योग्यासत्तिरबन्धना ।। [न्या. कु. ३–१३]

४-३·१-१ आकांक्षा — न्यायसिद्धान्ते विलसन्ति बह्व्यः विप्रतिपत्तयः तावदाकांक्षाविषये। तत्र न्यायकुसुमाञ्जलिकार उदयनाचार्यः आकांक्षाविचारं कुर्वन् त्रिचतुराणि लक्षणान्युपपाद्य दूषयामास। तथा हि - विशेषणविशेष्यभाव एव आकांक्षेति न वक्तुं शक्यते। संसर्गस्वभावस्य तस्य साध्यत्वात्। नच तद्योग्यता आकांक्षा। तस्याः योग्यतयैव गतार्थत्वात्। नह्यविनाभावः आकांक्षा। 'नीलं सरोजम्' इत्यादिस्थले अविनाभावाभावेऽपि शाब्दबोधोदयात्। नच तत्र विशेषाक्षिप्तसामान्ययोरस्ति अविनाभाव इति शाब्दबोधोत्पत्तिप्रसंग इति वाच्यम्। 'अहो! विमलं जलं नद्याः, कच्छे महिषश्चरति' इति वाक्यद्वयं एकं वाक्यं प्रसज्येत।

अस्तु तर्हि प्रतिपत्तुर्जिज्ञासैव आकांक्षा। मैवम्। 'पटो भवति' इत्यादौ शुक्लादिजिज्ञासादशायां 'रक्तः पटो भवति' इत्येकदेशवत् शश्वत् वाक्यस्यापर्यवसानं प्रसज्येत (न्या. कु. ३३१–३४१) इति सुबहु विचार्यान्ते आकांक्षास्वरूपमेवमभ्यवर्णि। जिज्ञासायोग्यतैव आकांक्षा[1]। अर्थात् श्रोतरि तदुच्चारणजन्यसंसर्गाविगमप्रागभाव आकांक्षेत्युक्तं भवति।

मणिकारस्तु यस्य पदस्य यदभावप्रयुक्तस्वार्थान्वयाननुभावकत्वं तस्य पदस्य तदननुभावकत्वमेव आकांक्षा[2]। नहि

---

1. आकांक्षापदार्थस्तर्हि कः? जिज्ञासां प्रति योग्यता। सा च स्मारिततदाक्षिप्तयोः अविनाभावे सति श्रोतरि तदुत्पाद्यसंसर्गाविगमप्रागभावः [न्या. कु. ३४१]
2. अभिधानापर्यवसानमाकांक्षा। यस्य येन विना स्वार्थान्वयाननुभावकत्वं तस्य तदेवापर्यवसानम्। अन्वयाननुभावकत्वं च अन्वयानुभवप्रागभावः। अत एव जनितान्वयबोधं पदमनाकांक्षं तदा प्रागभावाभावात्। [त. ता. ७]

समभिव्याहृतपदार्थजिज्ञासा आकांक्षा भवितुमर्हति । शाब्दज्ञाने कदाचित् तदिष्टसाधनतावबोधरहितस्यापि शाब्दबोधदर्शनेन व्यतिरेकव्यभिचारप्रसंगः ।

विश्वनाथन्यायपञ्चाननः आकांक्षामित्थमलिलक्षत् - यथा - समभिव्याहृतपदनिष्ठशाब्दबोधजनकत्वाभावः यत्पदाभावप्रयुक्तः सः समभिव्याहृतपदार्थनिष्ठतत्पदनिरूपिता आकांक्षेति[1] । यथा - कारकपदं क्रियापदं विना अन्वयबोधं न जनयतीति तस्य तेन सहाकांक्षा । 'घटः कर्मत्वं आनयनं कृतिः' इत्यत्र उक्तपूर्वाकांक्षाविरहात् न शाब्दबोधः । आकांक्षाज्ञानं शाब्दबोधे हेतुः ।

अन्नंभट्टस्तु यस्य पदस्य यत्पदान्तराभावेन अन्वयः न जायते तस्य तेन सहाकांक्षा[2] । एतद्रहितं वाक्यं न प्रमाणम् । यथा 'गौरश्वः पुरुषो हस्तीति' । "पदस्यान्वयाविरोधित्वमाकांक्षा" (प. र. मा. १६) इति पदार्थरत्नमालायां रघुनाथः अभिदधे ।

४-३-१-२ योग्यता — तत्वचिन्तामणिकारः गंगेशोपाध्यायः योग्यतामेवं अलिलक्षत् । यथा - "एकपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावो वा, एक-

---

1. यत्पदेन विना यस्याननुभावकता भवेत् ।
आकांक्षा ......................॥
येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्य आकांक्षेत्यर्थः [मुक्ता. ६३८]

2. पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा । [त. स. ५२]

पदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं वा योग्यता" (त. ता. ३५–३६) इति । शंकरमिश्रस्तु वैशेषिकसूत्रोपस्कारे या कापि योग्यता अस्तु, तज्ज्ञानं शाब्दबोधे हेतुरिति बहूनि योग्यतालक्षणानि उपस्थापयामास[1] ।

विश्वनाथेन तु प्रकृतवाक्यघटकैकपदार्थे प्रकृतवाक्यघटकापरपदार्थस्य प्रयोक्तृतात्पर्यविषयः सम्बन्धः योग्यतेति तल्लक्षणमभ्यधायि[2] । तद्विरहात् 'वह्निना सिञ्चति' इति वाक्यं न प्रमाणम् । अन्नंभट्टस्तु - 'अर्थाबाधो योग्यता' (त. स. ५२) इति योग्यतालक्षणमभिदधे । एवं च योग्यताज्ञानं शाब्दबोधे कारणमिति नैयायिकानां सिद्धान्तः ।

४-३-१-३ आसत्तिः — आसत्तिः सन्निधिरित्यनर्थान्तरम् । आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः । सा च स्मृतिः नानुभव इति मणिकारः[3] । अव्यवधानेन स्मरणरूपा आसत्तिरिति उपस्कारे शंकरमिश्रः प्रत्यपीपदत् (वै. उ. २२३) । 'यत्पदार्थेन यत्पदार्थस्य अन्वयः अपेक्षितः तयोरव्यवधानेनोपस्थितिः' (मुक्ता. ४४) इति आसत्तिं अलिलक्षत् विश्व-

---

1. अनन्वयनिश्चयविरहो वा, बाधकप्रमाणाभावो वा, सजातीये दर्शनं वा, इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावाप्रतियोगित्वप्रमाविशेष्यत्वं वा योग्यता अस्तु । तद् ज्ञानमावश्यकम् [वै. उ. २२२-२३]

2. पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ।
एकपदार्थे अपरपदार्थस्य सम्बन्धः योग्यतेत्यर्थः । [मुक्ता. ६३२]

3. अव्यवधानेन पदार्थस्मृतिः । [त. ता. २४]

नाथः[1]। एतदभावे च न शाब्दबोधः। यथा - गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यादिवाक्येषु न शाब्दबोधः।

अन्नंभट्टेन त्वियं सन्निधिरित्येवोक्ता। विना विलम्बं पदार्थोपस्थितिः सन्निधिरिति तेनावोचि[2]। 'गा....आनय' इत्यादिपदानि भिन्नप्रहरयोः असहोच्चरितानि न शाब्दबोधजनकानि सान्निध्याभावात्। इयमप्यासत्तिः ज्ञाता सती शाब्दबोधे समुपयुज्यते। 'पदानां आनन्तर्यमासत्तिः' (प. र. मा. १६) इति पदार्थरत्नमालायां रघुनाथेनापि आसत्तिलक्षणमभ्यधायि।

४-३-१-४ तात्पर्यम्—प्राचीनैः नैयायिकैः शाब्दबोधकारणतया तात्पर्यं नाभ्युपगतम्। 'वक्तुरिच्छैव तात्पर्य'मित्युच्यते। यदि तात्पर्यज्ञानस्य शाब्दबोधकारणत्वं नाभ्युपेयते तर्हि 'सैन्धवमानय' इत्यादिस्थले क्वचिदश्वस्य अन्यत्र लवणस्य च बोधः नोपपद्येत। नच प्रकरणादीनां तात्पर्यग्राहकाणामेव कारणत्वमस्तु इति वाच्यम्। तेषामननुगमात्। यदि तेषां तात्पर्यज्ञानजनकत्वेन अनुगमस्तर्हि लाघवात् तात्पर्यज्ञानमेव कारणमुच्यताम्। अतः अस्ति तात्पर्यम्[3]।

अन्नंभट्टस्तु यद्यपि साक्षात्तात्पर्यज्ञानं शाब्दबोधे कारणमिति आकांक्षादिभिस्सहात्र नाङ्गीकरोति, तथापि शब्दखण्डप्रारम्भे स्वदीपिकायां स्पष्टं तस्य शाब्दबोधकारणत्वं अभ्युप-

---

1. .....सन्निधानं तु पदस्यासत्तिरिष्यते। [कारि. ८२]
2. पदानां अविलम्बेनोच्चारणं सन्निधिः [त. स. ५२]
3. वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्। [कारि. ८४]

गच्छति । यथा - "तत्प्रतीतीच्छया उच्चरितत्वं तात्पर्यम् । तात्पर्यज्ञानं च वाक्यार्थज्ञाने हेतुः" (त. स. ५१) इति । अस्य पदार्थसंग्रहणचातुरी निरतिशया अद्वितीया नैकविधेति तद्ग्रन्थदर्शनेनास्माभिरनुभूयते[1] ।

४-३-२ भाट्टसिद्धान्तः—भाट्टमतानुरोधं पदार्थैः वाक्यार्थे जननीये आकांक्षा-योग्यता-आसत्ति-तात्पर्यज्ञानानि सहकारीणि आवश्यकानीत्युच्यते[2] ।

४–३-२-१ आकांक्षा— अथ पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वामाकांक्षा[3] । क्रियाश्रवणे कारकस्य, कारणश्रवणे क्रियायाः, करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वात् । इयं च आकांक्षा लौकिकेषु वैदिकेषु च वाक्येषु समाना भवति । यथा - 'गामानय' 'समिधो यजति' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिवाक्येषु तस्याः समुपलम्भात् (भा. चि. ५०) ।

---

1. रघुनाथाचार्य, एस्. बि. "अन्नंभट्टः," J. G. J. K. S. V. Vol. XXVIII, 3–4, P. 203-208, Allahabad, 1972.
2. अत्राकांक्षा च योग्यत्वं संन्निधिश्चेति तत्त्रयम् ।
   वाक्यार्थावगमे सर्वैः कारणत्वेन कल्प्यते ।। [मा. मे. ९९]
   सन्निध्यपेक्षायोग्यत्वैः उपलक्षणलाभतः ।
   आनन्त्येऽप्यन्वितानां स्यात्सम्बन्धग्रहणं मम ।।
   आकांक्षितं, संनिहितं, योग्यत्वं च यदर्थान्तरं तेनान्वितं स्वार्थमभिदधति पदानीति [न्या. र. ८४]
3. गौरश्वः पुरुषो हस्तीत्याकांक्षारहितेष्विह ।
   अन्वयादर्शनात्तावदाकांक्षा परिगृह्यते ।। [मा. मे. ९८]

गागाभट्टेन भाट्टचिन्तामणावस्याः लक्षणमेवमुपनिबद्धम्। यथा - 'आकांक्षा च पदनिष्ठा तत्पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपा" (भा. चि. ५०) इति। यथा च - "अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र राजपदस्य पुत्रेण सह अन्वयबोधमुपगतस्य नास्ति पुनः पुरुषसाकांक्षत्वम्। एवमेव वाक्यैकवाक्यतास्थले - "तद्व्यतिरेकप्रयुक्तकार्याजनकत्वमाकांक्षा" इति आकांक्षा अभ्युपगता। तथैव अर्थवादविधिवाक्ययोः एवमाकांक्षाभवति - "अन्यतरव्यतिरेकप्रयुक्तप्रवृत्त्यजनकत्वं" इति (त. सि. र. ६५)।

४-३-२-२ योग्यता— योग्यता नाम तात्पर्यविषयसंसर्गाबाधः। 'वह्निना सिञ्चति' इत्यादिवाक्येषु तादृशसंसर्गः नास्तीति न तत्रयोग्यताज्ञानमुत्पत्तुमर्हति (त. र. ६५)।

गागाभट्टः अन्वयप्रयोजकधर्मवत्त्वं योग्यतेति तल्लक्षणं निर्वक्ति। 'पयसा सिञ्चति' इत्यत्र सेचनरूपक्रियान्वयप्रयोजकस्य जलत्वरूपधर्मस्य सत्वात् योग्यता अस्तीत्युच्यते। किन्तु 'वह्निना सिञ्चति' इत्यत्र पूर्वोक्तधर्मस्य अनुपलम्भात् तत्र न योग्यतेति (भा. चि. ५०-५१)।

भाट्टचिन्तामणौ केषांचिन्मतत्वेन योग्यतालक्षणमेवं प्रत्यपादि - "बाधाभावो योग्यता" इति[1]। तत्रैव अन्यल्लक्षणमेवं प्रतिपादितम्। यथा - "एकपदार्थतावच्छेदके तात्पर्यविषया-

---

1. अग्निना सिञ्चतीत्यादावयोग्यानामनन्वयात्।
योग्यतापि परिग्राह्या संनिधिस्त्वथ कथ्यते। [मा. मे. ९९]

परपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो वा योग्यता" (भा. चि. ५१) इति। इयं च योग्यता न स्वरूपसती हेतुः शाब्दबोधे। किन्तु तद् ज्ञानं हेतुः। तच्च ज्ञानं संशय-निश्चयसाधारणम्।

गागाभट्टेनैव पुनः भाट्टचिन्तामणौ शाब्दबोधे योग्यताज्ञानं न कारणम्। किन्तु अयोग्यतानिश्चयः प्रतिबन्धकः, तदभावः कारणमिति निरूपितम्[1]।

आलङ्कारिकैः शाब्दबोधे, योग्यताज्ञानस्य अयोग्यतानिश्चयस्य वा प्रतिबन्धकत्वं नाभ्युपगम्यते। 'चन्द्रो मुखम्' इत्यादिरूपकस्थले बोधोपगमात्। "एष वन्ध्यासुतो याति खपुष्पधृतशेखरः।" इत्यादिश्लोकार्थशाब्दबोधेन चमत्कारानुभवाच्च इत्यन्यदेतत्।

४-३-२-३ आसत्तिः— विना व्यवधानं पदजन्यपदार्थोऽपस्थितिरासत्तिः। पदार्थाश्रवणदशायां 'द्वारम्' इत्यादौ 'पिधेहि' इति पदाध्याहारानन्तरमेव पदार्थोपस्थितिः[2]। अव्यधानेन अन्वयप्रतियोग्युपस्थितिः आसत्तिरिति गागाभट्टः भाट्टचिन्तामणाववादीत् (भा.चि.५१)। अव्यवधानं च प्रकृतान्वयबोधा-

---

1. वस्तुतस्तु न योग्यताज्ञानस्य कारणता। किन्तु वह्निना सिञ्चेदित्यादौ बोधादर्शनेन अयोग्यतानिश्चयः प्रतिबन्धकः। सा चानुमित्यादिसाधारण्येनैव क्लृप्तप्रतिबन्धकीभूतबाधज्ञानत्वादिनैव शाब्दबोधेऽपि प्रतिबन्धकम्।..... अयोग्यतानिश्चयः प्रतिबन्धकः। तदभावः कारणमित्याहुः [भा. चि. ५१]

2. शब्दस्यैवान्वयार्हत्वात् द्वारमाव्रियतामिति।
शब्दाध्याहार एव स्यात् इत्येवं मादृशां मतम्॥ (श्लो. वा. त. सि. २-६५)

ननुकूलक्षणेन। यथा - "गिरिर्भुक्तमग्निमान् देवदत्तेन" इत्यादिवाक्ये नासत्तिः। नच श्लोकादिषु मास्तु शाब्दबोधः आसत्तिविरहात् इति वाच्यम्। तत्र आसत्तिभ्रमेणैव शाब्दबोधोदयस्येष्टत्वात्।

भाट्टसारानुरोधमियं आसत्तिरुच्यते। यथा - पदजन्यपदार्थोपस्थितिरासक्तिरिति[1]। शब्दध्याहारवादिभिः भाट्टैः पदार्थोपस्थितेः प्राक् अवश्यं पदोपस्थितिः कल्पनीया। अतोऽत्र उपरितनलक्षणे पदजन्येत्युक्तम्।

मानमेयोदयकारः नारायणः आसत्तिं, आसक्तिं वा न निर्दिशति। किन्तु तत्स्थाने सन्निधिमुपपादयति[2]।

४-३-२-४ **तात्पर्यज्ञानम्** — तात्पर्यज्ञानस्य शाब्दबोधकारणतायां विप्रतिपद्यन्ते वादिनः। भाट्टैरपि सर्वैस्तात्पर्यज्ञानं शाब्दबोधे हेतुरिति नाभ्युपगम्यते। मानमेयोदयकर्ता नारायणेन आकांक्षा - योग्यतासन्निधय एव शाब्दकारणसामग्रीत्वेन

---

1. मानान्तरोपस्थितपदार्थानां अन्वयबोधविरहात् पदजन्येति। अत एव द्वारमित्यादौ पिधेहीति पदाध्याहारः। एवं इषे त्वेत्यादौ छिनद्मीति पदाध्याहारः [भा. सा. ५]।

2. शब्दैः सन्निहितत्वेन बोधितत्वं हि पदार्थानां सन्निधिरुच्यते। अतः सन्निहितत्वाभावात् शब्दबोधितत्वाभावाच्च द्वेधा संनिध्याभावो भवति। तत्र भिन्नकालोच्चरितयोः'गां आनय' इति पदयोः संन्निहितत्वाभावात् अनन्वयः। 'गां बधान' इत्यत्र बन्धनापेक्षस्य दृश्यमानस्य अश्वस्य शब्दबोधितत्वाभावादेवानन्वयः [मा. मे. ९९-१००]।

तत्प्रतीतीच्छया वक्त्रा अनुसंहितत्वमेव तात्पर्यम् । पदार्थ-संसर्गोभयतात्पर्यनिश्चयं विना नोत्पद्यते शाब्दबोध इति तस्य तत्कारणत्वमनपलपनीयमिति तदभिप्रायः (भा. चि. ५२)। न च वाच्यम्, अस्तु प्रकरणादिकमेव तत्तच्छाब्दबोधे कारणम् । कृतं तात्पर्यज्ञानेनेति । अननुगतप्रकरणादिज्ञानानां हेतुतायां गौरवप्रसङ्गात् ।

अन्ये च लाक्षणिकनानार्थस्थलीयशाब्दबोध एव तात्पर्य-ज्ञानं कारणं, नतु शाब्दबोधमात्रे । गौरवादिति वदन्ति । भाट्ट-सारकर्ता श्रीकृष्णताताचार्यस्तु तात्पर्यज्ञानमपि शाब्दबोधकारण-मिति अभ्युपगच्छति[2] ।

**४–३·३ प्राभाकरसिद्धान्तः**— प्राभाकरमीमांसकैः आकांक्षा-सन्निधियोग्यताख्यानि शाब्दकारणानि अभ्युपगतानि । तत्स्व-रूपनिरूपणे चैतेषा सरणिः इतरदर्शनेभ्यस्तरां भिद्यते ।

**४–३-३-१ आकांक्षा**— प्राभाकरमते प्रतिपत्तुर्जिज्ञासैव आकांक्षेत्यभिधीयते । सा च अभिधानापर्यवसानात्, अभिहिता-र्थापर्यवसानाद्वा पदार्थान्तरे जायमाना आकांक्षेत्यभिधीयत इति शालिकानाथः प्रत्यपीपदत्[3] तेनैवं न्यरूपि तल्लक्षणम् -

"अभिधानावसाना हि जिज्ञासार्थाच्च जायते ।

---

1. अत्राकांक्षा च योग्यत्वं सन्निधिश्चेति तत्त्रयम् ।
   वाक्यार्थावगमे सर्वैः कारणत्वेन कल्प्यते ।। [भा. मे. ९९]
2. आकांक्षा-योग्यताज्ञानं-आसक्तिः - तात्पर्यज्ञानं चेति चत्वारि सहकारिकार-णानि [भा. स. ५] ।
3. अभिधानापर्यवसानं, अभिधेयापर्यवसानञ्च जिज्ञासोदये निबन्धनम्[प्र.प.३८६]

प्रयोजनावसानाच्च पदार्थे सा निवर्तते ।।" (प्र. प. टी. ३८६) इति । अस्याः स्वरूपं एवमेव सङ्गृहीतं प्रकरणपञ्चिकायामेवम्[1] । तन्त्ररहस्येऽपि रामानुजाचार्येण अभिधानापर्यवसानं अभिधेयापर्यवासनं चेति द्विविधं निबन्धनं एवमेवोपन्यस्तम् आकांक्षायाः[2] ।

सा च आकांक्षा द्विविधा - उत्थापिताकांक्षा, स्वारसिकाकांक्षाभेदेन (त. र. ३०) । तत्र अभिधेयापर्यवसाननिबन्धना उत्थापिताकांक्षा । अभिधानापर्यवसाननिबन्धना स्वारसिकाकांक्षा । यत्र अनेकपदप्रयोगें अभिहितः अर्थः नैव पर्यवस्यति तत्र उत्थापिताकांक्षा भवति । यथा - "दिवा अभुञ्जानः देवदत्तः पीनः" इति तत्र रात्रिभोजनजिज्ञासा समुदेति । ततः 'रात्रौ भुंक्ते' इत्यनेन अन्विताभिधानमुपपद्यते ।

इयं च स्वारसिकाकांक्षा यत्र 'द्वारम्' इत्येकपदप्रयोगे तत्सम्बन्ध्यनुवादेन अन्विताभिधानस्य अपर्यवसानात् प्रतियोगिजिज्ञासा समुत्पद्यते । ततः 'संव्रियताम्' इत्यनेन अन्विताभिधानमुच्यते । इयान् विशेषः यत् - उत्थापिताकांक्षायां अभिधेयापर्यवसाननिबन्धनायां सन्निधिवशात् आकांक्षा कल्प्यते । स्वारसिकाकांक्षायां अभिधानापर्यवसाननिबन्धनायां आकांक्षावशात् सन्निधिरिति[3] ।

---

1. अन्वितस्याभिधानार्थं उक्तार्थघटनाय वा ।
   प्रतियोगिनि जिज्ञासा या साऽऽकांक्षेति गीयते ।। [प्र. प. ३८८]
2. अतः अन्यदेव निबन्धनम् । अभिधानापर्यवसानं अभिधेयापर्यवसानं च ।।
   [त. र. ३०]
3. परिपूर्णेन योग्यस्य समीपस्याप्यनन्वयः ।
   व्युत्पत्तौ तेन शब्दानां आकांक्षाप्युपलक्षणम् ।।
   जिज्ञासा जायते बोद्धुः सम्बन्धिषु यथा यथा ।
   तथा तथैव शब्दानां अन्वितार्थाभिधायिका ।। [प्र. प. ३८८-८९]

ननु 'गामानय शुक्लां दण्डेन', 'रक्तः पटो भवति' इत्यादिषु वाक्येषु शुक्ल-रक्तपदाभ्यां कथं नामान्विताभिधानं स्यात्? ताभ्यामन्तरापि वाक्यपर्यवसानस्य सम्भवादिति चेत् - मैवम्। तयोः पदयोः अप्रयोग एव तदुपपत्तेः। प्रयोगे तु समभिव्याहृतसर्वपदानां सम्भूयकारित्वमिति व्युत्पत्तिबलात् एकवाक्यतापत्त्या तद्विषयामाकांक्षां उत्थाप्यैव ताभ्यां अन्विताभिधानं वक्तव्यम्। अत एवोक्तं शाबरभाष्येऽपि यथा - 'भवति तु रक्तं प्रत्याकांक्षा' (शा. भा. १-२-१७) इति।

ननु संनिधि-योग्यते एव शाब्दकारणे स्याताम्, कृतमाकांक्षयेति चेन्न। सन्निधि-योग्यतासद्भावेऽपि आकांक्षाविरहेण अन्वयानुपपत्तेः। यथा - 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इति वाक्ये पुत्रापसर्पणनिराकांक्षयोः राजपुरुषयोः न परस्परं अन्वय उपपद्यते। आकांक्षायां सत्यां तु वाक्यार्थप्रतिपत्तेः न्यायसापेक्षतया नित्यसापेक्षत्वेन पुत्रेणैव राज्ञः सम्बन्धः, तत्सम्बन्धाकांक्षारहितेन पुरुषेण सह नेति वक्तुं शक्यते। अतः आकांक्षा अवश्यमभ्युपगन्तव्या (प्र. प. ३८८)।

सा च आकांक्षा प्रतियोगिषु सकलेषु नैकदा समुपजायते। किन्तु कारणोपनिपातक्रमानुरोधम्। स च क्रमः प्रथमं विषयाकांक्षा, ततः नियोज्याकांक्षा, पश्चात् करणाकांक्षा, ततः परं तज्जनकपदार्थाकांक्षेति। तदुक्तं प्रकरणपञ्चिकायां शालिकानाथेन। यथा -

"प्रतियोगिषु सर्वेषु नाऽऽकांक्षोदेति तत्क्षणात् ।
कारणोपनिपातानुपूर्व्येण तु यथायथम् ॥" (प्र. प. ३८८) इति ।

४--३-३-२ सन्निधिः— यस्यार्थस्य श्रवणानन्तरं आकांक्षा-योग्यताभ्यां अर्थान्तरे बुद्धिपरिवृत्तिः स सन्निधिरित्युच्यते (प्र. प. ३८९) । स च न केवलं शब्दमूलकः अध्याहृतेनापि अन्विताभिधानस्य सम्भवात् । न च शब्द एवाध्याहृतोऽस्तु, स एव अर्थमुपस्थापयतीति वाच्यम् । अन्विताभिधानानुपपत्तिनिबन्धनो हि अध्याहारः । योग्यप्रतियोग्यर्थोपस्थित्यैव सा अनुपपत्तिः उपशान्तेति शब्दकल्पनाजल्पानवकाशः[1] । अतः नैतेषां भाट्टानामिव न शब्दकृत एव सन्निधिः किन्तु अध्याहृतेन अर्थेनापि सः । अत एवैते अर्थाध्याहारवादिनः इत्यभिधीयन्ते । अयं च सन्निधिः आकांक्षावत् क्रमेण तावद् भवति[2] ।

४--३-३-३ योग्यता— योग्यता खलु सम्बन्धार्हता । सा च लोकप्रमाणसिद्धा । यस्य वा लोकेन योग्यत्वं सुनिश्चितं तस्यैव अन्वयः । यस्य योग्यता न निश्चिता न तस्य । यथा - 'वह्निना सिञ्चति' इत्यत्र वह्निसेकयोः सम्बन्धः लोकप्रमाणबाधितः । अतः सेचनयोग्यता वह्नेः नास्तीति वक्तव्यम् ।

---

1. संनिधिः शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् ।
अध्याहृतेनाप्यर्थेन लोके सम्बन्धदर्शनात् ॥ [प्र. प. ३९०]

2. सहसैव न सर्वेषां संनिधिः प्रतियोगिनाम् ।
संनिधापकसामग्री क्रमेण क्रमवानसौ ॥
यथा यथा संनिधानं जायते प्रतियोगिनाम् ।
तथा तथा क्रमेणैव शब्दैरन्वितबोधनम् ॥ [प्र. प. ३९०]

वेदे च सन्निहितस्याप्ययोग्यस्य प्रकरणवशादुत्कर्षः सञ्जायते । यदि तथा लोके तर्हि निग्रहस्थानप्रसङ्गः (त. र. ३१) । सामान्यतः योग्यताविनिश्चयः विशेषान्वयज्ञाने हेतुर्भवति । लौकिककार्यसम्बन्धयोग्यं वस्तु वेदेऽपि तथा भवितुमर्हतीति निश्चप्रचम्[1] । एवं शाब्दकारणानि प्राभाकरैः अङ्गीकृतानि - आकांक्षा-सन्निधियोग्यताख्यानि त्रीणि व्युत्पादितानि ।

४--३-४ **समीक्षणम्** — शाब्दबोधकारणविषये मतत्रये समस्ति महान् भेदः । तथा हि - नैयायिकाः आकांक्षा-योग्यता-आसत्ति-तात्पर्यज्ञानानि शाब्दबोधे कारणनीति भावयन्ति । तत्र आसत्तिः सन्निधिरित्यनर्थान्तरम् । प्राचीनैः नैयायिकैः तात्पर्यज्ञानस्य शाब्दकारणता नाभ्युपगता । नव्यैस्तु तदपि शाब्दकारणमिति निश्चितम् ।

भाट्टैरपि आकांक्षा-योग्यता-आसत्ति-तात्पर्यज्ञानानि शाब्दकारणानीत्यभ्युपगतानि । तत्र भाट्टसारकर्ता आसत्तिस्थाने आसक्तिमुपस्थापयति । मानमेयोदयकारः सन्निधिरित्येव तां व्यवहरति ।

प्राभाकरास्तु आकांक्षा-सन्निधि योग्यतानामेव शाब्दबोधकारणत्वमङ्गीकुर्वन्ति । तात्पर्यज्ञानं न तैः स्वीकृतम् । सन्निधिस्थाने न तैरासत्तिपदं प्रयुज्यते । एवं च पदविषयकभेदे साम्ये च सत्यपि स्थूलरूपेण आकांक्षा योग्यता-सन्निधयः शाब्दकारणा-

---

1. सामान्येनैव योग्यत्वं लोके यदवधारितम् ।
तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम् ॥ [प्र. प. ३९१]

नीत्यत्र न केषांचन विप्रतिपत्तिः । नैयायिकैः, भाट्टैश्च तात्पर्यज्ञानस्यापि शाब्दकारणता अङ्गीकृता । न प्राभाकरैः तदङ्गीकृतमिति भेदः । तात्पर्यज्ञानस्यापि शाब्दकारणताङ्गीकारे नैयायिकमतं भाट्टैः परिगृहीतं प्राभाकरैश्च परित्यक्तम् ।

४--३-४-१ **आकांक्षा**— नैयायिकमते यस्य पदस्य यदभावप्रयुक्तस्वार्थान्वयाननुभावकत्वं तस्य पदस्य तदनुभावकत्वमेवाकांक्षा । भाट्टमते - पदनिष्ठा तत्पदनिष्ठव्यतिरेकप्रयुक्तान्वयननुभावकत्वरूपा आकांक्षा । प्राभाकरमते - अभिधानापर्यवसानात्, अभिहितार्थापर्यवसानाद्वा पदार्थान्तरे जायमाना प्रतिपत्तिः जिज्ञासा आकांक्षा । अत्र नैयायिकमतं भाट्टैः स्वीकृतम् । किन्तु प्राभाकरैः तत्परित्यज्य अन्यथा आकांक्षा व्युत्पादिता ।

४--३-४-२ **योग्यता**— नैयायिकमते - एकपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावो वा, एकपदार्थसंसर्गे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं वा योग्यता । भाट्टमते - "तात्पर्यविषयसंसर्गाबाधः योग्यता' । प्राभाकरमते - 'संबन्धार्हता योग्यता' ।

एवं प्रतिमतं बहूनि लक्षणानि योग्यतायाः विषये समुपलभ्यन्ते । एषु सर्वेष्वपि लक्षणेषु नैयायिकग्रन्थप्रभावः मीमांसकग्रन्थेषु भूयान् दरीदृश्यते । भाट्टचिन्तामणिकारः सर्वत्रापि मणिकारपद्धतिमेव लक्षणपरिष्कारादिषु अनुसरति ।

४-३-४-३ **आसत्तिः**—न्यायमते - अव्यवधानेन अन्वयप्रतियोग्युपस्थितिः आसत्तिः । भाट्टमते - "विना व्यवधानं पदजन्य-

पदार्थोपस्थितिः आसत्तिः' । प्राभाकरमते - 'यस्यार्थस्य श्रवणानन्तरं आकांक्षा-योग्यताभ्यां अर्थान्तरे बुद्धिपरिवृत्तिः स सन्निधिः ।'

अत्र नैयायिकमतानुरोधी भाट्टपक्षः । प्राभाकराणां तु पन्था अन्यादृशः । नैयायिकमतं अथवा भाट्टमतं नानुसरन्ति प्राभाकराः प्रकृत इति भावः ।

४-३-४-४ तात्पर्यम्—नैयायिकमते–'वक्तुरिच्छैव तात्पर्यम्' । वेदविषये वक्तुरभावात् कथं तत्र तात्पर्यकल्पनं घटते? इति चेत्मैवम् । तदर्थं तत्रेश्वरस्य कल्प्यमानत्वात्[1] । तत्र नाध्यापकतात्पर्यज्ञानं कल्पयितुं शक्यते । सृष्टयारम्भे तदसंभवात् । एवमेव शुकवाक्येऽपि ईश्वरीयतात्पर्यज्ञानस्य कारणत्वम् । विसंवादिशुकवाक्ये 'वह्निना सिञ्चति' इत्यादौ ईश्वरीयेच्छायाः विसंवादित्वापत्त्या तस्य सत्यसंकल्पत्वक्षतिप्रसङ्गात्, शिक्षयितुः तात्पर्यज्ञानमेव तत्र कारणतया स्वीक्रियत इति तात्पर्यज्ञानांगीकारे न काऽप्यनुपपत्तिः[2] ।

भाट्टमते - न सर्वैः तात्पर्यज्ञानस्य कारणत्वमभ्युपेयते । गागाभट्टस्तु - तत्प्रतीतीच्छया वक्त्रा अनुसंहितत्वमेव तात्पर्यम् इत्यभ्युपगच्छति । प्राभाकरमते - तात्पर्यज्ञानस्य शाब्दकारणत्वं नाभ्युपगम्यते ।

---

1. तद्वचनादाम्नायस्य प्रामाण्यम् । [वै. द. १-१-३]
2. इत्थं च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते । न च तत्र अध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम् । सर्गादावध्यापकाभावात् । ....... इत्थं च शुकवाक्येऽपि ईश्वरीयतात्पर्यज्ञानं कारणम् । विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम् [मुक्ता. ४८]

अत्र सर्वथा नैयायिकमतमेव भाट्टैरूरीक्रियते । तात्पर्यस्य शाब्दकारणताङ्गीकारे, आकांक्षा-योग्यता-सन्निधीनां लक्षणपरिष्कारे च नैयायिकमतमेव भाट्टैः स्वीकृतम् । प्राभाकरास्तु किञ्चिदिव विप्रतिपद्यन्ते । सादृश्यदृष्ट्या परिशीलने क्रियमाणे नैयायिकमतमेव अन्यमतापेक्षया साध्विति प्रतिभाति । विस्तरभिया नात्र युक्तिप्रदर्शनादिकं तन्यते । न्यायसिद्धान्तप्रदर्शनावसरे प्रागेव तत्तच्छाब्दकारणानां आवश्यकतायाः सोपष्टम्भं प्रतिपादितत्वात् ।

## ४-४ शब्दार्थसंबन्धमिचारः

४-४-१ न्यायसिद्धान्तः— लोके हि बहुभिः शब्दैः बहवः अर्थाः बोध्यन्ते । अपि नाम एतेषां शब्दानां तद्बोध्यानामर्थानां च अस्ति कश्चन सम्बन्धः उत नेति संशयः । यद्यस्ति तर्हि किं रूपोऽयम् ? किं नित्यः उत अनित्य इति च विचिकित्सा । तत्र न्यायमतानुरोधं अस्ति शब्दार्थयोः सम्बन्धः । नायं व्याप्यव्यापकभावलक्षणः । पूरण-प्रदाह-पाटनानुपलब्धेः[1] । अयं प्राप्तिलक्षणः सम्बन्धः निषिद्धः । किन्तु अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषः अनुज्ञातः । स्वर्गः अप्सरसः, उत्तराः, कुरवः, सप्तद्वीपाः, इत्यादिभिः शब्दैः ये अर्थाः प्रतिपद्यन्ते ते आप्तोपदेशसामर्थ्यादेव । न तु व्याप्यव्यापकभावः तत्र वक्तुं

---

1. पूरणप्रदाह पाटनानुपलब्धेश्च सम्बन्धाभावः । [न्या. द. २-१-५३]

शक्यते[1]। तत्र सामर्थ्यमित्यनेन आकांक्षा-योग्यतादि-कारण-सामग्री प्रतिपाद्यत इति वृत्तिकारः विश्वनाथपञ्चाननः[2]।

शब्दार्थयोः सम्बन्ध एव नास्तीति वक्तुं न शक्यते। यतः कश्चन शब्दः कञ्चिदेवार्थं बोधयति न सर्वः शब्दः सर्वमर्थमिति लोकानुभावत्[3]। अतः समयकारितः शब्दार्थसम्प्रत्यय इति अभ्युपगच्छामः। कोऽयं समयः? अभिधानाभिधेयनियमनियोगः। स च शक्तिग्रहाधीनः। न तु स्वाभाविकः। सामयिकः स उच्यते[4]। अत एव कार्यकारण - निमित्तनैमित्तिक-आश्रयाश्रयिभावादयः संबन्धाः न शब्दार्थयोरपि प्रतिषिद्धाः। शक्तिग्रहाधीनः अभिधानाभिधेयनियमरूपः सम्बन्धः अभ्युपगतः। शक्तिश्च नैसर्गिकी दीपादिना यथा रूपं प्रकाशयति तथा शब्दद्वारा अर्थं प्रकाशयति[5]। अतः नैयायिकमते समय एव सम्बन्धः।

स च समयः ईश्वरकल्पितः। स च वृद्धव्यवहारादिना अस्माभिः गृह्यते। तथा गृहीतशक्तिकेनैव शब्देनार्थः बोध्यते[6]।

---

1. आप्तोपदेशसामर्थ्यात् शब्दार्थसम्प्रत्ययः। [न्या. द. २-१-५२]
2. आप्तस्य भ्रमादिशून्यस्य य उपदेशः शब्दः, तत्र यत्सामर्थ्यं आकांक्षा योग्यतादिमत्त्वं ततः। [न्या. सू. वृ. १५३]
3. See CHATTERJEE, Satischandra, "Early Nyāya-Vaiśeṣika", *HPEW* Vol. I. pp. 219-230.
4. शब्दार्थव्यवस्थानात् अप्रतिषेधः।
   न, सामयिकत्वात् शब्दार्थसम्प्रत्ययस्य। [न्या. द. २-१-५४, ५५]
5. शक्तिस्तु नैसर्गिकी। यथा रूपप्रकाशिनी दीपादेः तथा शब्दस्य अर्थप्रतिपादने। [न्या. म. २४१]
6. अङ्गुल्यग्रेण निर्दिश्य किञ्चिदर्थं पुरः स्थितम्।
   व्युत्पादयन्तो दृश्यन्ते बालानस्मद्विधा अपि॥ [न्या. म. २४५-२४६]

मणिकारेण गङ्गेशोपाध्यायेन स च समय एव सङ्केत इत्युक्तः। "अस्माच्छब्दात् अयमर्थो बोद्धव्य इति ईश्वरेच्छारूपः सङ्केत एव शक्तिः। न त्वौत्पत्तिकः सम्बन्धः" (त. ता.२५५) इति।

गोकुलनाथोपाध्यायेन पदवाक्यरत्नाकरेऽपि शब्दार्थयोः सङ्केताख्यः सम्बन्धः अभ्युपागामि। स च द्विधा विभक्तश्च[1]। विश्वनाथस्तु शक्तिरेव पदेन सह पदार्थस्य सम्बन्ध इत्युवाच। स च 'अस्मात् शब्दात् अयमर्थो बोद्धव्य' इति ईश्वरेच्छारूप इति प्राचीनाः। तैः आधुनिकसङ्केतितेऽपि शब्दे ईश्वरेच्छा अङ्गीक्रियते। आधुनिकसङ्केतिते शक्तिरेव नास्तीति साम्प्रदायिकानां मतम्। शक्तिग्रहोऽयं व्याकरणादिभिर्भवति[2]।

अन्नंभट्टस्तु पदार्थस्मृत्यनुकूलः पदपदार्थयोर्मध्ये विद्यमानः सम्बन्धः शक्तिरूप इति कथयति। सा च सङ्केत एव, न तु

---

1. तादृशार्थावगाहित्वतत्पदप्रभवत्वयोः।
एकत्र बुद्धौ सङ्केतः शब्दस्यार्थेन संगतिः॥

गवादिपदजन्यत्व-गोत्वादिविशिष्टविषयकत्वोभयमेकस्यां बुद्धौ एकत्र द्वय-न्यायेन विशिष्टवैशिष्ट्यरीत्या वा अवगाहमानः गोपदात् गोत्वविशिष्ट-विषयिका बुद्धिः जायतामित्याकारकसङ्केत एव गोपदस्य गोत्वविशिष्टेन सह सङ्गतिः [प. वा. र. ६७-६८]

सङ्केतो द्विविधो नित्यो जन्य इत्यादिमोऽभिधा।
अपरः परिभाषा तावविशेषेण बोधकौ॥

नित्यो भगवत्समवेतो अभिधेति व्यवह्रियते। जन्यः जीवसमवेतः परिभाषेत्युच्यते। तयोः सङ्केतत्वेनैव स्मारकत्वं अनुभावकत्वं चेति युज्यते।
[प. वा. र. १११]

2. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ [मुक्ता.५४८]

पदार्थान्तरम्[1] । आधुनिकैश्च इच्छामात्रं शक्तिः इत्यभ्युपगतम् । न तु ईश्वरेच्छायाः तत्र प्रवेशः । आधुनिकसङ्केतितेऽपि शक्त्यङ्गीकारात् ।

४-४-२ भाट्टसिद्धान्तः— औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः (मी. द. १-१-५) इति हि जैमिनिसूत्रम् । औत्पत्तिकपदं नित्यपरतया व्याचख्यौ शबरस्वामी[2] । तथैव पार्थसारथिमिश्रश्च शास्त्रदीपिकायाम्[3] ।

ननु नास्ति शब्देन अर्थस्य कश्चन सम्बन्धः । तथा हि - न तावत् संयोगः शब्दार्थयोः सम्बन्धो भवितुमर्हति । क्षुरादिशब्दोच्चारणे मुखस्य पाटनादर्शनात् । तथैव मोदकशब्दोच्चारणे मुखस्य पूरणादर्शनाच्च । न चास्तु कार्यकारणभावः तत्सम्बन्ध इति वाच्यम् । द्वयोरपि नित्यत्वात्[4], भिन्नसामग्रीकत्वाच्च । शब्दः किं वर्णमात्रं वा स्फोटो वा जातिर्वा ज्ञानं वेत्यादि विकल्पेन तस्य दुर्निरूपतया, तथा अर्थोऽपि किं व्यक्तिर्वा, आकृतिर्वा, सम्बन्धो वा, समुदायो वेत्यादिविकल्पेन तस्यापि दुर्निरूपतया, गगाराद्याकारं विज्ञानमेव शब्दः, तज्जनितं गवा-

---

1. अर्थस्मृत्यनुकूलः पदपदार्थसम्बन्धः शक्तिः । .... सङ्केत एव शक्तिः [त. स. ५०]
2. औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । अवियुक्तः शब्दार्थयोर्भावः सम्बन्धेन नोत्पन्नयोः पश्चात् सम्बन्धः, औत्पत्तिकः शब्दस्यार्थेन सह सम्बन्धः । [शा.भा. ४६]
3. पदपदार्थसम्बन्धस्य नित्यत्वमौत्पत्तिकशब्देनोक्तम् । [शा. दी. ४४]
4. अनित्यत्वे हि शब्दानां शशशृङ्गप्रहारवत् । शब्दात्मकानां वेदानां नित्यत्वं हास्यतां व्रजेत् ।। [मा. मे. २२८]

द्याकारविज्ञानमेवार्थः इति कार्यकारणभाव एव शब्दार्थयोः सम्बन्धः इति चेत् - मैवम् ।

निरालम्बनज्ञानानुत्पत्तेः । स्यादेतत् समवायः शब्दार्थयोः सम्बन्ध इति, युतसिद्धत्वात् । अत एव संयोगसमवायाद्यभावादेव तद्घटितसम्बन्धान्तराणामपि निरवकाशः । अतः नास्ति कश्चन शब्दार्थयोः सम्बन्ध इति चेत् -

अत्रोच्यते । अस्ति शब्दार्थयोः प्रत्याय्यप्रत्यायकभावाख्यः सम्बन्धः । विना सम्बन्धान्तरं स्वभावत एव शब्दः अर्थस्य प्रत्यायकः । अर्थश्च प्रत्याय्य इति प्रत्याय्यप्रत्यायकभाव एव सम्बन्धः शब्दार्थयोरिति लोकानुभवसिद्धत्वात् । इदं चार्थप्रतिपादनं शब्देन क्रियमाणं इन्द्रिय-लिङ्गादिवत् सन्निकर्ष-व्याप्त्यादिसम्बन्धानपेक्षमभिधानमित्युच्यते । तस्यैव संज्ञासंज्ञित्वमित्यपि व्यवहारः । यतश्चायमभिधीयते संज्ञासंज्ञिलक्षणः सम्बन्ध इति[1] ।

अथ शब्दस्यार्थप्रतिपादने किं प्रमाणम् ? शब्दानुपदमुपजायमाना अर्थप्रतिपत्तिरेव । नचेयं प्रतिपत्तिः अभिप्रायानुमानद्वारैव उपपन्नेति वाच्यम् । अर्थाभिप्रायशून्येन जनेन स्वप्नदशायां परवशतया प्रयुक्तैश्शब्दैरपि अर्थप्रतिपत्तिर्भवतीति

1. स्यादेवं यद्यसम्बन्धः शब्दार्थयोः, अस्ति तु सम्बन्धः प्रत्याय्यप्रत्यायकत्वलक्षणः, असत्येव सम्बन्धान्तरे स्वभावत एव शब्दः अर्थस्य प्रत्यायकः अर्थश्च प्रत्याय्य इत्ययमेव सम्बन्धो भविष्यति । यच्चेदं इन्द्रियलिङ्गादिवत् सन्निकर्षव्याप्त्यादिसम्बन्धानपेक्षं अर्थप्रतिपादनं इदमेव अभिधानमित्युच्यते । तदेव च संज्ञासंज्ञित्वम्, तेनोच्यते संज्ञासंज्ञिलक्षणः सम्बन्ध इति । [शा. दी. ९०]

लोकानुभवात् । एवमेव पुरुषान्तरकृतं, अथवा अपौरुषेयं वेदवाक्यं अर्थज्ञानरहितैरपि जनैः प्रयुज्यमानं विचक्षणानां अर्थज्ञानमवश्यं उपजनयत्येव । अतः प्रत्यायकः शब्दः, अर्थस्तु प्रत्याय्यः ।

नच यदि प्रत्यायकः शब्दः तर्हि प्रथमश्रवण एव स प्रत्याययेत् इति वाच्यम् । सहकारिकारणाभावात् । यथा नेत्रस्य दृश्यदर्शने आलोकः अङ्गं तथा शब्दस्य अर्थप्रत्यायने संज्ञात्वग्रहणमपि । अतः यो वा जनः 'अयं शब्दः अस्यार्थस्य संज्ञा' इति ज्ञातवान् इतरेभ्यः तस्यैव प्रत्याययति शब्दः अर्थं, नान्यस्य । एतावता अस्ति प्रत्याय्यप्रत्यायकलक्षणः शब्दार्थयोः सम्बन्धः नित्य इति सिद्धम्[1] (सि. च ९०-९१) ।

नन्वेवमपि प्रत्याय्यप्रत्यायकलक्षणः शब्दार्थयोः सम्बन्धः कथमपौरुषेयः नित्यः सिध्यति? तत्प्रतिपादकवाक्येष्विव तस्य पौरुषेयत्वस्य अनित्यत्वस्य च स्पष्टं प्रतीयमानत्वात् । तथा हि-प्रत्यायकत्वं हि शब्दस्य पुरुषाधीनम् । एवं च देवदत्तादिशब्दवत् अस्यार्थस्य संज्ञेयम् इति सम्बन्धे निश्चिते ततः शब्दः अर्थं प्रतिपादयितुमीष्टे इति अयत्नसिद्धं पौरुषेयत्वमिति चेत् (शा. दी. ९१) · मैवम् । सर्वेषां शब्दानां प्रत्येकं सम्बन्धकरणस्य दुष्करत्वात् यदि न कश्चित् शब्दः केनाप्यर्थेन सम्बद्धः तर्हि कथं सम्बन्धकरणमपि संभवेत् ? सम्बन्धकर्त्रा हि अवश्यं केनचिद्वाक्येन स कर्तव्यः । यथा - 'गौः सास्नादिमान्' इति ।

---

1. एतादृशस्य पदस्य पदार्थेन सह प्रत्याय्यप्रत्यायकलक्षणः सम्बधोऽपि नित्य एव [भा. मे: २७७-२७८]

ननु अप्रसिद्धसम्बन्धस्य कथनमपि नोपपद्यते । यद्यपि स सम्बन्धः वक्तुः प्रसिद्धः, तथापि श्रोतृणां बालानां अनधिगतसम्बन्धानां कथं नाम स्यात् प्रतिपत्तिः तस्य सम्बन्धस्येति वाच्यम् । उपायसम्भवात् । अप्रसिद्धसमस्तशब्दार्थाश्च बालाः वृद्धेभ्यः सम्बन्धं प्रतिपद्यन्त इति लोकानुभवः । किञ्च सर्वेषां शब्दानां सम्बन्धकथनवाक्येनैव तदवगमः बालानां भवतीत्यपि नास्ति नियमः । अन्यः कश्चिदुपायोऽप्यस्ति । प्रसिद्धसम्बन्धैः वृद्धैः भाष्यमाणे बहुविधकार्यकलापे सावधानं शृण्वन्तः बालाः प्रतिपद्यन्ते सम्बन्धविशेषान् ।

एवं प्रथमतः गामानयेत्यादिव्यवहारवशात् सास्नादिमद् गवानयनं पश्यति बालः । तदा सम्मुग्धाकारेण जायते तस्य प्रत्ययः 'अस्माद् वाक्याद् अयमर्थः प्रत्यायित' इति । पश्चात् वाक्यावयवानां पदानां, पदभागानां प्रकृतिप्रत्ययानां च तत्तत्पदार्थेषु जायते प्रतिपत्तिरिति न पौरुषेयः सम्बन्ध, किन्तु स्वभावसिद्ध एवेति भावः (शा. दी. ११७) ।

**४–४-३ प्राभाकरसिद्धान्तः—** प्राभाकरमते शब्दार्थयोः प्रत्याय्यप्रत्यायकभावलक्षणः सम्बन्धः अभ्युपगतः[1] । स च वाच्यवाचकभाव एव । स पुनः अपौरुषेयः । उक्तं हि भगवता जैमिनिना - "औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः । तस्य ज्ञानमुपदेशः अव्यतिरेकश्चार्थे अनुपलब्धे तत्प्रमाणम् बादरायणस्या-

---

1. गवादिपदेषु तु केवलकार्यदर्शनमात्रकल्पनीयः नावकाशं लभत इति, अपौरुषेयशब्दानामर्थेन प्रत्याय्यप्रत्यायकभावलक्षणः सम्बन्ध इति [प्र. प. २३४]

नपेक्षत्वात्" (मी. द. १-१-५) इति । अत्र 'औत्पत्तिकः' - स्वाभाविकः, अपौरुषेयः, नित्यः (त. र. २२) इति तन्त्ररहस्यकारः व्याचख्यौ । तथा हि - वर्णानां नित्यतया अर्थानां च प्रवाहरूपेण नित्यतया सम्बन्धस्यापि नित्यत्वमभ्युपगन्तव्यमिति[1] ।

ननु कथं शब्दानां स्वभावतः प्रत्याय्यप्रत्यायकभाव उपपद्यते ? यदि तथा स्वभावत एव अर्थं शब्दः प्रत्याययेत्[2], तथा प्रथमश्रुतः शब्दः कथं नार्थं प्रत्याययितुं प्रभवति? अतः कथमेतदुपपद्यते शब्दार्थयोः नित्यः सम्बन्ध इति चेत् – मैवम् । प्रथमश्रुतात् शब्दात् अर्थावबोधः नैव जायतां नाम । तथापि शब्दस्य स्वाभाविकतयैव अर्थप्रत्यायकत्वे न कापि हानिः । तथा हि - वृद्धव्यवहारदर्शनेन कश्चित् एकस्य वाक्यप्रयोगं, प्रवर्तमानस्य परस्य प्रवृत्तिं च गृहीत्वा बुद्धिमनुमाय तस्याः शब्दहेतुतां निश्चिनोति । ततः वृद्धस्यार्थप्रतिपादने स्वस्याप्रतिपादने को हेतुरिति संशेते । तदनु अर्थप्रत्यायकत्वावगम एव तत्र विशेष इति निर्धारयति । न सङ्केतप्रतीतिः विशेष इति मनुते । सङ्केतस्य तदा अप्रतीतेः । शब्दस्वभावत एव अर्थप्रतीति सिद्धेः (प्र. प, २३३) ।

---

1. शब्दार्थयोस्तावत् प्रत्याय्य-प्रत्यायकभावलक्षणः सम्बन्धः । वाच्यवाचक, भाव इति यावत् । स चापौरुषेयः [त. र. २२]

2. अथ कः सम्बन्धः? प्रत्याय्यप्रत्यायकभावः । न तर्हि अपौरुषेयः सम्बन्धः, स्वभावतः शब्दस्य अप्रत्यायकत्वात् । यदि हि स्वभावत एव शब्दः अर्थं प्रत्याययेत् ततः प्रथमश्रुतः किं न प्रत्याययेत् ? ततः अवगच्छामः, अपेक्षते किञ्चिच्छब्द इति [प्र. प. २३२]

नच वाच्यम् देवदत्तादिपदेष्वपि मास्तु कारणत्वं सङ्केतस्येति। तत्र सङ्केतस्य प्रत्यक्षतः दृश्यमानत्वात् न स कल्पनीयः। अतः तत्र सङ्केतस्यैव अर्थप्रतीतिनिमित्तता अस्तु। गवादिपदेषु तावत् कार्यदर्शनमत्रकल्पनीयः सङ्केत इति न तत्र स आवश्यकः। अतः शब्दानां अर्थैस्सह प्रत्याय्यप्रत्यायकभावरूपः सम्बन्धः अपौरुषेयः नित्य इति सिद्धम् (प्र. प. २३४)।

ननु वर्णानां कथं नाम नित्यत्वं संगच्छते। तेषां उच्चारणमात्रापवर्गित्वात्। तथा हि - एवं खलु शब्दोत्पत्तिः। तत्तद्वर्णोच्चारणापेक्षया पुरुषप्रयत्नप्रेरितः वायुः कौष्ठ्यः नाभिमण्डलदेशात् उपरि गच्छन् वक्षः - कण्ठ - शिरो - जिह्वामूल - दन्त - नासिका - ओष्ठप्रदेशैस्सह लब्धसंयोगः श्रोतुः श्रोत्रदेशेन संयुज्यते। ततः पुनः तत्र वर्तमानः निश्चलः स अपगच्छति। ततः परं तत्र वर्णाः उपलभ्यन्ते। एवं कर्णशष्कुल्यवच्छिन्नाकाशरूपमेव श्रोत्रं शब्दश्च आकाशगुणः। श्रोत्रेन्द्रियेण समवायाख्य सन्निकर्षेण गृह्यते।

अपिच प्रयत्नस्य अभिव्यञ्जकत्वमपि नाङ्गीकर्तुं शक्यते। आवरणापनयनेन इन्द्रियसंस्कारेण, विषयसंस्कारेण वा किञ्चिद्वस्तु अभिव्यज्यते लोके। शब्दस्य तु अभिव्यक्तौ त्रितयमपीदं नोपकारकम् (त. र. २२)। अतः अनित्यः शब्दः, अनभिव्यञ्जकप्रयत्नानन्तरीयकत्वात्, घटवत् (त. र, २३) इति चेत्—

अत्रोच्यते - शब्दानित्यत्वसाधकस्य उक्तपूर्वस्यानुमानस्य विशेषणासिद्धत्वात्। तथा हि - कौष्ठ्यवायोः संस्कारः श्रोत्र-

प्रदेशसंयोग एव । निश्चलवायोरपगमः नान्तरीयकः, तत्सहकारी वा । ततः तत्संस्कृतं श्रवणेन्द्रियं शब्दं गृण्हाति । तत्संयोगाभावे च शब्दोपलम्भः विच्छिन्नो भवति । शब्दोत्पत्तिवादिभिः कारकभेदः अङ्गीकृत. । प्राभाकरमते च स एव व्यञ्जकभेद इत्युच्यते । तथा चानुमानप्रयोग.-"शब्द. प्रयत्नाभिव्यङ्ग्य:, तदनुत्पाद्यत्वे सति तदनन्तरमुपलब्धेः । यो यदनुत्पाद्यत्वे सति यदनन्तरमुपलभ्यते स तदभिव्यङ्ग्यः । यथा · प्रदीपानन्तरमुपलभ्यमानः घटः" (त. र. २३) इति । अतः शब्दार्थयोः सम्बन्धः अनादिः अपौरुषेयः प्राभाकरमते अभ्युपेयत इति ज्ञेयम्[1] ।

४ ४-४ **समीक्षणम्**— अस्ति शब्दार्थयोः कश्चन सम्बन्ध इति नैयायिकैः मीमांसकैश्चाङ्गीक्रियते । तत्र कोऽसौ सम्बन्धः इत्युक्ते - नैयायिकाः शक्तिग्रहाधीनः अभिधानाभिधेयनियमरूपः स इति प्रतिपादयन्ति । मीमांसकास्तावत् प्रत्याय्यप्रत्यायकलक्षणः अपौरुषेयः नित्यः सम्बन्ध इति च वदन्ति[2] । स च प्राभाकराणां वाच्यवाचकभाव एव ।

भाट्टानां प्राभाकराणां च समान एव सम्बन्ध इष्टः । अतः अत्र विषये नैयायिकाभ्युपगतः पक्षः तैः परित्यक्त इत्येव

---

1. इत्थं वर्णानां नित्यत्वात् अर्थस्य च प्रवाहरूपेण नित्यत्वात् तत्संबन्धस्य अनादितया अपौरुषेयत्वम् । तथा हि - इदानीन्तनवृद्धव्यवहारे इदानीन्तनव्युत्पित्सूनां शक्तिग्रहः । तथा पूर्वव्युत्पित्सूनां पूर्ववृद्धव्यवहारे । तथा पूर्वतराणां पूर्वतरे इत्यनिदंप्रथमे संस्कारमण्डले शब्दार्थपरम्परायाः अनादित्वात् तत्सम्बन्धस्यापि अनादित्वम् । [त. र. २४]

2. दृश्यतां श्रीकेदारनाथत्रिपाठी, "प्रमाणेषु शब्दस्य स्थानम्" सरस्वतीसुषमा, २४(१) [पृ. १०५–८९]

वक्तव्यम् । मीमांसकैश्चात्र नूतनः पन्थाः अनुसृतः । एवं नैयायिकपक्षपरित्यागे मीमांसकाभ्यामुभाभ्यां एकपक्षाश्रयणे च अस्ति किञ्चिन्निमित्तम् । तथा हि - मीमांसकमते हि अपौरुषेयः वेदः । अतस्तैः शब्दार्थसम्बन्धस्यापि अपौरुषेयस्य नित्यस्य औत्पत्तिकस्य परिकल्पने महानादरः प्रदर्श्यते । शक्तिग्रहाधीनः अभिधानाभिधेयनियमरूपः सम्बन्धः नैयायिकवत् यदि तैरभ्युपगम्यते तर्हि अपौरुषेयत्वं वेदानां नैव सिध्येत् । अतः इयान् प्रयासः तैः साग्रहं अनुभूत इति ।

शब्दार्थयोः अभिधानाभिधेयनियमरूपः सम्बन्ध इति प्रतिपादयतां नैयायिकानां पक्ष एव साधीयान् । मीमांसकाभ्युपगतः प्रत्याय्यप्रत्यायकभावलक्षणः सम्बन्धः नित्यः, स्वाभाविकः, अपौरुषेयश्च न भवितुमर्हति । तैरपि प्रत्याय्यप्रत्यायकभावो नाम वाच्यवाचकभाव इत्युच्यते । किन्तु सः सहजः नित्य इति तेषामाग्रहः । वेदापौरुषेयत्वसंरक्षणार्थः अयम् । वेदपौरुषेयत्वसंरक्षणाग्रहावशीभूतचित्तास्ते वस्तुस्थितिमपि विस्मृत्य कल्प्यस्यापि शब्दार्थयोर्मध्ये वर्तमानस्य सम्बन्धस्य सामयिकस्य नित्यतां अपौरुषेयतां अभ्युपगच्छन्ति । मीमांसकैरपि प्रथमश्रवण एव नूतनः शब्दः अर्थं प्रत्याययेत् इति आपत्तिवारणाय संज्ञात्वग्रहणरूपं समयमपि सहकारिकारणतया अभ्युपगम्यते । तदेव नैयायिकैः शक्तिग्रह इत्युच्यते ।

नव्यनैयायिकैः इच्छामात्रभूतसङ्केत एव सम्बन्धः शब्दार्थयोरिति अङ्गीक्रियते । यत्तु मीमांसकैः सर्वेषां शब्दानां प्रत्येकं सम्बन्धकारणान्यथानुपपत्त्या तस्य नित्यत्वं कल्प्यत इत्युक्तम् ।

तन्न समीचीनम् । वृद्धव्यवहारादिना शक्तिग्रहस्य सुलभत्वात् । अतः नैयायिकोक्तः शक्तिग्रहाधीनः अभिधानाभिधेयनियमरूपः सम्बन्ध एव शब्दार्थयोः युज्यत इति लोकानुभवसाक्षिकः नैयायिकपक्ष एव साधीयान् ।

४–५ वृत्तिविचारः

४ ५-१ न्यायसिद्धान्तः— वृत्तिः व्यापारः सम्बन्ध इति पर्यायाः । शब्दवृत्तिविषये दार्शनिकाः विभिन्नाभिप्रायाः दरीदृश्यन्ते । नैयायिकैस्तु सङ्केतापरपर्याया शक्तिः, लक्षणा चेति वृत्तिद्वयं स्वरीकृतम्[1] । वर्तते शब्दः अर्थे प्रवर्तते अनयेति वृत्तिः ।

४–५-१-१ शक्तिः— अभिधेत्यस्याः नामान्तरम् । अस्मात् पादत् अयमर्थः बोद्धव्य इति इच्छात्मकः सङ्केतः शक्तिरिति तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायः प्रत्यपीपदत्[2] । शक्यते साक्षादभिधीयते अनयेति शक्तिः । बाहुलकात् करणे क्तिन्[3] ।

पदेन पदार्थस्य सम्बन्ध एव शक्तिरिति विश्वनाथन्यायपञ्चाननः । अयं च सम्बन्धः अस्मात् पदात् अयमर्थो बोद्धव्य

---

1. सङ्केतो लक्षणा चेति शब्दवृत्तिः । [श. का. १]
वृत्तिश्च शक्तिलक्षणान्यतरः सम्बन्धः ।। [मुक्ता. ३१]

2. अस्मात्पदादयमर्थो बोद्धव्य इति इच्छारूपः सङ्केत एव शक्तिः, न त्वौत्पत्तिकः सम्बन्धः । [त. ता. २५५]

3. दृश्यतां श्रीसुब्रह्मण्यशास्त्री, वि. "न्यायनिबन्धेषु शाब्दिकप्रक्रियाभेदः", श्रीचारुदेवशास्त्र्यभिनन्दनग्रन्थः, १०४-१२, दिल्ली, १९७३

इति ईश्वरेच्छात्मकः। नच तर्हि आधुनिके नाम्नि कथं शक्ति-रिति वाच्यम्। 'एकादशेऽहनि पिता नाम कुर्यात्' इति ईश्वरे-च्छायाः तत्र सत्वात्। अस्त्येव शक्तिः। आधुनिकसङ्केतिते तु नास्ति शक्तिरिति साम्प्रदायिकाः।

नवीनास्तु ईश्वरेच्छा न शक्तिः। किन्तु केवला इच्छैव शक्तिः। अतः आधुनिकसङ्केतितेऽपि पदे शक्तिरस्त्येवेति प्रतिपादयन्ति। व्याकरणादिभिः शक्तिरियं गृह्यते (मुक्ता. ३२)।

एवञ्च नैयायिकैः आधुनिकसङ्केतितशब्देषु सङ्केतव-शादेव शाब्दबोधः सर्वानुभवसिद्ध इति वाच्यवाचकभावरूपस्य अतिरिक्तसम्बन्धस्य ग्रहणार्थमपेक्षितस्य सङ्केतज्ञानस्यैव— 'तद्धेतोरेवास्तु हेतुत्वं मध्ये किं तेन' इति न्यायानुरोधं शाब्द-बोधकारणत्वमुचितमिति मन्यमानैः क्लृप्तः सङ्केत एव समयापरपर्यायः सम्बन्ध इति निश्चप्रचम्[1]। सङ्केतोऽसौ द्विविधः—शक्तिः, परिभाषा चेति। ईश्वरेच्छारूपा शक्तिः। सङ्केतः परिभाषा (शा. त. ७६)।

शक्तिरियं पुनस्त्रिविधा। यथा - योगः, रूढिः, योग-रूढिश्चेति। यौगिकरूढिमपि केचिदभ्युपगच्छन्ति।

---

1. सामयिकत्वात् शब्दार्थसम्प्रत्ययस्य [न्या. द. २-१-५५]

| शक्तिः | उदाहरणम् | पदम् |
|---|---|---|
| १ योगः | पाचकः (पचनकर्ता) | यौगिकम् |
| २ रूढिः | घट. | रूढम् |
| ३ योगरूढिः | पङ्कजम्, मधुकरः | योगरूढम् |
| ४ यौगिकरूढिः | उद्भित् | यौगिकरूढम् |

अत्र अवयवशक्त्या यौगिकानि पदानि अर्थं बोधयन्ति[1]। समुदायशक्त्या रूढपदानि अर्थं बोधयन्तीति विशेषः (मुक्ता. ३७)। सम्बन्धत्वं चेदं न विशिष्टबुद्धिनियामकत्वम्। किन्तु तस्य सम्बन्धत्वं तत्प्रतियोगिकत्वविशेषः। तस्मिन् सम्बन्धत्वं च तदनुयोगिकत्वविशेषः। इदमेव स्पष्टयकारि – "दर्शितं च नियमाघटितं सम्बन्धत्वम्" (दीधितिः २८७) इति दीधिति-पङ्क्तिव्याख्यानावसरे गदाधरभट्टाचार्यैः।

४–५-१-२ लक्षणा— द्वितीया शब्दवृत्तिः लक्षणा। जघन्येयं वृत्तिरभिधीयते। अस्याः भक्तिरित्यपि नामान्तरम्। भज्यते शक्यार्थः खण्ड्यते अनयेति भक्तिः लक्षणा। 'भंजो आमर्दने' इति धातोः करणे क्तिन्। अथवा 'भज्यते सेव्यते अर्थान्तरमनयेति भक्तिः'। भज सेवायाम् इति धातोः क्तिन्।

1. दृश्यतां मोहन घटफले, "बौद्ध-न्याय-वैशेषिकदृष्ट्या शब्दानां समानार्थकता", J G.J.K.S.V. Vol. XXIX, pp 25-34, Allahabad, 1973.

गौतमेन लक्षणापदमिदं न कण्ठरवेण प्रायोजि । किन्तु उपचारपदेन प्रपञ्चितम् । तत्र बहूनि तन्निमित्तानि च उपन्यस्तानि[1] । अभाषि वात्स्यायनेनापि भाष्यकारेण एवम् - "अतच्छब्दस्य तेन शब्देन अभिधानम्" (न्या. भा. २१९) इति । उपचार इति यावत् । तद्धर्मारोप इति फलितोऽर्थः ।

शक्याद्शक्योपस्थितिः लक्षणेति मुकुलभट्टः लक्षणां शब्दव्यापारविचारे प्रत्यपीपदत्[2] । दर्शनाङ्कनार्थकात् लक्षधातोः कर्मणि ल्युटि लक्षणेति निष्पन्नम्[3] ।

इयं च लक्षणा शक्यसम्बन्धिनमर्थविशेषं बोधयति[4] । अतः कथ्यते शक्यसम्बन्धो लक्षणेति । सम्बन्धश्च साक्षात्परम्परासाधारणः । इयं च तात्पर्यानुपपत्तिवशात् सम्भवति । अन्वयानुपपत्तिवशात् लक्षणेति प्राचीनानां अभिप्रायः । तत्वचिन्तामणिकारेणापि अन्वयानुपपत्तिवशादेव लक्षणेति न्यरूपि ।

---

1. सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योगसाधन-आधिपत्येभ्यः ब्राह्मण-बाल-कट-राज-सक्तु-चन्दन-गंगा-शकट-अन्न-पुरुषेषु अतद्भावेऽपि तदुपचारः । [न्या. द. २-२-६४]
2. शब्दव्यापारतो यस्य प्रतीतिः तस्य मुख्यता ।
अर्थावसेयस्य पुनः लक्ष्यमाणत्वमुच्यते ।।
यस्य तु शब्दव्यापारगम्यार्थपर्यालोचनया अवगतिः तस्य लाक्षणिकत्वम्
[शा. त. १३३]
3. लक्षे रट् च । लक्षे चुरादिण्यन्तात् णः स्यात् तस्याडागमश्च [वै. सि. कौ. उ. सू. २६०]
4. लक्षणा शक्यसम्बन्धः तात्पर्यानुपपत्तितः । [कारि. ५८८]

किन्तु तात्पर्यानुपपत्तिवशात् लक्षणेति अर्वाचीनानां मतम्[1]। तैरेवमुच्यते - 'यष्टीः प्रवेशय' इत्यत्र अन्वयानुपपत्तेरभावात् लक्षणायाः न प्रवृत्तिः। भोजनतात्पर्यानुपपत्त्या तु तत्र लक्षणा उपपद्यत एव। अतः नान्वयानुपपत्तिः लक्षणाबीजम्। किन्तु तात्पर्यानुपपत्तिरेव तद्बीजम्[2]।

इयं च लक्षणा जहल्लक्षणा - अजहल्लक्षणा - जहदजहल्लक्षणा चेति त्रिधा भिद्यते।

क) जहल्लक्षणा - यत्सत्वे शब्दः शक्यार्थं जहाति सा जहल्लक्षणा। यथा - 'मञ्चाः क्रोशन्ति' इति।

ख) अजहल्लक्षणा - शक्यार्थं न जहाति चेत् अजहल्लक्षणा। यथा - 'छत्रिणो यान्ति' इति।

ग) जहदजहल्लक्षणा - तदुभययुक्ता जहदजहल्लक्षणा। यथा 'तत्त्वमसि,' 'सोऽयं देवदत्तः' (त्रिवे. १२) इति।

घ) शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा - लक्षितलक्षणा इत्युच्यते। यथा - 'द्विरेफः'।

---

1. लक्षणाबीजं तु मुख्यार्थान्वयानुपपत्तिरिति मणिकृतः। तात्पर्यानुपपत्तिरिति सम्प्रदायः। [प्र. र. मा. १७]

2. See VARADĀCHĀRI, V. "Scope and Basis of Lakṣaṇā in the Nyāya-Vaiśeṣika Schools," *Ṛtam* I (1) 143-49, 1969.

आलङ्कारिकैः अङ्गीकृता व्यञ्जनावृत्ति , भट्टैरङ्गीकृता गौणीवृत्तिरपि नैयायिकः नाभ्युपगम्येते । व्यञ्जनायाः अनुमानगतार्थत्वात् । गौण्यास्तु लक्षणायामेवान्तर्भावात् । तथाहि - सादृश्यविशिष्टानुयोगिकः शक्यसम्बन्धः गौणीवृत्तिः । 'सादृश्यलक्षणा गौणीति तल्लक्षणत्वात्' इति शक्तिविवृत्यां माधवः प्रत्यपीपदत् । सिंहशब्दस्य सादृश्यविशिष्टे लक्षणा । सादृश्यपर्यवसितशौर्यादिगुणैः स्वावच्छिन्नानुयोगिकत्वसंबन्धात् गौणीति तस्या व्यवहारः । 'लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' इत्युक्ततया लक्ष्यतावच्छेदकगुणानां शाब्दबोधे भानमुपपद्यत इति न गौणी अतिरिक्ता वृत्तिः, किन्तु लक्षणैव (शा. त. १४६-४७) । जघन्या वृत्तिरियं लक्षणा मुख्येव पदमात्रवृत्तिरिति नैयायिकानां राद्धान्तः ।

४ ५-२ **भाट्टसिद्धान्तः**—स्वार्थबोधकता हि पदानां वृत्तिरित्याख्यायते । सा च वृत्तिः भाट्टमतानुरोधं त्रिधा भिद्यते । अभिधा - लक्षणा - गौणी चेति ।

**४-५-२-१ अभिधा** - अभिधाया एव शक्तिरित्यपि व्यवहारः । इयमेव मुख्या वृत्तिः पदानां स्वार्थे । अनया हि वृत्त्या घटादिपदानां कम्बुग्रीवादिमदर्थानुगतघटत्वबोधकत्वम् । अभ्यधायि वाचस्पतिमिश्रेण अभिधा स्वरूपमेवं तत्वबिन्दौ-यथा–"तस्मात् स्वगोचरं विज्ञानमेव शब्दानां व्यापारः स्वार्थबोधे । यथाह भगवान् भाष्यकारः - 'शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्' इति । स एव स्वाभाविकशक्तिशालिनः शब्दस्य

स्वशक्त्या अर्थधीहेतुतया अभिधेति गीयते इति ग्रन्थेन शाब्दगोचरं अभिधेति व्यवहरन्ति" (त. बि. १५९) इति ।

जातिशक्तिवादिभिः भाट्टैः घटादिपदैः घटत्वादिजातिरेवाभिधीयते, न व्यक्तिरिति प्रतिपाद्यते । व्यक्तीनामानन्त्येन एकस्यां व्यक्तौ शक्तिग्रहणेऽपि व्यक्त्यन्तरबोधस्य दुर्घटत्वात् । नच व्यक्तावप्यस्तु शक्तिरिति वाच्यम् । अनन्तासु व्यक्तिषु अनन्तशक्तिकल्पनागौरवप्रसङ्गात् । अतः पदानां जातावेव शक्तिः, व्यक्तिबोधः पुनः लक्षणाक्षेपादिना सम्भवतीति[1] ।

व्यवधानमन्तरा शब्दजन्यस्यार्थज्ञानस्यानुकूलः व्यापारः, अथवा शब्दजन्यायाः अर्थप्रमायाः सहकारिबुद्धौ साक्षाद्विषयत्वं शक्तिरिति गागाभट्ट.[2] । अत्र अर्थान्तरप्रतीत्यद्वारकत्वफलकमव्यवहितपदम् । अतश्च लक्षणायां नातिव्याप्तिः । अस्याः शक्तेरेव सङ्केत इत्यपि व्यवहारः ।

यत्तु प्राभाकराः प्रतिपादयन्ति प्राधान्यात्, अभिधातृत्वात् तात्पर्याच्चेति कारणत्रितयात् अन्वितार्थप्रतिपादनशक्तिः

---

1. घटादिपदानां हि घटत्वादिजातिरेव अभिधेया, न व्यक्तिः । तासामानन्त्यात् एकस्यां व्यक्तौ शक्तिग्रहणे व्यक्त्यन्तरस्य बोधानापत्तेः । तत्रापि शक्तिस्वीकारे अनन्तत्वात् तासामनन्तशक्तिकल्पनाप्रसङ्गात् । नच जातेरुपलक्षकत्वम् । तथात्वे नागृहीतविशेषणा न्यायेन प्रथमोपस्थितायां जातावेव लाघवात् शक्तिकल्पनौचित्यात् । अतः पदानां जातावेव शक्तिः । व्यक्तिबोधस्तु लक्षणाक्षेपादिति दिक् । [त. सि. र. ६६]

2. अव्यवधानेन शब्दजन्यप्रतीत्यनुकूला वृत्तिः शक्तिः । साक्षात् शब्दजन्यार्थप्रमितिसहकारिज्ञानविषयत्वं वा । [भा. चि. ५६]

पदानामेव अङ्गीकार्यमिति । तत्तु न युक्तिसहमिति तत्र पार्थसारथिमिश्रेण न्यायरत्नमालायां दोष उद्भावितः[1] ।

शक्तिग्रहोऽयं व्याकरण-उपमान–कोश–आप्तवाक्य–व्यवहार - वाक्यशेष - विवरण - सिद्धपदसान्निध्येभ्यः जायत इति सम्प्रदायः । व्यवहार-प्रसिद्ध-सामानाधिकरण्य-विवरणानामानुमानिकतया, व्याकरण-वाक्यशेष-कोशानां शाब्दरूपेण, उपमानेन उपमितिरूपशक्तिग्रहस्यानुभविकतया च शक्तिग्रहः अनुमानोपमानशब्दैः प्रमाणैः ग्राह्यत इति ज्ञायते[2] ।

एवञ्च भाट्टैस्तावत्—'औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः' (मी. द. १ १-५) इति पारमर्षं सूत्रं प्रमाणयद्भिः स्वाभाविकः संज्ञासंज्ञिलक्षणः वाच्यवाचकभावापराभिधानः, अर्थप्रतीतिजननसामर्थ्यपर्यवसितः सम्बन्धः अभिधेति अभ्युपागामीति सारः। सामर्थ्यलक्षणायाः शक्तेः अतिरिक्तपदार्थत्वमभ्युपगच्छन्तस्ते शब्देऽपि तथैव अतिरिक्तं तादृशसामर्थ्यरूपं सम्बन्धं ऊरीकुर्वन्तीति विज्ञेयम् (शा. त. ६४) ।

---

1. प्राथम्यं कारणं यत्तु तद्विपर्ययसाधनम् ।
ये तात्पर्याभिधातृत्वे तेऽप्यनैकान्तिकीकृते ।। [न्या. र. मा. ६६]

1. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।।

अनुमानोपमानशब्दा एव शक्तिग्राहकाः । व्यवहार-प्रसिद्धसामानाधिकरण्य-विवरणानामनुमानान्तर्भावः । व्याकरण-वाक्यशेष-कोशानां शब्दान्तर्भाव इति नव्याः । व्याकरणात् तृतीयादेः करणत्वकर्तृत्वादौ शक्तिग्रहः । उपमानेन उपमितिरूपः शक्तिग्रहः । [भा. चि. ५६]

४-५-२-२ लक्षणा—लक्षणा च द्वितीया शब्दवृत्तिः। शक्य-सम्बन्धो लक्षणेति तल्लक्षणम्। यथा - नीलं घटमानय इत्यत्र नीलगुणवाचकस्य नीलशब्दस्य तद्विशिष्टे लक्षणा। गङ्गायां घोषः इत्यत्र गङ्गापदशक्यः प्रवाहः। तत्सम्बन्धिनि तीरे गङ्गापदस्य लक्षणा। एवञ्च गङ्गातीरे घोष इति बोधः (त. सि. र. ६६)।

एवं 'सिंहो देवदत्तः' इत्यत्रापि यदा परम्परासम्बन्धेन सिंहसम्बन्धी देवदत्तः इति बोधः तत्र लक्षणैव। यदा पुनः सिंह-निष्ठक्रौर्यसजातीयक्रौर्यशालितया देवदत्ते अभिधीयते तदा तु गौण्येव (भा. चि. ५७)।

इयञ्च लक्षणा अजहत्स्वार्था जहत्स्वार्थेति द्विधा भिद्यते। यत्र स्वशक्यार्थः विशेष्यतया अन्वयबोधे भासते सा अजह-त्स्वार्था[1]। यथा - "यष्टीः प्रवेशय" इत्यत्र। अत्र शक्यार्थस्य यष्टिरूपस्यापि क्रियान्वयसम्भवात्[2]। इयमेव उपादानलक्षणेति कथयन्त्यालङ्कारिकाः।

यत्र पुनः स्वशक्यार्थः अन्वयबोधे विशेष्यतया न भासते सा जहत्स्वार्था[3]। यथा - 'गङ्गायां घोषः' इत्यत्र। अत्रान्वय-

---

1. स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका अजहत्स्वार्था। [भा. चि. ५७]
2. See BHAT, G. K., "Scope of Lakṣaṇā", pp. 117-132, *J.G.J. K.S.V.* Vol. XXIX. Allahabad, 1973.
3. स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका जहत्स्वार्था। [भा. चि. ५७]

बोधे शक्यार्थस्य गङ्गाप्रवाहरूपस्याभानात् । अत्र गङ्गापदात् तीरत्वमात्रप्रकारक एव बोधः भाट्टाभिमतः[1] ।

लक्षितलक्षणायाश्च जहत्स्वार्थायामेव लक्षणायां अन्तर्भाव इति केचित् भाट्टाः । स्ववाच्यपदघटकवर्णद्वयघटितपदवाच्यत्व-रूपसम्बन्धस्यैव द्विरेफादिपदे लक्षितलक्षणास्थले विवृतत्वात् । किन्तु लक्षितलक्षणेयं पार्थसारथिमिश्रेण शास्त्रदीपिकायामङ्गी-कृता । यथा - "यत्राप्यन्वितस्यैव पुनरन्वयान्तरं तत्रापि लक्षित-लक्षणा परम्परया तस्य सर्वस्य सिद्धिरित्येषा दिक्" (शा. दी. १५४) इति ।

लक्षणायामस्यां बीजं तु शक्यार्थान्वियानुपपत्तिः । नतु तात्पर्यानुपपत्तिः । वेदस्यापौरुषेयतया तत्र तात्पर्यानुपपत्तेर-सम्भवात् । "यष्टीः प्रवेशय" इत्यादिस्थले च प्रवेशनपदस्य भोजनप्रयोजनकप्रवेशनपरज्ञानेनैव अन्वयानुपपत्तिमुपपादयितुं शक्यत इत्याहुः । सर्वलाक्षणिकस्थले न शाब्दबोधः । (भा. चि. ५८) ।

४·५·२·३ गौणी—इयञ्च तृतीया वृत्तिः । सादृश्यरूपशक्य-सम्बन्धो गौणी । अर्थात् स्वशक्यसम्बन्धिगुणसजातीयगुणवदु-पस्थितिहेतुवृत्तिः गौणीवृत्तिरिति भाट्टसिद्धान्तः[2] । यथा—"सिंहो माणवकः" इत्यत्र सिंहत्वैकार्थसमवेतक्रौर्यादिसजातीयगुण-

---

1. वस्तुतो गङ्गापदात् तीरत्वमात्रप्रकारको बोधः । [भा. चि.५७]

2. शक्यार्थनिष्ठगुणसजातीयगुणयोगो गौणी [त. सि. र. ६६]

वत्प्रकारके, अथवा गुणप्रकारके माणवकादिविशेष्यके च शाब्द-बोधे सिंहपदजन्यायाः गुणवदुपस्थितेः, गुणोपस्थितेर्वा कारणत्वम् । "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इति न्यायेन सिंहगुणानां तत्सजातीयानुगुणानां च सिंहपदेनैव लक्षणयोपस्थितिः ।

एवमेव "योषा वाव गौतमाग्निः" इत्यादौ योषायां अग्निशब्दः गौणः । तथैव "खपुष्पं सिद्धान्तः" इत्यादिस्थले च खपुष्पसमासार्थभूतस्य अलीकत्वस्य सिद्धान्ते सम्बन्धात् गौणत्वं सूपपादम् । यत्र "खपुष्पं नास्ति" इति प्रयोगः तत्र नास्ति पदस्यानुवादता (भा. चि. ५८-५९) ।

एवं गौणत्वाङ्गीकारेण न शक्यार्थः त्यज्यत इति न कथञ्चिदपि वेदाप्रामाण्यसम्भवः । अत एव 'यजमानः प्रस्तरः' इत्यादिस्थले यजमानस्य प्रस्तरस्य च यागकारणीभूतगुण-सम्बन्धेन यजमानपदं प्रस्तरे गौणम् (भा. चि. ५९) अत एव गौणी लक्षणातो भिन्नेत्याख्यायते भाट्टैः[1] । भाट्टसारे च गौण्याः वृत्तेः लक्षणस्वरूपादिकं एवमभ्यवर्णि । यथा - "लक्ष्यमाणगुण-सम्बन्धरूपा वृत्तिर्गौणी । यथा - 'सिंहो माणवकः' इत्यत्र सिंहशब्दस्य माणवके । "खपुष्पं भवत्सिद्धान्त" इत्यत्रापि खपुष्पादिगताप्रामाणिकत्वादिसदृशाप्रामाणिकत्ववत्त्वं सिद्धान्ते-ऽस्तीति गौणीनिर्वाहः । असतोऽपि शब्दजन्यज्ञानविषयत्वाङ्गी-

---

1. अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ।
लक्ष्यमाणैर्गुणैर्योगात् वृत्तेरिष्टा तु गौणता ।। [त. सि. र. ६६]

कारात्, भावरूपधर्मानाधारत्वेऽपि अभावरूपधर्माधारत्वाङ्गीकाराच्च" (भा. सा. ६-७) इति । एवमेव भाट्टरहस्ये खण्डदेवोऽपि गौण्याः वृत्तेः आवश्यकतां प्रत्यपीपदत्[1] ।

४-५-३ प्राभाकरसिद्धान्तः—पदपदार्थयोः सम्बन्धः वृत्तिरित्याख्यायते । इदं पदमस्मिन्नर्थे वृत्तिमदित्याकारकं तद्वत्त्वज्ञानम् । प्राभाकरमतानुरोधं सा च वृत्तिः त्रिविधा - शक्तिः, लक्षणा, गौणी चेति । गौण्याः वृत्तेः स्वरूपादिमधिकृत्य कुत्रापि प्राभाकरग्रन्थेषु सम्यगनुक्तावपि सा तेषामभिमतैवेति सोदाहरणं उपरिष्टात् निरूपयिष्यते ।

४-५-३-१ शक्तिः — शक्तेरेव अभिधेत्यपि नामान्तरम् । प्राभाकरमते शक्तेः विलक्षणपदार्थत्वमप्यङ्गीकृतम् । सा च साक्षात्सम्बन्धरूपा । इयञ्च द्विविधा - पदानां स्वार्थे जातौ स्मारकी शक्तिः, अन्विते चार्थे आनुभाविकी शक्तिः । इयञ्च पदानामेव न तु पदार्थानामिति प्राभाकरः पन्थाः[2] ।

तथाहि - पदानि हि प्रथमोपात्तानि परित्यज्य, वाक्यार्थबोधनशक्तिः अर्थानाश्रितेति वक्तुं न युज्यते । पदानामभिधायकत्वे न हि नाम विप्रतिपद्यन्ते विपश्चितः । अतः पदानामभिधानशक्तिः सुनिश्चितेति तस्याः अन्वयपर्यन्तप्रतिपादनं सुकरम् ।

---

1. 'यजमानः प्रस्तर' इत्यादौ, अभेदान्वयस्य बाधितत्वात् । तत्र यजमानपदं यजमानकार्यकारित्वसमानजातीयकार्यकारित्वरूपगुणयोगेन प्रस्तरे गौणीमङ्गीकृत्य । [भा. र. १९]

2. प्राथम्यादभिधातृत्वात् तात्पर्यावगमादपि ।
पदानामेव सा शक्तिः वरमभ्युपगम्यताम् ॥ [प्र. प. ४००]

यदि पदार्थानां शक्तिरवश्यं कल्प्या इत्याग्रहः तेषां बोधनशक्ति-रेव कल्प्या । अतः—'धर्मिकल्पनातः वरं धर्मकल्पना लघीयसी' इति पदार्थानां बोधनशक्तिरूपधर्मिकल्पनापेक्षया पदानां अभिधानशक्तिरूपधर्मकल्पना लघ्वीति अन्विताभिधानशक्तिः पदानामभ्युपगम्यते । एवञ्च सम्बन्धग्रहणसमयानधिगतार्थप्रतिपादनाङ्गीकार एव शब्दानामभिधायकतेति पदानां अन्विताभिधायकता अवश्यमङ्गीकार्या[1] । यश्च पुनः—"पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" (श्लो. वा. ६-१०७) "भावनावचनस्तावत् तां स्मारयति लोकवत्" (श्लो. वा. ७-२४८) इति कुमारिलभट्टाचार्यवचनमवलम्ब्य पदानां स्मारकत्वमेवाभिधायकत्वमिति न्यरूरुपत् - तत्तु न घटते । येन वा पदानां स्मारकत्वमङ्गीकृतं तेन तेषां वाक्यार्थे तात्पर्योपगमात् (त. र. ३३) । अन्यथा च वाक्यार्थस्याशाब्दत्वं प्रसज्येत ।

एवञ्च पदानामेव शक्तिकल्पनं सर्वथा योग्यमिति अन्विताभिधायीनि पदानीति प्राभाकराणां सिद्धान्तः (प्र. प. ४०१) । अत एव प्राभाकराः अन्विताभिधानवादिनः कथ्यन्ते[2] ।

४-५-३-२ लक्षणा—प्राभाकरमतानुरोधं लक्षणास्वरूपमित्थम्—

"वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥"(प्र.प.३९८)

---

1. तस्यात् सम्बन्धग्रहणसमयानधिगतान्वितार्थप्रतिपादनाभ्युपगम एव शब्दानामभिधायकतेति, तामङ्गीकुर्वता पदानामन्विताभिधायकताऽऽश्रयणीया । [प्र. प. ४०१]

2. प्राभाकराः पुनः तादृशान्वयस्यापि तादृशपदार्थविशेषणतया शक्यत्वं पदवाच्यत्वं चाङ्गीकुर्वन्तः अन्विताभिधानवादिनः भवन्ति । [मी. अ. ११०]

इति । वाच्यस्य अर्थविशेषणस्य वाक्यार्थे सम्बन्धः नोपपद्यत इति तत्सम्बन्धवशेन प्राप्तेऽर्थे अन्वयः लक्षणाव्यापारेण भवतीति भावः । यथा - 'गङ्गायां घोषः' इत्यादि वाक्ये श्रुतस्य गङ्गा-पदार्थस्य वाक्यार्थे अन्वयस्यानुपपद्यमानतया इदं परित्यज्य, तत्सम्बन्धवशाद् बुद्धिमुपगतस्य कूलादेः वाक्यार्थान्वयित्वमभ्यु-पगम्यते । कथयन्ति चात एव - "अनुपपत्त्या, सम्बन्धेन च लक्षणा भवति" (प्र. प. ३९९) इति । अतः वाक्यार्थे सम्ब-न्धानुपपत्त्या तत्सम्बन्धवशात् बुद्धिमुपगतस्य सन्निहितस्य कूलाद्यर्थस्य लक्षणया बोधः ।

यैः पुनः मुख्यार्थः सम्यगवगतः तैरेव लक्षणा सम्यक् ज्ञातुं शक्यत इति शालिकानाथः प्रकरणपञ्चिकाय प्रत्यपीपदत् वाक्यार्थमातृकायाः अन्ते । यथा - "यद्येषा लक्षणा, किमिति तर्हि लोको नावगच्छतीत्याह—

लक्षणानभिमानस्तु मुख्यार्थानवधारणात् ।
ये तु मुख्यार्थकुशलाः तेषां लाक्षणिकत्वधीः ॥" (प्र. प. ४४९) इति[1] ।

ननु मास्तु लक्षणा, अवगता क्रिया कारकान्वयिनीं निज-दशां अवबोधयत्येव । अविनाभावादिति चेत्—

1. मुख्यमर्थमविदित्वा लाक्षणिकमप्यर्थं श्रौतमिव मन्यन्ते, म्लेच्छा इव यव-वराहाद्यर्थम् । मुख्यार्थविवेकिनां तु परीक्षकाणां लाक्षणिकत्वधीः - इति [प्र. प. ४४९]

मैवम् । अन्वयावगमस्य शाब्दत्वमेवमपह्नुतम्, किन्तु एतावता सामान्यतोदृष्टानुमानसमानयोगक्षेमं इदं सम्पद्यते । एवञ्च विशिष्टान्वयावगतिरनुपपद्यमाना सती निर्मूला बोभवीति । तथा च विशेषान्वयमन्तरा व्यवहारस्यानुपपद्यमानतया शब्दोच्चारणमेव तदा अनर्थकमुपजायेत । अतः लक्षणा अवश्यमभ्युपेयेति सिद्धान्तः (प्र. प. ३९९) ।

४-५-३-३ गौणी — प्राभाकरैः शब्दवृत्तिनिरूपणावसरे कुत्रापि गौणीवृत्तिस्वरूपं, अथवा लक्षणं च नैव प्रत्यपादि । न तावता तेषां गौणीवृत्तिः अनिष्टेति वक्तुं शक्यते । तैः गौणीवृत्तिः अभ्युपगतैव[1] । तथा हि - प्रकरणपञ्चिकायाः वाक्यार्थमातृकायां गौणीवृत्तिरपि तेषामिष्टैवेति द्वित्रिस्थलेषु समसूचि शालिकानाथेनैवम् । यथा - "यच्चेदं सर्वपदानां अन्विताभिधायित्वमुच्यते, तत्सर्वेषु श्रौतपदार्थेषु - पदेषु । लाक्षणिक-गौणार्थपदप्रयोगे तु यदेव तत्र श्रौतार्थं पदं, तदेव अन्विताभिधायकम् । इतरत्तु पदं प्रतियोगिसन्निधापनपरमेव । तत्र वाचकत्वशक्त्यनवधारणात् स्वार्थस्यापि तत् तदानीमवाचकम् । अन्वयायोग्यत्वात् । किन्तु तदर्थेन स्मृतेन यत् स्वसम्बन्धि, स्वसदृश वा स्वयमन्वययोग्यमुपस्थाप्यते, तेनान्वितं श्रौतार्थमेव पदं स्वार्थमभिधत्त इति दर्शनरहस्यमिदम्" (प्र. प. ४०८) इति ।

४-५-४ समीक्षणम् — वृत्तिरिति पदं नैयायिकैः मीमांसकैश्च व्यापारपर्यायतया प्रयुज्यते । तत्र नैयायिकैः शक्तिः लक्षणेति

1. लोके च लक्षणा, गौणी च वृत्तिः वाक्यभेदभयादेव । [प्र. प. ४०८]

वृत्तिद्वयं, मीमांसकैः अभिधा, लक्षणा, गौणी चेति वृत्तित्रितयं अङ्गीक्रियते। मीमांसकैः शक्तिस्थान एव अभिधा अङ्गीक्रियते। सा तैः शक्तिरित्यपि व्यवहृता। अधिकतया गौणीं वृत्तिं ऊरीकुर्वन्ति मीमांसकाः। तामपि लक्षणायामेव अन्तर्भावयन्ति नैयायिका इति तावद्विशेषः।

४-५-४-१ शक्तिः—नैयायिकमते मीमांसकमते चास्याः शब्दवृत्तित्वं समानतया अभ्युपगतमिति प्रागवोचाम। विशेषतः तत्तन्मते अस्याः स्वरूपं एवमवगन्तव्यम्—

नैयायिकमते—अस्मात् पदात् अयमर्थः बोद्धव्य इति ईश्वरेच्छात्मकः सङ्केतः शक्तिः। आधुनिकसङ्केतस्य परिभाषेति व्यवहारः। शक्तिश्च जात्याकृतिविशिष्टव्यक्ताविति सम्प्रदायः[1]।

भाट्टमते - व्यवधानमन्तरा शब्दजन्यस्यार्थज्ञानस्य अनुकूलः व्यापारः, अथवा शब्दजन्यायाः अर्थप्रमायाः सहकारिबुद्धौ साक्षाद्विषयत्वं वा शक्तिः। एतन्मते पदाज्जातेः बोधः, व्यक्तेस्तु तदाक्षेपवशात्[2]।

---

1. जात्याकृतिविशिष्टायां व्यक्तौ शक्तेरैक्यं जात्याकृतिव्यक्तयस्तु पदार्थः इति न्यायसूत्रे बहुवचनमुपेक्ष्य पदार्थं इत्येकवचनान्तं निर्दिष्टवतो महर्षेरप्यनुमतम् [श. वा. १७२]

2. अत्र भाट्टाः - पदात् न व्यक्तेः स्मरणमनुभवो वा, किन्त्वाक्षेपादेव व्यक्तिधीः, आक्षेपिका च जातिरेव, आक्षेपश्च अनुमानमर्थापत्तिर्वा [तत्रैव १८३]

प्राभाकरमते — पदानां अर्थबोधसामर्थ्यं शक्तिः। सा च पदानां स्वार्थे जातौ स्मारकी। अन्विते चार्थेऽनुभाविकी। एतन्मते पदात् जातिबोधः, जातिविशेषणतया व्यक्तेः स्मरणं बोधश्च सम्भवतः[1]।

शब्दार्थसम्बन्धरूपेण सङ्केतस्य अङ्गीकृतत्वात् नैयायिकैः तदनुरोधेन शक्तिलक्षणमुक्तम्। शाब्दबोधसहकारिकारणतया अभिधापरपर्यायायाः शक्तेः अङ्गीकृततया भाट्टैश्च एवं शक्तिस्वरूपं निरुक्तम्। अन्विताभिधानवादिभिः प्राभाकरैः अर्थबोधनसामर्थ्यं पदगतं शक्तिरित्युच्यते।

सेयं शक्तिः किं पदगता? उत समासेऽप्यस्तीति विचारे व्यपेक्षावादिभिः नैयायिकैः तस्याः पदगतत्वमेव अङ्गीकारि। समासे शक्तिग्राहकस्य प्रमाणस्याभावात्। अनन्तानां समस्तपदानां अनन्तशक्तिकल्पना च अप्रामाणिकी। नच चार्थे द्वन्द्वः (अष्टा. २-२-२९) इत्यादि सूत्रमेव तत्र शक्तिग्राहकमिति वाच्यम्। अर्थविशेषबोधकत्वं, द्वन्द्वसंज्ञा चेति उभयविधाने वाक्यभेदरूपदोषप्रसङ्गात्। अतः सूत्रमिदं नार्थविशेषबोधकम्। किन्तु द्वन्द्वादिसंज्ञामात्रस्यैवेति एकार्थीभाववादिभिः वैयाकरणैरेव प्रतिपादितत्वात्।

समासे शक्त्यभावेऽपि तद्घटकपदवृत्त्यैव विवक्षितार्थबोधः संभवतीति लोकानुभवः। पण्डितब्राह्मणादिसमस्तपदेषु ब्राह्मण-

---

1. प्राभाकरास्तु - जातिशक्तिज्ञानादेव जातिप्रकारेण व्यक्तेः स्मरणं शाब्दबोधश्च [श. प्र. १९०]

पण्डितयोः उद्देश्यविधेयभावेन अन्वयबोधः आपद्यत इति तत्र शक्तेरङ्गीकारे नानार्थकहर्यादिपदात् पृथगुपस्थितानां अश्व-सूर्यादीनां उद्देश्यविधेयभावेन अन्वयबोधापत्तिः। अतः शक्तिः पदमात्रवृत्तिरिति सिद्धान्तः।

अत्रेदं तत्वम् - अभिहितान्वयवादिभिः भाट्टैः शाब्द-बोधे पदार्थाः कारणमिति, अन्विताभिधानवादिभिः प्राभाकरैः नैयायिकच्छायायां पदान्येव कारणमिति प्रतिपाद्यते। किन्तु वस्तुतः पदार्थापेक्षया पदानामेव कारणत्वं साधीय इति भावयामः।

४-५-४-२ लक्षणा–

**नैयायिकमते**—शक्यसम्बन्धो लक्षणा। तात्पर्यानुपपत्तिः लक्षणाबीजम्। इयञ्च (क) जहल्लक्षणा (ख) अजहल्लक्षणा (ग) जहदजहल्लक्षणा (घ) लक्षितलक्षणा चेति चतुर्विधा। पदमात्रवृत्तिरियम्।

**भाट्टमते** — शक्यसम्बन्धो लक्षणा। अन्वयानुपपत्तिः लक्षणाबीजम्। इयञ्च (क) अजहत्स्वार्था (उपादानलक्षणा) (ख) जहत्स्वार्था चेति द्विविधा। एतेषां मते लक्षितलक्षणा नास्तीति प्रसिद्धिः। तस्याः जहत्स्वार्थायामेव अन्तर्भावात्। किन्तु पार्थसारथिमिश्रेण लक्षितलक्षणा अभ्युपगता(शा.दी. १५४)।

**प्राभाकरमते** - वाक्यार्थान्वयिगतपदार्थसम्बन्धः लक्षणा। एभिः वाक्येऽपि लक्षणा अभ्युपगता।

४-५-४-३ गौणी - भाट्टैरेवं गौणीवृत्तिरङ्गीक्रियते - सादृश्यरूपशक्यसम्बन्धो गौणीति । प्राभाकराश्च गौणीवृत्तिमङ्गीकुर्वन्ति । किन्तु तद्ग्रन्थेषु गौणीस्वरूपविषये स्पष्टतया न किमप्युपलभ्यते ।

विभागादिषु सत्यपि स्वल्पे भेदे लक्षणास्वरूपादिविषये स्थूलतया नैयायिकसरणिमेवानुसरन्ति भाट्टा इति वक्तुं शक्यते । प्रधानः भेदस्तु नैयायिकानां तात्पर्यानुपपत्तिवशात् लक्षणा सम्भवति । भाट्टानां तु अन्वयानुपपत्तिवशात् सा सम्पद्यत इत्यत्र । अत्र अन्यदपि वक्तव्यमस्ति । प्राचीननैयायिकैरपि अन्वयानुपपत्तिवशादेव लक्षणा स्वीकृता । नव्यैस्तु "यष्टीः प्रवेशय" इत्यादिस्थलेषु लक्षणोपपादनाय तात्पर्यानुपपत्तिः तद्बीजतया अभ्युपगता । अतः प्राचीननैयायिकमतमनुसरन्तः मीमांसकाः वेदापौरुषेयत्वस्थापनाय तात्पर्यानुपपत्तिं लक्षणाबीजतया नाभ्युपयन्ति । अपौरुषेये वेदे तस्याः दुर्घटत्वात् ।

प्राभाकरोक्तं लक्षणालक्षणं "वाच्यस्यार्थस्य वाक्यार्थे" इत्यादि वाचस्पतिमिश्रेण तत्वबिन्दावनूद्य खण्डितम् । तथा हि- अथ यदि शालिकनाथोक्तं लक्षणालक्षणमाद्रियते तर्हि 'ओदनं पचति चैत्रः पिठरे" इत्यत्र चैत्र - पिठरादिपदार्थानां नास्ति वाक्यार्थे सम्बन्धानर्हत्वम् । तथैव तल्लक्षितायाः अन्वितावस्थायाः नास्त्यन्वयान्तरशालित्वमिति नेयं लक्षणा भवितुमर्हति । तल्लक्षणस्याभावात् । एवमेव -

"मासमग्निहोत्रं जुह्वति" (ता. ब्रा. अ. २५-४)

इत्यत्र अग्निहोत्रपदं अलाक्षणिकमिति मुख्यमापद्येत । अतः लक्षणमिदं नादरमर्हति । नेयं लक्षणा । यदि एवमेव अस्याः अङ्गीकारे अप्रसिद्धायाः नूतनायाः वृत्तेः कस्याश्चन प्रादुर्भाव एवेति । अस्मन्मते तु, विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतानां पदानां अर्थरूपमात्रपरत्वेऽनुपपत्तिः लोकानुभवसिद्धा कारणमास्थितमिति न काचिदपि अनुपपत्तिः[1] इति ।

वस्तुतः गौण्याः वृत्तेः लक्षणायाश्च नातीव भेद इति नैयायिकैः लक्षणायामेव सा अन्तरभावि । न सा पृथक् अङ्गीक्रियते । इयता विचारेण इदमत्र स्पष्टीभवति यत् सुपरिष्कृतशक्ति - लक्षणारूपवृत्तिद्वयमभ्युपगच्छतां नैयायिकानां पन्थाः सुविशदः अन्येभ्यः अस्मिन्नंश इति ॥

## ४–६ शाब्दबोधनिरूपणम्

४–६-१ न्यायसिद्धान्तः— नैयायिकसिद्धान्तानुरोधं शाब्दबोधे जननीये पदज्ञानं करणं भवति । नतु ज्ञायमानस्य पदस्य

---

1. तथा चाह कश्चित् -

वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥

इति । .... अस्तु वा लक्षणैव नो खल्वेतल्लक्षणम् । अप्रसिद्धवृत्त्यन्तरावसानप्रसङ्गात् । तस्मादेतद्वक्तव्यम् । तदिदमुच्यते · मृष्यामहे वाच्यानुपपत्तितः इति, सम्बन्धवशप्राप्तस्य इति च, न पुनः वाक्यार्थे सम्बन्धे च अन्वयात् इति च । अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायप्रयुक्तसमभिव्याहृतानां अर्थरूपमात्रपरत्वे पदानामनुपपत्तिः । अर्थरूपसम्बन्धवशप्राप्तिता चान्वितावस्थायाः । व्यापकं चैतल्लक्षणम् लक्षणानामनवयवेन वैदिकानां लौकिकानां चेति चतुरस्रम् [त. बि. १५६-५७]

करणत्वम् । मौनिश्लोकादौ शाब्दबोधोदयात् । पदज्ञानजन्यं पदार्थस्मरणं पदज्ञानजन्यशाब्दबोधस्य जनकमिति तत् व्यापारः। अत्र पदजन्यत्वं वृत्या संभवति । वृत्तिश्च शक्तिः लक्षणा वा[1] ।

एतेषां मते वाक्यार्थस्य न लक्ष्यत्वम्, न वा शक्यत्वम्, किन्तु पदानि आकांक्षादिसाहाय्येन पदार्थस्मृतिद्वारा तद्बोधकानीति विज्ञायते । तथा हि - विना व्युत्पत्तिज्ञानं लोके न कोऽपि वाक्यार्थमवगन्तुं प्रभवति । इयञ्च व्युत्पत्तिः बहुधा व्याकरणादिना संभवति । तेषु सर्वेषु कारणेषु व्यवहारस्यानितरसाधारणं स्थानं वरीवर्ति । स एव सर्वप्रथम इति वक्तुं शक्यते । कुत इति चेत् - अनधिगतपदशक्तिकस्य जनस्य "कर्मणि द्वितीया" इति व्याकरणेन "गुणे शुक्लादयः" इति कोशेन, प्रसिद्धार्थपदसान्निध्यरूपेण विवरणेन च असम्भवी व्युत्पत्तिग्रहः । अतः समेषां प्रथमतः शक्तिग्रहः व्यवहारादुपजायत इति तस्य सर्वप्रथमत्वं सूपपादम् ।

व्यवहारश्च उत्तमवृद्धवाक्यप्रयोगानन्तरजातप्रवृत्त्यादरूपः । उत्तमवृद्धोक्तं "गामानय" इति वाक्यं निशम्य मध्यमवृद्धः गामानयति । तद् दृष्ट्वा व्युत्पत्तित्सुः बालः यथाहं संसृष्टार्थज्ञानात् प्रवर्ते तथा अयमपि मध्यमवृद्धः संसृष्टार्थज्ञानादेव प्रवर्तेत । तादृशं ज्ञानमस्य वाक्यादेव समुत्पन्नम् । तच्छ्रवणात्पूर्वमप्रवृत्तेः, ततः परमेव प्रवृत्तेः । कारणान्तरस्या-

---

1. पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ [कारि. ८१]

नुपलम्भात् इति चिन्तयति । पदानां अवान्तरव्यापारविधया पदार्थोपस्थितिकारणतामवगच्छति । ततश्च अवापोद्वापाभ्यां गवादिपदानां गवादिरूपेऽर्थे शक्ति गृह्णाति । अत व्यवहारात् पदेष्वेव संसृष्टार्थज्ञानहेतुत्वस्य अधिगतत्वात् पदानामेव वाक्यार्थज्ञानजनकाश्रयणमुपपद्यते, न पदाभिहितानां पदार्थानाम् । यद्यपि पदार्थज्ञानमन्तरा वाक्यार्थज्ञानं दुर्लभमिति पदार्थज्ञानमवश्यमपेक्षितं वाक्यार्थे । तथापि पदार्थज्ञानद्वारा पदमेव वाक्यार्थज्ञानकारणमिति उचितमिति नैयायिकानां राद्धान्तः ।

न च वाच्यम् अभिहितान्वयवादिनां भाट्टानां मते आकृतिरेव शब्दार्थः । गामानय इत्यादौ गोत्वकर्मकमानयनमित्येव शाब्दबोधः । गोत्वजात्या च आक्षेपादेव व्यक्तिज्ञानमुदेति । जातेश्च नित्यत्वात् अतीतानागतपदार्थस्थलेऽपि न काऽप्यनुपपत्तिः वाक्यार्थबोधस्येति ।

गवादिपदात् व्यक्तेरेव बोधस्यानुभविकत्वात् । अपरथा गौरानीयताम् इति वाक्यश्रवणोत्तरं गवानयनादिषु प्रवृत्तेरनुपपत्तेः । किञ्च गोत्वजात्या व्यक्तेराक्षेपः य उक्तः स च न सम्भवति । द्विरूपो ह्याक्षेपः भवितुमर्हति - अनुमानमर्थापत्तिर्वा । अत्रोभयमपि न सम्भवति । व्याप्यतावच्छेदकप्रकारेण व्याप्यज्ञानमेव व्यापकानुमापकं भवति । गोपदात् स्वरूपत एव जात्युपस्थितिः, लाघवाद्यत्र भवद्भिः शक्तिरभ्युपगता । तथा च गवादिपदात् स्वरूपतः गोत्वज्ञाने सत्यपि व्याप्यतावच्छेदकगोत्वत्वादिना नोपस्थितिरिति व्यक्तेरनुमानस्य असम्भवात् । अतः व्यक्तिबोध एवोचितः ।

अन्यच्च व्यापारवत् कारणस्यैव कारणत्वाभ्युपगमात् पदार्थज्ञानस्य अवान्तरव्यापारविरहेण कारणत्वमसम्भवीति। पदस्य तु पदार्थज्ञानमेव अवान्तरव्यापार इति करणत्वमुपपद्यते। यदि फलायोगव्यवच्छिन्नं कारणं करणमिति नव्यमतरीत्या वाक्यार्थज्ञानाव्यवहितपूर्ववर्तिनः पदार्थज्ञानस्य करणत्वं साध्यते, तदापि पदस्यान्वयानुभवं प्रति कारणत्वमनपलपनीयम्।

तस्मात् पदानि पदार्थस्मृतिद्वारा आकांक्षादिसहकारेण अन्वयबोधं जनयन्तीति नैयायिकमतं निष्प्रकम्पं सिध्यति। नैयायिकैरपि वृद्धव्यवहारादेव व्युत्पत्तिर्बालस्येति, शिबिकावाहकवत् पदानि सर्वाण्यपि अन्वयबोधरूपे कार्ये संहृत्य व्याप्रियन्त इति तावदभ्युपगम्यते। किन्तु तेषां पदानामन्विते शक्तिस्तु नाङ्गीक्रियते। परन्तु तत्तदर्थमात्र एव तेषां शक्तिरिति स्वीक्रियते।

अयमेव जातिविशिष्टशक्तिवादः तात्पर्यवाद इत्यप्युच्यते यश्च नैयायिकैः सम्प्रतिपन्नः। अयमेव न्यायमञ्जरीकारेण इदम्प्रथमतया तात्पर्यवाद इति प्रतिपादितः। समसूचि तेनैव तत्र तात्पर्यशक्तिरिति पूर्वोक्तशक्तिविलक्षणा काचिदभ्युपेयेति। तथा शक्त्या अन्वितमर्थः पदानि संहृत्य सम्पादयन्तीति तावदिदं कदाचित् अन्विताभिधानमित्यपि नैयायिकैरुच्यते[1]।

---

1. पदान्यन्वितं प्रत्याययन्ति, नान्वितमभिदधति। नाभिधात्री शक्तिः अन्वितविषया, किन्तु अन्वयव्यतिरेकावगतनिष्कृष्टस्वार्थविषयैव [न्या. म. ३७१]

४-६-१-१ मुख्यविशेष्यः—पदैस्तावत् वृत्या स्मृतानां पदार्थानां संसर्गं वाक्यार्थाख्यमवगाह्य व्युत्पद्यमानः विशेषणविशेष्यभावापन्ननानापदार्थविषयकः शाब्दबोधः वाक्यार्थबोध इत्याख्यायते । तत्र को नाम मुख्यविशेष्य इति विचारे नैयायिका एवं उपपादयन्ति -

"पण्डितश्चैत्र" इत्यत्र पण्डिताभिन्नश्चैत्र इति बोधः अनुभूयते । नात्र धात्वर्थः, अथवा आख्यातार्थो वा मुख्यविशेष्यः इति वक्तुं शक्यः। तिङन्तस्यैवाभावात्। एवमेव भवन्ति बहवः प्रयोगा आख्यातरहिताः[1] । न च - "अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति" इति कात्यायनवचनात् अत्र अस्तीति क्रियापदमध्याहार्यमिति वाच्यम् । 'त्वं पण्डितः' 'अहं पण्डितः' इत्यादौ प्रथमपुरुषास्तिपदाध्याहारस्यायोग्यत्वात्। प्रागुक्तवार्तिककारवचनस्याप्रवृत्तेः, क्रियापदाध्याहारविषये प्रमाणाभावात् प्रथमान्तार्थमुख्यविशेष्यकबोध एव अङ्गीकार्यः । अत एव -

"स याति पुरुषस्तस्य पादयोयोरभिवादय' इत्यत्रापि तच्छब्दः पूर्ववाक्यार्थबोधे यः प्रधानं - मुख्यविशेष्यः, पुरुषः तमेव परामृशति । स च परामर्शः 'पुरुषः प्रयाति' इति बोधे

1. शशी दिवसधूसरः, विगतयौवना कामिनी
सरो विगतवारिजं, मुखमनक्षरं वाकृतेः ।
प्रभुर्धनपरायणः, सततदुर्गतस्सज्जनः
नृपाङ्गणगतः खलः मनसि सप्त शल्यानि मे ।। [शा. त. १७८]

प्रथमान्तार्थस्य मुख्यविशेष्यतायामेव घटते । नान्यथेति । एवं प्रथमान्तार्थमुख्यविशेष्यकबोधः यथा 'चैत्रः पचति' इत्यत्र 'पाकानुकूलकृतिमान् चैत्रः' इत्येवं रूपः सर्वानुभवसिद्धः युक्तिसह इति नैयायिकैः स एव सम्प्रतिपन्नः[1] ।

४-६-२ भाट्टसिद्धान्तः--- अत्र अभिहितान्वयवादिभिः भाट्टैः शाब्दबोधप्रकार एवं व्युत्पाद्यते । यथा - ज्ञातैः पदैः कृते पदार्थस्मरणे यत् असन्निकृष्टवाक्यार्थज्ञानं जायते तत् शाब्दमिति[2] ।

इदं च शाब्दज्ञानं व्युत्पत्तिमूलकम् । तथा हि - बालः कश्चित् गामानय इत्युत्तमवृद्धेनाभिहि सति तच्छ्रुत्वा प्रवृत्तेन मध्यमवृद्धेन गवि आनीते, तस्य बुद्धिपूर्वकत्वात् गवानयानाद्यर्थबुध्यनन्तरमेव मध्यमवृद्धस्य प्रवृत्तिर्जातेति अवगच्छन्, तथाविधार्थज्ञानस्य तादृशशब्दानन्तरमेव जातत्वात् गामानय इत्यस्य शब्दस्य गवानयनमर्थं इति जानाति । तदा गवानयनरूपस्य पिण्डितस्यैवार्थस्य बोधकतया 'गामानय' इति शब्दः ज्ञातः । तदनन्तरं 'गां बधान अश्वमानय' इत्यादिप्रयोगे, पदान्तरयोगत्यागरूपावापोद्वापाभ्यां गोपदं सास्नादिमतः वाचकम् । आनयनपदं च आनयनक्रियाबोधकमिति विविच्य पदार्थान् गृण्हाति ।

---

1. दृश्यतां श्रीरामानुजताताचार्यः, एन्. एस्., "वचननिर्णयः", विमर्शः, Vol. 1, K. S. V. Tirupati, 1972. pp. 21-26.
2. तत्र तावत् पदैर्ज्ञातैः पदार्थस्मरणे कृते ।
असन्निकृष्टवाक्यार्थज्ञानं शाब्दमितीर्यते ॥ [मा. मे. ९२]

एवं जाते च पदार्थज्ञाने, ततः परं जायमानं एकविशिष्टार्थज्ञानरूपं वाक्यार्थज्ञानं लक्षणया भवतीति भाट्टनयः[1] ।

लक्षणा हि वाच्यार्थानुपपत्त्या संभवति । अत्र गवादिपदैः स्मर्यमाणाः गवादिपदार्थाः परस्परान्वयमन्तरा सामान्यरूपा एव यदि वर्तन्ते तर्हि व्युत्पत्तिसमकालगृहीतमेकविशिष्टार्थबोधतात्पर्यं भज्येतेति सामान्यरूपस्य वाच्यार्थस्य अनुपपद्यमानतया, परस्परान्वयरूपविशेष एव तेषां पर्यवसानम् । तथा च गौरानीयमानैव, आनयनमपि गोसम्बद्धमिति परस्परान्वयलाभेन गवानयनरूपवाक्यार्थस्य सिद्धिः । अतः पदाभिहिताः पदार्था एव परस्परमन्वयं प्राप्नुवन्तीति अभिहितान्वयवादः भाट्टानाम्[2] । यथोक्तं वार्तिककारैः –

"पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ।।
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ।."

इति । येन वा जनेन अज्ञाताश्रयं श्वैत्यं ज्ञातं, हेषाशब्देन अज्ञातरूपः हयः अनुमितः- खुरविक्षेपशब्देन अज्ञातकर्तृकं धावनमनुमितं, तस्य 'श्वेतोऽश्वो धावति' इति वाक्यार्थज्ञानमुदेति । तत्र कस्यचन पदस्याभावात उपस्थितैः पदार्थैरेव अन्वयबोधः

---

1. वयं तु पदार्थाः लक्षणयैव वाक्यार्थं बोधयन्तीति ब्रूमः । [मा. मे. ९४]
वाक्यार्थे लक्षणेति सिद्धान्तः [भा. चि. ६१]

2. तैनात्र पदावगताः पुनः पदार्था मिथोऽन्वयं यान्ति ।
इत्येवमभिहितान्वयसिद्धान्तो दर्शितोऽस्मदादीनाम् ।। [मा. मे. ९५]

भवतीति अकामेनाप्यास्थेयम् । अत्र कारिकायां श्वेतिमारूपमिति पाठः नातीव समीचीनः । आरूपं अव्यक्तरूपं अव्यक्ताश्रयमिति भावः । अन्यैश्च श्वेतं आ - ईषत् पश्यतः इति, आ - ईषत् श्वेतं पश्यतः इति च द्विधा व्याख्यातम् (शा. त. ८) ।

एवं शास्त्रदीपिकायां पार्थसारथिमिश्रः पदार्थः पदाभिहितैरेव वाक्यार्थः लक्षणाया प्रतिपाद्यत इति व्यवारीत् । गामानयेत्यत्र आनयनसामान्यमभिधाय आनयतिः तद् व्यक्ति पश्चात् लक्षयति । स्वार्थद्वारा गोपदमपि गोकर्मकत्वरूपेण तत्सम्बन्धितया आनयनमेव लक्षणया बोधयति । अतः लक्षणयैव वाक्यार्थनिर्वाहः भाट्टसिद्धान्ते[1] ।

एतेषां मते पदार्थाः वाक्यार्थज्ञानहेतवः । न तु पदानि । आसत्ति योग्यता—आकांक्षादीनां सहकारित्वम् । असंति बाधके कार्यस्य- सहकारिणश्च प्रत्यासन्नं कारणमिति अन्वयव्यतिरेक-

---

1. तस्मात् पदाभिहितैः पदार्थैः लक्षणया वाक्यार्थः प्रति पाद्यते । तत्र गामानयेत्यानयतिः आनयनसामान्यमभिधाय तद्व्यक्तिं लक्षयति। गोपदमपि स्वार्थद्वारेण आनयनमेव गोकर्मकत्वकारेण तत्सम्बन्धित्वरूपेण लक्षणया प्रतिपादयति । एवं यत्र यत्र वाक्ये यो यो अर्थः विशेष्यत्वेन विवक्षितः तमेव स्वपदेन समानवाचिना लक्षितं सन्निहितराणि पदानि स्वार्थाभिधानद्वारेण तत्सम्बन्धिरूपेण लक्षयन्ति [शा. दी. १५६]

cf. PMS. 134: Thus in every sentence, each of the component words directly denotes its own meaning in the general form and indirectly indicates it as related to the meaning of the other words. (This is what is called the *Abhihitānvayavāda* the theory of the verbal expression of connection between what is denoted).

बलात् निश्चीयते । अत्र पदार्थोपस्थितेः अन्तरङ्गत्वात् सैव वाक्यार्थज्ञाने कारणमिति भाट्टनयः[1] ।

गागाभट्टस्तु भाट्टचिन्तामणौ विशिष्टवैशिष्ट्यरूपः वाक्यार्थः चतुर्धा निरूपयति । यथा -

क) विशिष्टस्य वैशिष्ट्यरूपम् ।

ख) विशेष्ये विशेषणं, तत्र च विशेषणान्तरम् ।
यथा - 'नीलदण्डवान् पुरुष' इति ।

ग) एकविशिष्टे अपरवैशिष्ट्यम् ।
यथा - 'दण्डी देवदत्तः कुण्डलीति' ।

घ) एकत्र द्वयम् ।

यथा - 'दण्डी, कुण्डली, देवदत्त'[2] इति । (भा. चि. ६०) इति । चतुर्विधेऽपि उपरितेन वाक्यार्थे वाक्यस्य लक्षणेति भाट्टनयः[3] ।

---

1. व्यतिषंङ्गो हि वाक्यार्थः स पदार्थेष्ववस्थितः ।
आकांक्षादित्रयमपि पदार्थेष्वेव वर्तते ।।
अतोऽन्तरङ्गतायुक्तेः पदार्था एव कारणम ।
यदज्ञातपदार्थोऽयं विज्ञातपदमात्रकः ।।
पदोपजनितस्वार्थस्मृत्यनन्तरमेव तु ।
अधिगच्छति वाक्यार्थं स एव पुनरित्युत ।। [त. बि. ११२]

2. भावनैव हि वाक्यार्थः स्वकारकविशेषिता ।
विधित्वं श्रौतमार्थं वा भावनाकारकाश्रयम् । [त. वा. ४५]

3. वाक्यस्य वाक्यार्थे लक्षणा । नच शक्याभावात् कथं लक्षणेति वाच्यम् । बोध्यसम्बन्धस्यैव लक्षणात्वात् । घटमानयेत्यादि वाक्ये घटानयनसामान्य-बोधेऽपि तद्विशेषबोधस्य लक्षणां विनानुपपत्तेः । न हि घटानयनसामान्यं

४-६-२-१ **मुख्यविशेष्यः**— भाट्टानां मते शाब्दबोधे मुख्यविशेष्यतया आख्यातार्थः भासते । तथा हि - यथा "घटमानये" त्यत्र घटकर्मकानयनानुकूला चैत्रसमवेता कृतिरिति । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन" इति व्युत्पत्तिबलात् तिङन्तघटकधातोरर्थस्य आख्यातार्थ एव विशेष्यः भवितुमर्हति । सत्स्वपि काल-संख्या-कृत्यपरपर्यायभावना-कर्तृत्वादिषु बहुष्वर्थेषु भावनैव विशेष्यः इति । तत्रैव आख्यातार्थकालादिकं विशेषणतया अन्वेति भावप्रधानमाख्यातम् इति स्मृतेः । अतः मीमांसकमते आख्यातार्थभावनामुख्यविशेष्यकबोध एव युक्तिसह इति स उपात्तः । विस्तरभिया नात्र विपुलः विचारः व्यवधायीति विरम्यते ।

४-६-३ **प्राभाकरसिद्धान्तः**— प्राभाकराणां तु अन्विताभिधानवादिन इति महती प्रसिद्धिः । किं नाम अन्विताभिधानम् ? उच्यते - लोके हि दीप इव व्युत्पत्तिनिरपेक्षः शब्दः अर्थानवबोधयितुं न शक्नोति । वृद्धव्यवहारवशादुपजायते च व्युत्पत्तिः । संसृष्टार्थविवक्षयैव वृद्धैः वाक्यप्रयोगः क्रियते । श्रोतृजनोऽपि संसृष्टमेवार्थमवबुध्यते । पदसमूह एव वाक्यम् । न ततो भिन्नं किमपि । गुणभूतानेकपदार्थविशिष्टः पदार्थ एव वाक्यार्थ इत्यभिधीयते । यथा - शिबिकोद्यमनव्यापृताः चत्वारः

---

वाक्यार्थः, ज्ञानेच्छाप्रवृत्तीनां समानप्रकारकत्वसमानविशेष्यकत्वेन हेतुहेतुमद्भावात् विशेषविषयकेच्छाप्रवृत्त्यनुपपत्तेः । अतः तद्विशेषरूपवाक्यार्थस्य लाक्षणिकत्वं युक्तमिति । [भा. चि. ६३]

षड्वा जनाः तामुद्गच्छन्ति तथैव वाक्यघटकानि सर्वाण्यपि पदानि वाक्यार्थमवबोधयन्ति । पदानां च अर्थान्तरान्वितस्वार्थे शक्तिरित्युच्यते ।

व्युत्पत्तिज्ञानं प्रथममेवमुत्पद्यते[1] -- उत्तमवृद्धः 'गामानय' इति वाक्यं प्रयुङ्क्ते । मध्यमवृद्धः तदनन्तरं गवानयने प्रवर्तते। तटस्थस्य जनस्य तदा मनसि एवं मनीषा भवति यत् - मध्यमवृद्धस्य प्रवृत्तिः ज्ञानजन्या, प्रवृत्तित्वात्, मदीयप्रवृत्तिवत् इति । तादृशप्रवृत्तिजनकं ज्ञानं गामानय इति उत्तमपुरुषवाक्यजन्यं, तदनन्तरं प्रवृत्तेरुपजातत्वात् । एवमेव असकृत् प्रयोगदर्शनेन मध्यस्थस्य जनस्य गामानय इति वाक्यस्य गोकर्मकानयनरूपे वाक्यार्थे व्युत्पत्तिः संमुग्धा बोभवीति । पश्चात् अश्वमानयेति प्रयोगे श्रुते, जातायां च अश्वमानयनप्रवृत्तौ अश्वपदावापे तदर्थान्वयात्, गोपदोद्वापे च तदर्थानन्वयात् अश्वपदस्यार्थान्तरान्विते हयरूपेऽर्थे गोपदस्य अर्थान्तरान्विते सास्नादिमदर्थे च प्रत्येकं मध्यस्थस्य शक्तिग्रह उत्पद्यते । एवं शक्तिग्राहकप्रमाणानां धुरि कीर्तनीयेन व्यवहारेण पदानां इतरान्वितेऽर्थे शक्तिग्रहः सञ्जायते । अस्याः इतरान्विताथानुभजनकत्वरूपतया इयमानुमानिकी शक्तिरित्यभिधीयते[2] ।

---

1. उपलक्षणश्रयणेनापि सम्बन्धबोधः, सौकर्याद्वाकांक्षितेन योग्येन सन्निहितेन चान्वितं स्वार्थं पदं वक्तीति व्युत्पत्तिराश्रियते । [प्र. प. ३८४]

2. See BHAṬṬĀCHĀRYA, Gopikāmohana, "Import of Sentence (Anvitābhidhānavāda)", *OH* (I) 1953. 77-84.

अत्र मध्यस्थः पुरुषः अर्थान्तरान्वितार्थज्ञानं पदप्रयोज्य-मवबुध्यत इति पदाभिहितानां पदार्थानामेव अन्वयबोधशक्तिः अङ्गीकार्यमिति वाच्यम् । प्रथमभावीनि पदानि परित्यज्य पदार्थेषु वाक्यार्थबोधनशक्तिस्वीकारस्य असमञ्जसत्वात् । किञ्च पदार्था एव वाक्यार्थमनुभावयन्तीति वदतामपि पदानामभि-धानशक्तौ न काऽपि विप्रतिपत्तिः । अन्विताभिधानवादिभिः तस्याः शक्तेः अन्वयपर्यन्तता कल्प्यते । वाक्यार्थावबोधनशक्ति-स्वीकारे पुनः शक्तिरेव कल्पनीयेति । एवं च धर्मिकल्पनातो धर्मकल्पनायाः लघीयस्त्वात् पदार्थेषु तादृशशक्तिकल्पनापेक्षया सिद्धायाः पदनिष्ठायाः अभिधानशक्तेः अन्वयपर्यन्तता कल्पन एव लाघवमिति तत्कल्पनम् ।

यश्च तावत् -

पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ।
भावनावचनस्तावत् तां स्मारयति लोकवत् ॥

इत्यादिकुमारिलभट्टवचनानुरोधं पदानां पदार्थस्मारकत्वमेव अभिधायकत्वमिति ब्रूते - तदापि पदानां अन्वितार्थबोधनशक्तिः अवश्यमभ्युपगन्तव्या[1] । वाक्यार्थज्ञाने वाक्यस्य तात्पर्यमाव-श्यकम् । नोचेत् वाक्यार्थस्य शाब्दत्वमेव नैव भवितुमर्हति । अत एवोक्तं शालिकानाथेन प्रकरणपञ्चिकायम्[2] यथा–

---

1. प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि ।
पदानामेव सा शक्तिः वरमभ्युपगम्यताम् ॥ [प्र. प. ४००]

2. See *PMS* P. 137.

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसम्पादितव्यक्ति पश्चात् वाक्यार्थबोधकम्

(प्र. प. ४०२) इति ।

नच अन्विताभिधाने शक्तित्रयं कल्पनीयम् । तथा हि - प्रथमा पदानां स्वार्थस्मारकशक्तिः, द्वितीया च तेषां अन्वितानुभवजननशक्तिः, तृतीया च एकस्मृत्यारूढानां तावत् सर्वेषां पदानामन्वितानुभवजनकतया अन्विताभिधानशक्तिः[1] तावत्पदविषयकस्मरणे तदयुक्तमिति वाच्यम् । नहि नामेदं शक्यं वक्तुं यदेकस्मादेव पदात् शाब्दबोधः सम्भवतीति । अभिहितान्वयवादिभाट्टपक्षेऽपि यावच्चार्थान्तरं पदान्तरेणोपस्थाप्यते तावन्नान्वयानुगम उपगतः । तैरपि एकस्मृत्यारूढेभ्यः पदाभिहितेभ्यः पदार्थेभ्यः वाक्यार्थबोधः अभ्युपगन्तव्य इति शक्तिपञ्चककल्पनम् । यथा - (क) स्वार्थाभिधानशक्तिः (ख) स्वार्थस्मरणशक्तिः (ग) पदार्थगतवाक्यार्थावगमशक्त्याधानशक्तिः (घ) पदार्थे वाक्यार्थावगमशक्तिः (ङ) एकस्मृत्यारूढपदार्थानां अन्वयबोधकतया तावत्पदार्थविषयकस्मरणे पदार्थगतवाक्यार्थावगमशक्त्याधानशक्तिरिति पञ्च शक्तयः कल्प्याः ।

अन्विताभिधानवादिभिस्तु शक्तित्रयमेव पूर्वोक्तं कल्प्यमिति लाघवं सम्मते दरीदृश्यते । एवं च पदानामन्वितार्थे शक्तिरङ्गीकार्या । अन्वये शक्तिर्यदि नाङ्गीक्रियते तर्हि अन्वय-

1. स्मृतिसन्निहितै रेवमर्थैरन्वितमात्मनः ।
सर्वमाह पदं सर्वमिति नान्योन्यसंश्रयः ॥ [प्र. प. ४०६]

विशेषजिज्ञासा कथं नाम घटेत? सामान्यज्ञानरूपस्य कारणस्याभावात् इति अन्विताभिधानवादिनां प्राभाकराणां राद्धान्तः। अयमत्र संग्रहः—

"यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥"

(प्र. प., ३८४) इति ।

४-६-४ समीक्षणम् — शाब्दबोधः वाक्यार्थबोधः अन्वयबोधः इत्यनर्थान्तरम् । त्रिष्वपि प्रस्थानेषु पदानीमानि समान एवार्थे प्रयुक्तानि । परंतु तत्स्वरूपं तु प्रतिमतं भिन्नभिन्नं दरीदृश्यते । शाब्दबोधनिरूपणावसरे अभिहितान्वयवादः भाट्टैः अन्विताभिधानवादः प्राभाकर इति, भङ्ग्यन्तरेण स एव नैयायिकैश्च प्रत्यपादि । नैयायिकाङ्गीकृतस्यास्य जातिविशिष्टशक्तिवादः तात्पर्यशक्तिवादः इत्यपि नामान्तरम् ।

नैयायिकमते च पदान्येव पदार्थस्मृतिद्वारा अन्वयबोधमुपजनयन्ति । शिबिकावाहकपुरुषवत् पदानि सर्वाण्यपि अन्वयबोधे संहृत्य व्याप्रियन्ते । तत्तदर्थमात्रे तेषां शक्तिः मतेऽस्मिन् अङ्गीक्रियते ।

भाट्टमते लाक्षणिको हि वाक्यार्थं इति व्यवस्थापयन्तः वार्तिककाराः, तदनन्तरकालिकाश्च — "पदानि स्वं स्वमर्थं अभिसन्धाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगतास्सन्तः वाक्यार्थमवगमयन्ति" (शा. भा. १-१-२५) इति भाष्यकार-

वचनानुरोधं वाक्यघटकपदेभ्यः अभिहितैः पदार्थैः आकांक्षादि-सहकारशालिभिः जायते वाक्यार्थबोधः । नैव पदं वाक्यार्थबोधे कारणम् । अभिहितेन पदार्थेन करणेन अन्वयः संसर्गबोधः अभिहितान्वय इति प्रतिपादयन्ति ।

प्राभाकरमते तु शक्तिग्राहकप्रमाणमूर्धन्येन व्यवहाराख्येन पदानामितरान्वितेऽर्थे शक्तिः, इतरान्वितार्थानुभवजनकत्वरूपा भवतीति अन्विताभिधानवादः ।

शाब्दबोधविषये नैयायिकमतं भाट्टैः सर्वांशेन परित्यक्तम् । यतस्ते अभिहितान्वयवादिनः शाब्दबोधे पदार्थानां कारणत्व-मभ्युपयन्ति । प्राभाकरैः तावत् एकदेशेन नैयायिकमतमनु-सृतम् । पदानामन्वयबोधे कारणत्वं, पदजन्यपदार्थस्मरणाङ्गी-कारश्चेति उभयं नैयायिकवदेव प्राभाकरैरन्विताभिधानवादि-भिरभ्युपागामि । किन्तु पदानां अन्विते शक्तिमङ्गीकुर्वन्ति प्राभाकराः, तत्तदर्थमात्रे शक्तिमूरीकुर्वन्ति नैयायिका इति तावद् भेदः ।

उक्तपूर्वेषु त्रिष्वपि मतेषु नैयायिकमतमेव साधीयः । तथा हि - अभिहितान्वयवादे हि पदार्थानामेव शाब्दबोधे कारणत्वमुपगम्यते, न पदानाम् । तथा सति मानसोपनीत-भानात्मकपदार्थज्ञानेऽपि शाब्दयामि इति अनुव्यवसाया-पत्तेः । पदहेतुता यदि स्वीकृता तर्हि मानसोपनीतभानस्थले तथाविधोऽनुव्यवसायः भवितुमर्हत्यापत्ति विषयः ।

नच वाच्यम्, पदार्थकरणतामन्तरा कवेः काव्यकरणप्रयोजकं संसर्गज्ञानं कथं नाम भवेत्? शब्दस्याभावात्, तथैव पूर्वोक्ता - "श्वेतोऽश्वो धावति" इति बुद्धिश्च कथमुपपद्येतेति, उत्प्रेक्षासहकृतं मन एव चिन्तोपनीतपदार्थज्ञानावान्तरव्यापारद्वारा काव्यकरणप्रयोजकं पदार्थसंसर्गज्ञानमुपजनयति । मानसे तस्मिन् ज्ञाने मनस एव करणता न पदार्थस्य इत्यङ्गीकारात् ।

एवञ्च पदज्ञानमन्तरा जायमाना "श्वेतोऽश्वो धावतीति" बुद्धिः न शाब्दरूपा । पदार्थसंसर्गज्ञानमात्रस्य वाक्यार्थबुद्धित्वानभ्युपगमात् । पदार्थापेक्षया पदानामेव प्रथममुपस्थितत्वात् । प्रथमातिक्रमणे कारणाभावात् । अतः भाट्टाभ्युपगतः अभिहितान्वयवादः नोपादेयः ।

तथा च यदुक्तं - वाक्यार्थो लाक्षणिकः, पदबोध्यपदार्थेन बोध्यत्वात्, तीरवत् इति वाक्यघटकानां सर्वेषामपि पदानां वाक्यार्थे लाक्षणिकत्वमिति तदपि न विचारसहम् । शक्तेः मीमांसकमते अन्वयानुभवजननसामर्थ्यरूपतया यदि तत्सामर्थ्यं लाक्षणिकस्याप्युच्यते लाक्षणिकमपि तदा शक्तिमदिति मुख्यजघन्यविभाग नैव घटत इति लिङ्गाधिकरणविरोधः । तथैव मुख्यसम्भवे लक्षणा अनुपादेयेति सर्वतन्त्रसिद्धान्तविरोधश्च । अतश्च नाभिहितान्वयवाद उपादेय इति भावः ।

एवमेव प्राभाकराभ्युपगतः अन्विताभिधानवादश्च न साधीयान् । तथा हि – व्यवहारेण इतरान्वितज्ञानोपस्थितिदशायां तत्तदर्थज्ञानरूपस्य विशेष्यस्यापि अवश्यमुपस्थितेः ।

नहि नाम कुत्रापि विशेष्यमविषयीकृत्यैव विशिष्टा बुद्धिरुत्पत्तुमर्हति। एवञ्चोपस्थिततत्तदर्थज्ञान एव पदस्य कारणत्वं निश्चिनोति व्युत्पित्सुः। शक्तिं च लाघवात् तत्तदर्थ एव गृण्हाति। गौरवात् नान्वयांशेऽपि। अतः नान्वितविषयकः शक्तिग्रहः अङ्गीकर्तुमुचितः।

ननु अन्वयः पदशक्यः, वृत्यन्तरं विना पदप्रतिपाद्यत्वात् इत्यनुमानेन अन्वयांशे गौण्याः, लक्षणायाश्च वृत्तेरप्रवृत्तेः शक्तिरेव कल्प्यतामिति चेत् - मैवम्। अवश्यकल्पनीयकारणभावेन आकांक्षाज्ञानेनैवान्वयबोधोत्पत्तेः नान्वये वृत्तिः कल्पनीया। अतः अन्विताभिधानवादोऽपि न सुधीभिः उपादेय इति।

किञ्च अन्विताभिधानवादिनां प्राभाकराणां, नैयायिकानां च नास्ति साम्यमित्यपि वक्तुं शक्यते। न केवलं तयोर्मध्ये पदानां शब्दान्वयानुभवकारणतास्वीकारेण साम्निहित्यं, किन्तु पदजन्यपदार्थस्मरणाङ्गीकारेणापि। अन्विते शक्तिरिति वदतां तेषां अन्वयेऽपि शक्तिः पदानामस्त्येव। सा च तैरानुभाविकी शक्तिरित्युक्ता। न स्मारकी शक्तिः। पदैः इतरान्वितार्थविषयकशाब्दानुभव उपजायते। स्वार्थजातिस्मारकाणि च पदानि। व्यक्तिमन्तरा केवलाया जातेः भानं नोपपद्यत इति पदजन्यं जातिस्मरणं व्यक्तिविषयकमपीति वक्तव्यम्। एवञ्च शाब्दबोधोऽपि व्यक्तिविषयकः। इयं च व्यक्तिविषयता पदशक्तिप्रयोज्या भवति न वेति तावदन्यदेतत्।

अभिहितान्वयवादिनः भाट्टास्तु प्रथमं पदात् जातिविषयकः निर्विकल्पकः शाब्दबोधः, ततः परं वाक्यार्थबोधः, ततश्चाक्षेपात् व्यक्तिविषयकबोधश्च भवतीति कथयन्ति। नैयायिकैः जातिविशिष्टशक्तिवादिभिः पदेन जातिविशिष्टशक्तिस्मरणमभ्युपागामीति तावत्परस्परं भेदः प्रस्थानानाम्।

नैयायिकमते तु जातिविशिष्टशक्तिवादः अभ्युपेयत इति शाब्दतरङ्गिण्यां श्रीसुब्रह्मण्यशास्त्रिमहोदयैरुदीरितम्[1]। मतेऽस्मिन् पूर्वोक्तरीत्या नैते दोषाः सम्भवन्तीति जातिविशिष्टशक्तिवादः तात्पर्यशक्तिवादापरपर्यायः अन्विताभिधानवाद इत्यपि कथ्यमानः सम्प्रतिपन्नः[2]।

यथाभ्यधायि जयन्तभट्टेन[3] - "संहत्यकारिताऽप्यस्ति न चान्विताभिधानम्। अन्वितार्थं पदानि संहत्य सम्पादयन्ति। न त्वन्वितमभिदधति। — इयं वाचोयुक्तिः ··· पदान्यन्वितं प्रत्याययन्ति। नान्वितमभिदधति। नाभिधात्री शक्तिरन्वितविषया, किन्त्वन्वयव्यतिरेकावगतनिष्कृष्टस्वार्थविषयैव। तात्प-

---

1. वयं तु जातिविशिष्टशक्तिवादिनः पदेन जातिविशिष्टव्यक्तिस्मरणमङ्गीकुर्मः [शा॰ त॰ ६१]

2. अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठता।
तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः॥ [न्या॰ म॰ ३७२]

3. सेयं व्युत्पत्तिमूला पदविसरसमुद्भिद्यमानाङ्कुरश्रीः
संस्कारोदारपत्रा कुसुमचयवती प्रोल्लसद्भिः पदार्थैः।
प्रज्ञावल्ली विशाला फलति फलमिदं स्वादु वाक्यार्थतत्वैः
तैराकांक्ष्यं लसद्भिः हृदयमुपगते यान्ति यस्मिन् पुमांसः॥ [न्या॰ म॰ ३७२]

र्यशक्तिस्तु तेषां अन्वितावगमपर्यन्ता सह व्यापारात्" (न्या. म. ३७१) इति । ऐदम्प्राथम्येन तात्पर्यस्यास्य प्रत्येकवृत्तित्वं जयन्तभट्टेन प्रत्यपादीति प्राचार्यैः श्रीकुंजुण्णिराजमहोदयै-रभ्यधायि[1] ।

अत्र सूक्ष्मेक्षणिकया विचारे क्रियमाणे चेदं प्रतिभाति यत् - नैयायिकाभ्युपगतस्य पक्षस्य नान्विताभिधानवाद इति व्यवहारः घटत इति । यतोऽत्र अन्वयप्रतिपत्तिरेव भवति न त्वन्विताभिधानमथवा अन्वयाभिधानम् । अमुमेवाभिप्रायं आस्माकीनं उपोद्बलयति जयन्तभट्टस्यापि वचनम् । यथा -

तेनान्विताभिधानं हि नास्माभिरिह मृष्यते ।
अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते ॥

(न्या. म. ३७२) इति ।

इदमप्यत्रास्माभिरवधेयं यत् – आनन्दवर्धनेन (८५५-८८३ क्रि. प.) तात्पर्यवादः खण्डितः । प्राध्यापकैः श्रीराघवन्-महोदयैरुक्तरीत्या शृङ्गारप्रकाशे भोजेन (१०१८-५६ क्रि. प.) आनन्दवर्धनं तात्पर्यवादिनश्चानुसरता तात्पर्यं द्विधा विभक्तम् - अभिधीयमान - प्रतीयमान - ध्वनिरूपभेदेन[2] । भोजः तात्पर्यस्य ध्वनेश्च न भेद इत्यपि प्रत्यपीपदत्[3] ।

---

1. See Indian Theories of Meaning, P. 221.
2. *Sṛṅgāraprakāśa* (=S. P.) P. 152.
3. तात्पर्यमेव वचसि ध्वनिरेव काव्ये
सौभाग्यमेव गुणसम्पदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः
शृङ्गार एव हृदि मानवतो जनस्य ॥ Ibid, pp. 61-68.

४-६-४-१ **मुख्यविशेष्यः** — प्रथमान्तार्थः मुख्यविशेष्य इति नैयायिकानां आख्यातार्थभावना मुख्यविशेष्य इति मीमांसकानां च पक्षः। तत्र नैयायिकपक्षे युक्तयः प्रागेव दर्शिताः। तैरुक्तः प्रथमान्तार्थमुख्यविशेष्यकबोधः बहुजनानुभवसाक्षिकं इति स एव समीचीनः पन्था इति विभाव्यते।

तथा हि · आलङ्कारिकाः प्रायशः प्रथमान्तार्थमुख्यविशेष्यकबोधमेवाङ्गीकुर्वन्ति। बोधाभिनिवेशविरहिणः वेदान्तिनोऽपि बोधवर्णनावसरे प्रथमान्तार्थ एव मुख्यविशेष्यतया प्रत्यपीपदन् (शा. त. १८४)। किञ्च – "वाक्यैः आख्यातं प्रधानम्, तदर्थत्वात्, गुणभूतं नाम। तदर्थस्य भावनिष्पत्तावङ्गत्वात्। एवं तावद् वाक्ये आख्यातं प्रधानम्।" (शा. त. १८५)

इति भाष्यवचनान्यपि आख्यातार्थनिष्पत्तये कारकाणामपेक्षितत्वरूपमाख्यातार्थप्राधान्यं अवगमयन्ति। तस्य प्राधान्यं विधेयत्वमूलकमपि भवेत्। चैत्रः पचति इति वाक्यजन्यबोधे पाकानुकूलकृतेः आख्यातार्थस्य विधेयत्वात्। अतः नाख्यातार्थविशेष्यकत्वं मीमांसकोपपादितं समीचीनमिति प्रथमान्तार्थमुख्यविशेष्यकबोध एव साधीयानिति निरवद्यम्॥

# पञ्चमाऽध्यायः

## ५ अर्थापत्त्यधिकारः

### ५-१ अर्थापत्तिलक्षणम्

५-१-१ भाट्टसिद्धान्तः — अर्थापत्तिरपि पञ्चमं प्रमाणम् । अभाषि च तत्स्वरूपमेवं भाष्यकारेण शबरस्वामिना । यथा - "अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना । यथा - जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" (शा. भा. ११०) इति। अन्यथानुपपत्ति प्रमाणान्तरेण प्रमितस्यार्थविशेषस्य अर्थान्तरेण विना जायमानामनुपपत्तिं विभाव्य तदुपपत्त्यर्थं कस्यचनार्थस्य कल्पनं अर्थापत्तिरिति फलितम्[1] । (श्लो. वा. १-२) । अत्र प्रमाणद्वयविरोधः अनुपपत्तिः[2] । यथा - साधारणप्रमाणेन गणितागमादिना देवदत्तस्य जीवने गृहे बहिर्वा निश्चेति सति, गृहे असतः तस्य जीवतः बहिर्भावकल्पनं विना नोपपद्यते जीवनमिति, जीवनं बहिर्भावं कल्पयतीति सा अर्थापत्तिः[3] ।

---

1. प्रमितस्यार्थस्य अर्थान्तरेण विनाऽनुपपत्तिमालोच्य तदुपपत्तये या अर्थान्तरकल्पना सा अर्थापत्तिः । [शा. दी. ७६]
अन्यथानुपपत्त्या यदुपपादककल्पनम् ।
तदर्थापत्तिरित्येवं लक्षणं भाष्यभाषितम् ॥ [मा. मे. ११८]

2. cf. I. T. K., P. 254 : So, the meaning of Śabarā's statement would be that when a fact known cannot be explained except by assumption of some other fact, not in evidence, it is called presumption.

3. प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥ [श्लो. वा. ४६२]

| न्यायसिद्धान्ते | भाट्टसिद्धान्ते | प्राभाकरसिद्धान्ते |
|---|---|---|
| १. आप्तोपदेशः शब्दः | शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् | सम्बन्धग्रहणद्वारा अर्थप्रत्यायकः पदसमूह एव शाब्दम् |
| २. शब्दः दृष्टार्थादृष्टार्थभेदेन दृष्टार्थप्रवक्तृक-अदृष्टार्थप्रवक्तृकभेदेन वा द्विविधः, द्विविधश्च प्रमाणम् | पौरुषेयापौरुषेयभेदेन द्विविधः स च प्रमाणम्, पुनः सिद्धार्थबोधकविधायकभेदेन द्विविधः, विधायकश्च उपदेशकातिदेशकभेदेन | लौकिक-वैदिकभेदेन द्विविधः, वैदिकः प्रमाणम्, वैदिकः शास्त्रापरपर्यायः प्रत्यक्षानुमानभेदेन द्विविधः |
| ३. आकांक्षा-योग्यता-आसत्ति-तात्पर्यज्ञानानि शाब्दकारणानि | आकांक्षा-योग्यता-आसत्त (क्त) यः तात्पर्यं तु केषांचिन्मतेन | आकांक्षा-योग्यता सन्निधयः |
| ४. शब्दार्थयोस्सम्बन्धः अभिधानाभिधेयनियम-नियोगः प्राच्यमते, शक्तिरेवेति नव्यमते | प्रत्याय्य-प्रत्यायकभावः, नित्यः | तथैव |
| ५. सङ्केतो लक्षणा चेति द्विविधा वृत्तिः | अभिधा-लक्षणा-गौणी चेति त्रिविधा | शक्तिः-लक्षणा-गौणी चेति द्विधा, शक्तिः पदार्थान्तरम्, सा च स्मारकी अनुभाविकी चेति द्विधा |
| ६. तात्पर्यवादः | अभिहितान्वयवादः | अन्विताभिधानवादः |
| ७. प्रायः प्रथमान्तार्थमुख्यविशेष्यकबोधः, क्वचित् निपातः अन्यत्र धात्वर्थः अपरत्र आख्यातार्थश्च | भावनामुख्यविशेष्यकशाब्दबोधः | तथैव |

अत्र उपपाद्यं जीवनं करणम् । उपपादकः बहिर्भावः फलम् । येन च विना यन्नोपपद्यते तदुपपाद्यं जीवनम् । यस्य वा अभावे यन्नोपपद्यते स उपपादकः बहिर्भावः । अत्र प्रमाणाधिगतः जीवनबहिर्भावयोः परस्परं प्रतिघातः करणम्[1] । केनचन प्रमाणेन देवदत्तः गृहे वा अवस्थितः अथवा बहिर्वा वर्तत इति गृहीतम् । तदनन्तरं प्रमाणान्तरेण गृहे नास्ति देवदत्त इति अग्राहि । समुच्चितं च तदुभयं अन्योन्यव्याघाति संपन्नम् । व्याघातोऽयं बहिर्भावकल्पनया अत्र समाधीयते । प्रमाणद्वयसिद्धयोरर्थयोः द्वयोः संजातः प्रतिघातः अर्थान्तरकल्पनेन समाधेय इति आलोच्यमानः कारणं भवति । तादृशप्रतिघातसमाधानाय क्रियमाणा अर्थान्तरकल्पना अर्थापत्तिः[2] ।

५-१-२ प्राभाकरसिद्धान्तः— अर्थापत्तिशब्दः अर्थस्य आपत्तिः कल्पना यस्मादिति व्युत्पत्त्या प्रमाणपरः । अर्थस्यापत्तिरिति तत्पुरुषसमासेन फलपरः । तथा च असत्यामर्थान्तरकल्पनायां यः अर्थान्तरमनुपपन्नं विधत्ते सा अर्थापत्तिः । अनुपपत्तिश्चात्र

---

1. साधारणप्रमाणानां असाधारणमानतः ।
विरोधादविरुद्धांशे धीरर्थापत्तिरिष्यते ॥
यथा जीवनमानस्य गृहाभावप्रमाणतः ।
विरोधात्करणीभूतात् बहिर्भावस्य कल्पनम् ॥ [मा, मे. ११८]

2. Vide PMS. P. 140; When the fact ascertained by any of the sixs means of cognition is found to be inexplicable except on the basis of a fact not so ascertained — the assumption of this latter fact is what constitutes presumption.

प्राभाकरमते सन्देह एव । यथा - देवदत्ते जीवति गृहाभाव-दर्शनेनादृष्टस्य बहिर्भावस्य कल्पनं अर्थापत्तिः[1] ।

नयविवेके भवनाथेन एवमभ्यधायि । यथा - "उपलब्धोऽर्थः कल्पनां विना अर्थान्तरं सन्देहयन् अर्थं कल्पयति, सन्देशित एव वा कल्पयति इति द्विधा लक्षणम्" इति । तथा चोक्तं शालिकनाथेन प्रकरणपञ्चिकायाम्–

"विना कल्पनयाऽर्थेन दृष्टेनानुपपन्नताम् ।
नयतादृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना ॥" इति[2] ।

तन्त्ररहस्यकारेणापि अयमेवाशयः विशदीकृतः । "देवदत्तः जीवन् गृहे नास्ति" इति, गृहाभावे दृष्टे श्रुते वा सः जीवनमुपपन्नं कुर्वन् कल्पयति तस्य बहिर्भावम् । अत्र सन्देह एवानुपपत्तिः । अनुकल्पिते बहिर्भावे, गृहाभावे च निश्चिते अयं जीवति न वा इति खलु जायते सन्देहः । बहिर्भावे कल्पिते तु तस्य सन्देहस्य प्रशान्तिः । अत्र प्रमाणमर्थसन्देहापादकः अर्थः । प्रमा च बहिर्भावकल्पना । कल्प्यमानश्चार्थः प्रमेयम्[3] । अथवा प्रमितिः प्रमाणमिति रीत्या कल्पनैव प्रमाणम् । विशिष्टज्ञानं तदुत्तरकालीनं फलमिति (त. र. १२) ।

1. अर्थापत्तिरपि दृष्टः श्रुतो वा अर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना । यथा - जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य कल्पना [शा.भा.११०]

2. दृष्टेनार्थेनादृष्टस्यार्थस्य अर्थान्तरकल्पनायां असत्यां अनुपपत्तिमापादयता या अर्थान्तरकल्पना साऽर्थापत्तिः [प्र. प. २७२-७३]

3. See RĀMASWĀMI IYER V. A., "The Pūrva-Mimāmsa, *History of Philosophy Eastern and Western*" Vol. I Pp.258 271, LONDON. 1952.

५-१-३ समीक्षणम् - अर्थापत्तेः प्रमाणता मीमांसकैरेव अङ्गीकृतेति नात्र नैयायिकानां प्रस्तावः। अथापि न्यायसिद्धान्ते प्रमाणप्रसङ्गे अर्थापत्तिसाधिकाः युक्तयः परप्रतिपादिताः अनूद्य खण्ड्यन्ते। अतः नैयायिकैः प्रमाणबहिर्भावतया निर्णीतं अर्थापत्ति-अनुपलब्धिरूपं परैः प्रमाणतया स्वीकृतं, अस्मिन् आगामिनि चाध्याये प्रतिपाद्य निरस्यते।

अर्थापत्तेः पृथक् प्रमाणताङ्गीकारे भाट्टानां प्राभाकराणां च न काऽपि विप्रतिपत्तिः। किन्तु तत्स्वरूपोपपादेन तु द्वयोर्जागर्ति मतभेदः। अन्यथानुपपत्तिवशात् अर्थापत्तिरिति भाट्टमतं प्राभाकरैः न स्वीकृतम्। किन्तु यदि तथा, तर्हि कार्यात् कारणानुमानसमानयोगक्षेमं सम्पद्यत इत्युक्तम्। यथा - "केयमन्यथानुपपत्तिरिति नाम ? यदि तावदस्या अनेन विना सद्भावो नोपपद्यत - इति। तदेवं कार्यतः कारणानुमानमुपन्यस्तम्, न प्रमाणान्तरम्" (बृहती. ११०) इति।

प्राभाकरेण शाबरभाष्यपङ्क्तिक्रमोऽप्येवं विपरिणमितः। यथा – दृष्टः श्रुतो वाऽर्थो अर्थकल्पना। - - - अन्यथा नोपपद्यत इति" (बृहती. ११०) इति। एवं अर्थापत्तिमभिवर्णयन्तः प्राभाकरा एव भाट्टापेक्षया सम्यक् तद् व्युत्पादितवन्त इति प्रतिभाति।

५-२ अर्थापत्तिविभागः - दृष्टा - श्रुता च

५-२-१ भाट्टसिद्धान्तः — भाट्टमतानुरोधं शाबरभाष्यगताभ्यां दृष्टः श्रुतो वा इति पदाभ्यां दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति सा द्विधा विभज्यते[1]।

---

1. सा पुनर्द्वयी - दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति [नीति. १६५, मा. मे.१२९]

५-२-१-१ दृष्टार्थापत्तिः—भाष्यस्थेन दृष्टशब्देन उपलब्धमात्रं प्रतीयते। अथापि दृष्टात् भिन्नतया श्रुतपदस्य गृह्यमाणतया श्रुतातिरिक्तप्रमाणपञ्चकजन्यप्रमापरतया गोबलीवर्दन्यायेन दृष्टशब्दः अन्वेयः। एवं च प्रमाणपञ्चकपूर्विका दृष्टार्थापत्ति. पञ्चधा भवति।

(क) प्रत्यक्षपूर्विका - प्रत्यक्षप्रमाणेन दाहस्य वह्ना-वुपलम्भात् तत्र दाहकशक्तिकल्पना।

(ख) अनुमानपूर्विका - देशान्तरप्राप्तिरूपेण कारणेन आदित्ये गतिमनुमाय तदवश्यंभावेन तस्मिन् गमनशक्तेः कल्पना।

(ग) शब्दपूर्विका - यथा - पीनो देवदत्तः दिवा न भुंक्ते इति श्रुते, रात्रिभोजनस्य कल्पना।

(घ) उपमानपूर्विका - गवयदर्शनेन तत्सदृशः गौः इत्युपमानप्रमाणद्वारा गवि गवयसादृश्यमुपलब्ध-वतः पुरुषस्योपमानज्ञानविषयिणी ग्राह्यशक्ति-रस्तीति कल्पना।

(ङ) अनुपलब्धिपूर्विका - जीवतो देवदत्तस्य गृहा-भावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना।

एवं दृष्टार्थापत्तिः पञ्चधा भिद्यते (सि. च. ७६)। किञ्च युक्तिस्नेहप्रपूरण्यपरपर्यायायां सिद्धान्तचन्द्रिकायां रामकृष्ण-प्रणीतायां अर्थापत्तिपूर्विका चार्थापत्तिः प्रदर्शिता[1]।

---

1. अभिधानानुपपत्तिप्रभवया अर्थापत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुन-स्तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना स्यादर्थापत्तिपूर्विका [सि. च. ७६]

५-१-.-२ श्रुतार्थापत्तिः—अपरिपूर्णस्य वाक्यस्यान्वयोपगमाय यत्र शब्दान्तरमध्याह्रियते सा श्रुतार्थापत्तिरिति भाट्टैरभ्युपगता। यथा - 'द्वारं द्वारं' इति वाक्ये अन्वयसिद्ध्यर्थमर्थान्तरेण आवरणादिना शब्दगम्येन अवश्यं भवितव्यमिति सामान्यं प्रमाणम्। तस्यार्थस्य श्रुतशब्दाभ्यामनुपलम्भात् बाधे सति, अश्रुतशब्दगम्यतया कश्चन आवरणादिरर्थः कल्प्यः - शब्देन सहैव आवरणाद्यर्थकल्पने सन्नद्धः शब्दादेवार्थस्यावगमनात् लाघवेन शब्दमेव कल्पयति। इयमेव शब्दकल्पना श्रुतार्थापत्तिरित्यभिधीयते[1]। दृष्टार्थापत्तौ अर्थःकल्प्यते। अत्र तु शब्दः कल्प्यत इति तयोर्भेदः[2] -

एवमेव 'पीनो देवदत्तः दिवा न भुंक्ते' इत्यत्र 'रात्रौ भुंक्ते' इति शब्दः कल्प्यते[3]। तथा वेदेऽपि विश्वजिता यजेत इत्यत्र स्वर्गकाम इति वा स्वर्गार्थमिति वा येन शब्देन श्रुतशब्दैकवाक्यभूतेन वाक्यं परिपूर्णं भवति तदेवालोच्य श्रुतशब्दैः सह योजनात् पूर्णः वाक्यार्थः बोध्यते (शा.दी. ८०)। पदजन्यपदार्थोपस्थितेः शाब्दबोधं प्रति हेतुत्वात् शब्दाध्याहार एव साधुरिति भाट्टमतम्। अत एव अभिहितान्वयवादिन एते शब्दाध्याहारवादिन इति प्रथन्ते।

---

1. यत्र त्वपरिपूर्णस्य वाक्यस्यान्वयसिद्धये।
शब्दोऽध्याह्रियते तत्र श्रुतार्थापत्तिरिष्यते॥ [मा. मे. १२९-३०]

2. दृष्टः पञ्चभिरप्येषा भेदेनोक्ता श्रुतोद्भवा।
प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा॥ [श्लो. वा. ४५१]

3: पीनो दिवा न भुंक्ते चेत्येवमादिवचः श्रुतौ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते॥ [तत्रैव. ४६३]
न चाप्यस्याः प्रमाणत्वे कश्चिद्विप्रतिपद्यते।
भेदाभेदे विसंवादः कुतस्तत्र विनिर्णयः॥ [तत्रैव. ४७१]

५-२-२ प्राभाकरसिद्धान्तः--- शाबरभाष्यस्थं अर्थापत्तिस्वरूपवर्णनपरं दृष्टः श्रुतो वाऽर्थः इति वाक्यस्थं श्रुतपदं परिगृह्य भाट्टैः दृष्टार्थापत्तिश्रुतार्थापत्तिभेदेन द्वैविध्यमर्थापत्तेः प्रपञ्चितम्। प्राभाकरमतानुरोधं अर्थापत्तिरेकैव । न तत्र दृष्ट-श्रुतभेद एतेषामिष्टः ।

श्रुतपदस्य प्रमाणान्तरतामाशंक्य प्रभाकरमिश्रेण तस्योपलब्धिवाचकत्वमेवं बृहत्यां निरणायि । यथा - दृष्टः श्रुतो वा इति दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय? नेति वदामः, उपलब्धोऽर्थः इत्यर्थः । श्रुतग्रहणमिदानीं किमर्थम् ? दृष्टः इत्येव वक्तव्यम् । उच्यते - अभिधानान्तरमेवेदम् - दृष्टः श्रुतो वा इत्युपलब्धेर्वाचकम्' (बृहती. ११५) इति । केवलं दृष्टशब्दमात्रेण न सर्वोपलब्धेः परिग्रहः सुलभ इति श्रुतसहितस्य दृष्टशब्दस्योपदेशः । दृष्टशब्देन सामान्यतः उपलब्धमात्रमभिधीयते । श्रुतशब्दसन्निधानेन गोबलीवर्दन्यायेन शब्दप्रमितव्यतिरिक्तमुपलब्धमुच्यते । अनादिलोकव्यवहारस्य तथैवानुभूयमानत्वात्[1] ।

अतः प्राभाकरमतानुरोधमर्थापत्तिरेकैव दृष्टार्थापत्तिरिति । नतु श्रुतार्थापत्तिरिति प्रत्येकं तैरप्युपगम्यते (त. र. १३)।

---

1. दृष्टशब्दमात्रेण न सर्वपरिग्रहः, किन्तु श्रुतशब्दसहितेन, तेन श्रुतग्रहणं नानर्थकम् । कथं पुनः श्रुतग्रहणसहितेन दृष्टशब्देन उपलब्धतोच्यते ? श्रूयताम् – दृष्टशब्देन यद्यप्युपलब्धमात्रमुच्यते, तथापि श्रुतशब्दसन्निधानात् गोबलीवर्दन्यायेन शब्दप्रमितव्यतिरिक्तमुच्यते । [बृहती. ११७]

भाट्टैरेवमुच्यते - "पीनो देवदत्तः दिवा न भुंक्ते" इत्यनेन वाक्येन देवदत्तभोजनस्य दिवानिषिद्धस्य पीनत्वेनानुमितस्य अनुपपत्त्या "रात्रौ भुंक्ते" इति वाक्यमेव कल्प्यते। शाब्दी ह्याकांक्षा शब्देनैव परिपूर्यते इति न्यायात्। इतीयमर्थापत्तिः दृष्टायाः तरां भिन्ना श्रुतेति।

नैतत् संभवति। अत्रापि अर्थ एव कल्प्यत इति सुवचम्। अकल्पिते च तस्मिन् अनुपपत्तिः संभवति। तत्खलु अर्थापत्त्या कल्प्यते। अनवगते खलु भोजनस्य रात्रिसम्बन्धे अत्र अनुपपत्तिर्भवति। अतः कालान्तरसम्बन्धकल्पनमेवालम्। 'रात्रौ भुंक्ते' इति शब्दकल्पनप्रयासः व्यर्थः। अत एव कथयन्ति सन्देहापादको अर्थो वा आपादितसन्देहोऽर्थो वा अर्थापत्तिः इति (प्र.प. २७८-७९)।

५·२·३ समीक्षणम्—शाबरभाष्यस्थदृष्ट-श्रुतशब्दौ परिगृह्य भाट्टैः दृष्टार्थापत्तिः - श्रुतार्थापत्तिरिति अर्थापत्तिद्वितयमङ्गीकृतम्। प्राभाकरैस्तावत् न त्वर्थापत्तिद्वितयं, एकैव दृष्टार्थापत्तिरिति।

तत्र कारणमेवमवधेयम् यत् - शब्दाध्याहारवादिनः भाट्टाः स्वशब्दाध्याहारवादपरिपुष्टये दृष्टार्थापत्तेः विलक्षणतया श्रुतार्थापत्तिमभ्युपगच्छन्ति। प्राभाकरास्तु अर्थाध्याहारवादिनः। अतस्ते श्रुतार्थापत्तिरिति प्रत्येकं नाभ्युपगच्छन्ति। एवं च

दार्शनिकाः स्वसिद्धान्तपरिपोषणाय तत्तद्विषयेषु वैलक्षण्यं प्रदर्श-यन्ति क्वचिच्च संक्षिपन्तीति विशेषोऽस्माभिरवधेयः[1] ।

## ५-३ अर्थापत्तेः प्रमाणान्तरत्वविचारः

५-३-१ भाट्टसिद्धान्तः — अथेयमर्थापत्तिः पृथक् प्रमाणम् । सामग्रीभेदस्य उपलभ्यमानत्वात् । तथा हि - नात्र अनुमिनो-मीत्यनुव्यवसायः संभवति । कल्पयामीत्यनुव्यवसायस्य, अथवा 'अर्थापयामि' इत्यनुव्यवसायस्य[2] वा संभवात् । अतः अर्थापत्तिः पृथक् प्रमाणम् ।

ननु अर्थापत्तेः अनुमानेऽन्तर्भावः । तथा हि - न प्रमाणयो-विरोधोऽस्ति[3] । तदा 'इदं रजतम्' 'नेदं रजतम्' इतिवत् अन्य-तरस्याप्रमाणत्वप्रसङ्गात् । प्रकृते च गृहे बहिर्वा इति सन्देहास्प-दस्य देशविशेषस्य गृहाभावावेदकप्रमाणेन प्रतिघातः । जीवन-प्रमाणेन च केवलजीवनं, अथवा देशसामान्यसम्बन्धो वा ज्ञायते। गृहाभावप्रमाणेन तदुभयमपि नैव स्पृष्टमिति कथं नाम जीवन-गृहाभावप्रमाणयोः विरोधः संभवति? का वा कथा अर्थापत्तेः तत्करणिकायाः? किञ्च यदि कथञ्चित् अभ्युपगम्यते विरोधः तदा तथाविधस्य विरोधस्य प्रसिद्धानुमानस्थलेष्वपि संभवात्

---

1. See BIJALWAN, C. D., "A Critique of Kumārila's Theory of Śrutārthāpatti" pp. 159-172, *J. G. J. K. S. V.* Vol. XXIX. 1973, Allahabad.

2. नानुमिनोमि नोपमिनोमि न शाब्दयामि किन्त्वर्थापयामि इत्यनुभवादेव मानान्तरत्वं युक्तम् [भा. वि. ४६]

3. अमुष्यास्त्वनुमानत्वं इच्छन्तस्तार्किका जगुः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे चाप्यसौ समः ।। [मा. मे. ११५]

न स्यादनुमानप्रमाणमेव[1]। अर्थापत्तावेव तस्यान्तर्भूतत्वात्। अतः नास्ति पृथगर्थापत्तेः प्रमाण्यम्। तस्याः अनुमान एवान्तर्भूतत्वात्। प्रयोगस्तु - 'देवदत्तो बहिरस्ति, जीवित्वे सति गृहे असत्वात्। यो जीवन् यत्र नास्ति स ततो अन्यत्रास्ति यथा अहम्' इति। अतो वञ्चनामात्रमेतत् पञ्चमप्रमाणमिति चेत्—

मैवम्। प्रमाणयोः विरोधस्यानपलपनीयत्वात्[2]। सति प्रमाणयोर्विरोधे एकस्याप्रमाणत्वं स्यादिति यदुक्तं तन्नास्ति प्रकृते। 'इदं रजतम्' 'नेदं रजतम्' इत्यसाधारणप्रमाणविषयं हि तत्। साधारणस्य प्रमाणस्य असाधारणेन प्रमाणेन बाधे च अप्रामाण्यं नोपपद्यते। अतः सम्भवत्येव प्रमाणयोः द्वयोर्विरोधः[3]।

यच्चोक्तं प्रसिद्धानुमानानां अर्थापत्तित्वं स्यादिति, तदपि न सङ्गच्छते। तत्र हि वक्तव्यम् पर्वतस्य क्वचिदग्निप्रापकं साधारणप्रमाणं किमिति? नच वाच्यम् व्याप्तिग्राहकप्रमणेन पर्वतेऽप्यग्निः प्राप्त इति। केन वेदं प्रभाकरपृष्ठमनुधावता भणितम्? अदृष्टपर्वत एव कथं नु तत्र अग्निमत्तामवगच्छेत्[4]?

---

1. ईदृशस्य विरोधस्य प्रसिद्धानुमितिष्वपि।
संभवादनुमाजालमर्थापत्तिप्रंसिष्यते ॥ [तत्रैव १२०]

2. तदिदं शिक्ष्यतेऽस्माभिः विरोधोऽस्त्येव मानयोः।
न प्रसिद्धानुमाभङ्गो बहिर्भावि च नानुमा ॥ [मा. मे. १२१]

3. साधारणप्रमाणस्य त्वसाधारणमानतः।
बाधेऽपि सावकाशत्वादप्रामाण्यं न जायते ॥ [तत्रैव १२२]

4. अदृष्टपर्वतः पूर्वं कथं तस्याग्निशालिताम्।
अवगच्छेदिति ध्वस्तं अनुमानेऽपि तन्मतम् ॥ [तत्रैव १२४]

यद्यपि नाम अनुमानं प्रयुक्तं बहिर्भावसिद्धौ तदपि स्वरूपासिद्धमिति न कापि नः क्षतिः। निर्विशेषस्य केवलजीवनस्य दुर्निरूपत्वात्। बहिर्भावनिश्चयापूर्वजीवनगृहाभावौ समुच्चित्य ज्ञातुं न शक्येते। ततः जीवनविशिष्टगृहाभावरूपस्य हेतोः अज्ञानात् हेतुरयं स्वरूपाज्ञानासिद्ध इति न साध्यसाधको भवितुमर्हति। अतः अर्थापत्तिः पृथक् प्रमाणमिति सिद्धमिति प्रत्यपादि बृहट्टीकायाम्[1]।

अपिच केवलव्यतिरेक्यनुमाने अर्थापत्तेरन्तर्भाव इति तावन्नोपपद्यते। तस्य अस्मन्मते अनभ्युपगमपराहृतत्वात्। तथा च अनुमानादस्याः अर्थापत्तेः महान् भेदः दरीदृश्यते[2]। यथा - उपपादकस्य गम्यत्वमनुमाने अङ्गीक्रियते। धूमादेश्च अनुपपन्नस्य गमकत्वम्। अर्थापत्तौ तु तद्विरुद्धतया गम्यत्वमनुपपन्नस्य गमकत्वं चोपपादकस्येति महान् भेदः। अनुमितिश्च व्याप्तिपक्षधर्मताजन्या। दिवा भोजनत्वाभाव - पीनत्वयोः सामानाधिकरण्यरूपानुपपत्तिज्ञानाच्च अर्थापत्तिरुपजायत इति स्पष्टमेव दृश्यते सामग्रीभेदः।

५·३·२ प्राभाकरसिद्धान्तः — अथ अर्थापत्तिरूपं प्रमाणमिदं नोक्तपूर्वप्रमाणेष्वन्तर्भवति। तथा हि - न प्रत्यक्षे, नोपमाने,

---

1. तस्माद्यो विद्यमानस्य गृहाभावोऽवगम्यते।
   स हेतुः स बहिर्भावं नागृहीत्वा च गृह्यते॥ [तत्रैव १२६]
2. दृश्यतां श्रीकेदारनाथ त्रिपाठी, "न्यायमीमांसयोः प्रामाण्यवादः," स. सुषमा २२ (३·४) पु. ३२६-३६

आगमे च तस्याः अन्तर्भावः। सामग्रीभेदात्। किन्तु अनुमानेऽन्तर्भवितुमर्हति। कुत इति चेत्—

गृहाभाव एव अन्यथानुपपद्यमानः बहिर्भावस्य गमकः इति खलु अर्थापत्तिः भवद्भिरुक्ता। तत्र का वा अनुपपत्तिः गृहाभावस्य? बहिस्सत्वे असति स्वस्याभाव इति खलूच्यते। अर्थात् यत्र साध्याभावः तत्र हेत्वभावः इति व्यतिरेकिसमानयोगक्षेमोऽयमिति केवलव्यतिरेकिणि अन्तर्भावात् अर्थापत्तिरियं अनुमानेऽन्तर्भवति। अतः नेदं पृथक् प्रमाणं भवितुमर्हतीति चेत्—

तदयुक्तम्। अत्रापि सामाग्र्याः भिन्नत्वात्। अनुमितिस्थले हि 'अनुमिनोमि' इत्यनुव्यवसायः। यदि अर्थापत्तेः अनुमानेऽन्तर्भावस्तर्हि अत्रापि स एवानुव्यवसायः स्यात्। किन्तु कल्पयामि इति अत्रानुव्यवसायः अनुभवसिद्ध इति अनुमानात् भिद्यत एवेयम्।

अन्यच्चानुमानजनकं लिङ्गं सर्वदा निश्चितमेव भवति। न तु कदापि सन्दिग्धम्। अर्थापत्तेस्तु संदिग्धमिति न कथञ्चिदपि अर्थापत्तेः अनुमानेऽन्तर्भावः वक्तुमुचित इति सा पृथक् प्रमाणम्। तथा हि - निश्चितो हि धूमः वह्नेर्गमकः। तस्यानुपपत्त्यापादकमर्थान्तरं न किञ्चिदस्ति। अत्र तु गृहाभावः विद्यमानतायाः अनुपपत्तिं विधत्ते। अतः गृहाभावे गृहीते बहिर्देशसंबन्धाभावे विद्यमानतायाः एव अनुपपत्तिः

संभवतीति बहिर्देशसम्बन्धः कल्प्यते । एवं चार्थापत्तिः अनुमानात्सर्वथा भिन्नेति सिद्धं तस्याः पृथक् प्रमाणत्वम् (प्र. प. २७६-७७) ।

## ५-४ अर्थापत्तेः अनुमानगतार्थत्वम्

५-४-१ न्यायसिद्धान्तः— अर्थापत्ति मीमांसकाः प्रमाणमित्यभ्युपगच्छन्ति । नैयायिकास्तु तन्न सहन्ते[1] । का नाम अर्थापत्तिः ? उच्यते । दृष्टः श्रुतो वा अर्थ अन्यथा नोपपद्यत इति अर्थान्तरस्य कल्पना अर्थापत्तिः । सा च द्विधा दृष्टार्थापत्तिः-श्रुतार्थापत्तिभेदेन । तत्र दृष्टार्थापत्तिर्यथा - जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावदर्शनम् । तद्विना जीवित्वमेव नोपपद्यत इति । नेदं पृथक् प्रमाणं भवितुमर्हति । दर्शनार्थादिदं विरोध्यनुमाने एवान्तर्भावमर्हति[2] । तथा चायं प्रयोगः – देवदत्तः बहिस्सत्तावान्, जीवित्वे सति गृहे असत्वात्, अहमिव ।

श्रुतार्थापत्तिः द्वितीया - श्रुतेन 'पीनो देवदत्तः दिवा न भुङ्क्ते' इति न वाक्येन हेतुभूतेन अनुमितात् पीनत्वात् तद्धेतुभूतस्य रात्रिभोजनस्य अनुमानम् । अस्य वाक्यस्य श्रवणात् अनुमितानुमानं भवतीति[3] । अयमनुमानप्रयोगः - देवदत्तः

---

1. अर्थापत्तिरपि व्यतिरेक्यनुमानमेव, न तु मानान्तरम्, प्रमाणाभावात् [म. क. ४४].
2. दर्शनार्थात् अर्थापत्तिर्विरोध्येव [प्र. भा. ११०]
3. See DEVASTHALI, G. V., "Śabara and the Nyāya-Vaiśeṣika Darśanās", *JOR* 18, 1948-49, 16-24.

रात्रौ भुंक्ते पीनत्वे सति दिवा अभुञ्जानत्वात् । अतः द्वि-विधाया अप्यर्थापत्तेः अनुमान एवान्तर्भावः[1] ।

इयमर्थापत्तिः भङ्ग्यन्तरेण वात्स्यायनेन प्रदिपादिता[2] । अर्थात् या नूतना आपत्तिः सा अर्थापत्तिः । आपत्तिः प्राप्तिः अथवा प्रसङ्गः । कस्मिंश्चिदर्थे अभिधीयमानेऽन्योर्थः यः प्राप्यते सा अर्थापत्तिः । यथा - मेघाभावे न भवति वृष्टिरिति । अतस्सत्सु मेघेषु भवतीति प्राप्यत इति आपत्तिरियम्[3] ।

नैतत् पृथक् प्रमाणं भवितुमर्हति उपपादककल्पकं कदापि व्याप्तिज्ञानं विना नोपपद्यत इति वृष्टित्वमेघजन्यत्वयोः व्याप्यव्यापकभावः अवश्यमङ्गीकार्यः । एवञ्चार्थापत्तेः अनुमानेऽन्तर्भाव इति[4] ।

उदयनाचार्येण न्यायकुसुमाञ्जलौ अर्थापत्तिविषये सुमहान् विचारः अकारि । तथा हि - जीवन् खलु चैत्रः गृहे नास्तीत्यनुपपद्यमानं बहिर्भावे असति तमापदयतीति खलूदाहरन्ति । तत्रायं प्रश्नः । जीवतः गृहाभावस्य किं वा अनुपपन्नम्?

1. श्रवणादनुमितानुमानम् [प्र. भ. ११०]

2. अर्थात् आपत्तिः अर्थापत्तिः । आपत्तिः प्राप्तिः प्रसङ्गः । यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः [न्या. भा. १६९]

3. दृश्यतां श्रीरघुनाथाचार्यः, एस्. बि., "वात्स्यायनः", सं २, सं १४२-१५१, सुधर्मा, मैसूर, १९७२

4. शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसंभवाभावार्थान्तरभावाच्चाप्रतिषेधः [न्या. द. २-२-२]

अनर्थसम्प्रत्ययेन अनभिहितस्यार्थस्य प्रत्यनीकभावात् ग्रहणं अर्थापत्तिः अनुमानमेव [न्या. भा. १७०]

अव्याप्यस्याव्यापकस्य नास्ति सहभाव इति का नो हानिः? अथ कथं नाम बहिस्सत्वास्योपपादकं भवितुमर्हति? यदि चैत्र-निष्ठः गृहाभावः बहिर्भावेन सह अवश्यं भवति सः स्वभाव-सिद्ध इत्युच्यते चेत् - यत्र यत्र जीवित्वविशिष्टगृहासत्वं तत्र तत्र बहिस्सत्वमिति यद्युच्यते तर्हि वचनमिदं अन्वयव्याप्ति-समानयोगक्षेमम् । अतः इदमनुमान एवान्तर्भवति[1] ।

यदि व्याप्तिपक्षधर्मतासद्भावेऽपि अनुपपद्यमानेन गृहासत्वेन बहिस्सत्वस्य कल्पनं तर्हि एवमपि वक्तुं शक्येत । वह्निमन्तरा अनुपपद्यमानः धूमः वह्निं कल्पयतीति अनुमानप्रमाणस्यैवो-च्छेदः संभवति । अतः अर्थापत्तिः अनुमानेऽन्तर्भवतीति[2] ।

मणिकारेणापि केवलव्यतिरेक्यनुमान एवार्थापत्तेरन्त-र्भाव उक्तः[3] । तथा हि - उपपादकाभावविशिष्टे उपपाद्या-भावनियमः अनुपपत्तिरेव । न तु अभावः केवलम् । एवं व्यति-रेकव्याप्तिमतः उपपाद्यात् अर्थात् व्यतिरेक्यनुमानविधयैव साध्यसिद्धिः सुकरेति किं प्रयोजनमर्थापत्त्या[4]? तथा चायं प्रयोगः—'देवदत्तो बहिर्वर्तते, जीवित्वे सति गृहासत्वात्, यन्नैवं तन्नैवम् । यथा - मृतः, गृहस्थितो वा" (त. चि. अ. १४५१) ।

---

1. अनियम्यस्य नायुक्तिः न नियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धेनाप्यसौ समः ।। [न्या. कु. ३-१९]
2. धूमोऽपि वा अनुपपद्यमानतयैव वह्निं गमयेत् [तत्रैव. ३८२]
3. व्यतिरेक्यनुमानसिद्धौ अर्थापत्तिर्न मानान्तरम्, तेनैव तदर्थसिद्धेः [त. चि. अ. १४३५]
4. See DIXIT, Srinivas, "The Redundance of the Vyatireki. Vyāpti of the Nyāya system" *P.Q.* 23, 1950, 13-16.

एवमेव श्रुतार्थापत्तिरपि न पृथक् प्रमाणम् । 'देवदत्तः रात्रौ भुङ्क्ते, दिवा अभोजित्वे सति पीनत्वात्' इत्यनुमाने अन्तर्भूतत्वात् (त. चि. अ. १४५९) । विश्वनाथोऽपि मणिकारनिरूपितं पन्थानमनुरुध्यार्थापत्तेः द्विविधायाः अनुमानगतार्थतां न्यरूरुपत्[1] ।

अतः अत्र विषये न्यायपक्षस्यैव साधीयस्त्वं पूर्वोपदर्शितहेतुभिः उत्पश्यद्भिः अस्माभिरपि नार्थापत्तेः पृथक् प्रमाणता अभ्युपगम्यते । किन्तु तस्याः अनुमानान्तर्भाव एव समीचीनः पन्थाः इति चिन्त्यते[2] ॥

1. अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा मतः ॥ [कारि. १४४]
यत्र जीवित्वस्य बहिस्सत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधात् बहिस्सत्त्वमनुमितौ भासते । एवं पीनो देवदत्तः दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमात् भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति [मुक्ता. ८६]

2. See KOTHIA, D.L., "भारतीय दर्शनों में प्रमाण भेद की महत्वपूर्ण चर्चा" *Anekānta* XXII (1) pp. 11-13 1969.

| सिद्धान्तभेदप्रदर्शिनी - अर्थापत्त्यधिकारे | | |
|---|---|---|
| न्यायसिद्धान्ते | भाट्टसिद्धान्ते | प्राभाकरसिद्धान्ते |
| १ अर्थापत्तिः न पृथक् प्रमाणम् अनुमाने अन्तर्भूतम् | अर्थापत्तिः पृथक् प्रमाणम् | तथैव |
| २ ........... | दृष्टा, श्रुतेति द्विधा भिन्ना | केवलं दृष्टैव, नास्ति श्रुता |

# षष्ठाध्यायः

## ६ अनुपलब्ध्यधिकारः

### ६-१ अनुपलब्धिविचारः

६-१-१ भाट्टसिद्धान्तः - अभावलक्षणमेवमभाषि भाष्यकारेण शबरस्वामिना । यथा - "अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्य" (बृहती. ११८) इति[1] । भाट्टमतानुरोधं षष्ठं प्रमाणमभावः । अस्यैवानुपलब्धिरिति व्यवहारः । अनुपलब्धिर्नाम उपलब्धेरभावः । प्रत्यक्षानुमानादिप्रमाणपञ्चकप्रवृत्तिप्रतियोगिकः सः अभाव भवति । तथा च प्रवृत्तियोग्यानां प्रत्यक्षादीनां पञ्चानां प्रमाणानां यत्र वा न प्रवृत्तिः सा योग्यानुपलब्धिरित्युच्यते[2] । सा च घटाद्यभावविषयिणी षष्ठं प्रमाणमिति भाट्टसिद्धान्तः[3] ।

---

1. Vide PMS. P. 144 : When the first five means of cognition do not function towards bringing about the cognition of the existence of a certain object, then those comes to function that (sixth) means of cognition which is known as 'Abhâva' 'Non-Apprehension', 'Negation'. It is through this means of cognition that the non-existence of things becomes cognised.

2. अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् ।
अभावाख्यं प्रमाणं स्यात् अभावस्यावबोधकम् ।। [मा. मे. १३२]

3. प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ।। [श्लो. वा. ४७३]

नच कथं नाम प्रमाणाभावः प्रमाणलक्षणं भवितुमर्हति । स्ववचनव्याघातादिति वाच्यम् । प्रमाणाभावलक्षणगतस्य प्रमाण-शब्दस्य सत्पदार्थोपलम्भकप्रत्यक्षादिप्रमाणपञ्चकाभिप्रायकत्वात् । तदभावः षष्ठस्याभावाख्यप्रमाणस्य लक्षणमिति न काचिदनुप-पत्तिः । किं नामास्य प्रमेयम्? उक्तं हि लक्षण एव नास्ती-त्यर्थस्य इति । लोके हि वस्तु द्विविधम् । सद्रूपमसद्रूपं चेति । सद्रूपेण वर्तमानस्य घटपटादेः प्रत्यक्षादिभिः सत्ता प्रतीयते । यच्चासद्रूपेण वर्तते तत्र सद्रूपबोधकानां प्रत्यक्षादीनां सद्रूप-बोधने सत्यपि योग्यत्वे यः अनुत्पादः दृश्यादर्शनयोग्यानुप-लम्भादिपर्यायः स एव प्रमाणाभावपदेन अभाषि शबरस्वामिना । तेनैव अभावाख्यप्रमाणेन इन्द्रियशब्दादिस्थानीयेन नास्तीति प्रतीतिरुपजायते । यथा - भूतले घटो नास्तीति [शा. दी. ८३]

नास्तितारूपमभावाख्यं प्रमेयं चेदं प्रागभाव-प्रध्वंसाभाव-अन्योन्याभाव-अत्यन्ताभावभेदेन चतुर्धा व्यभजत् श्लोकवार्तिक-कारः[1] ।

अनुपलम्भोऽयं द्विविधः - प्रमाणाभावरूपः, स्मरणाभाव-रूपश्चेति । प्रत्यक्षप्रमाणाभावरूपादनुपलम्भात् घटपटाद्यभाव-ज्ञानमुपजायते । तथा च योग्यानुमानादयः । अनुमानप्रमाण-

---

1. क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ।
नास्तिता पयसो दध्नि प्रध्वसाभावलक्षणम् ।।
गवि योऽश्वाद्यभावस्तु सोन्योऽन्याभाव उच्यते ।
शिरसोऽवयवा निम्नाः वृद्धिकाठिन्यवर्जिताः ।।
शशे शृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते । [श्लो. वा. ४७३-७४]

गम्यानां पदार्थानामभावग्रहणे बोधकः भवति । उक्तं च मनोरथमिश्रैः । यथा - चेष्टालिङ्गकानुमानस्य रूपदर्शनबोधकस्यानुदयः दिवा रूपदर्शनाभावं अनुकूलस्य गमयतीति । एवमेव इतरप्रमाणभावरूपः अनुपलम्भः सुलभः । स्मरणाभावरूपः अनुपलम्भो यथा - अत्र मैत्रः प्रातर्नासीदिति सायङ्काले ज्ञानम् । प्रातःकालविशिष्टस्य मैत्रस्य सायङ्काले दर्शनयोग्यत्वाभावात्, सति च स्मरणयोग्यत्वे स्मरणाभाव एव तदा प्रातःकालविशिष्टमैत्राभावस्य बोधक इत्यङ्गीक्रियत इति [मा. मे. १३४]।

## ६–२ अनुपलब्धेः प्रमाणान्तरत्वविचारः —

भाट्टमतानुरोधमनुपलब्धिः पृथक् प्रमाणं भवितुमर्हति । उक्तपूर्वप्रमाणेष्वनन्तर्भावात् । तथा हि - न सा प्रत्यक्षेऽन्तर्भवति । इन्द्रियसन्निकर्षाद्यभावेऽपि तदुत्पत्तेः । यश्च प्रातः गृहेऽवस्थितः मध्याह्ने स एवं पृच्छ्यते । किं प्रातरस्मिन् गृहे कश्चित् श्यामः लोहिताक्षः दृष्टो भवतेति । स च सद्य एव योग्यस्मरणानुदयात् प्रातःकालिकेन्द्रियव्यापारमन्तरैव तस्याभावमवधारयति । अत एवं ज्ञातुं शक्यते यत् - तदिदं ज्ञानं नेन्द्रियकरणकम् [शा. दी. ८६-८७] । नच वाच्यम् अस्तु विशेषणत्वादिः सन्निकर्ष इति । प्रत्येकवृत्तेः तस्योभयनिष्ठत्वाभावेन सन्निकर्षत्वस्यैवानङ्गीकारात् [भा. चि. ४६] ।

अथ कैश्चिदुच्यते प्रत्यक्षत्वमभावस्य । तथा चायं प्रयोगः । अभावः प्रत्यक्षः, अपरोक्षप्रतीतित्वात् । घटवत् इति चेत् - न । अभावस्यापरोक्षाप्रतीतित्वाभावात्, हेतोः स्वरूपासिद्धत्वात्

[मा. मे. १३७] । अपरोक्षतया भूतलादेः, तथैव अभावोऽपीति भ्रमत्वात् । एवमेव मानमेयोदये उदयनेनोक्ताः चत्वारोऽपि हेतवः[1] अभावप्रत्यक्षगमकाः हेत्वाभासा इति निरस्ताः[2] ।

न चाप्यभावो अनुमेयः । हेतुहेतुमतोः सम्बन्धग्रहाभावात् । नापि अनुपलब्धेः उपमानादिष्वन्तर्भावः । उपमानादिहेतोः सादृश्यज्ञानादेः तत्राभावात् । अतः पृथक् प्रमाणभूतया अनुपलब्ध्यैव अभावः ग्राह्य इति सिद्धं पृथक् प्रमाणत्वमनुपलब्धेः (शा. दी. ८७) ।

भाट्टचिन्तामणिकारस्तु एवं प्रतिपादयति । यदि अधिकरणात्मकत्वमभावस्य अङ्गीक्रियते तर्हि भूतले घटाभाव इत्याधाराधेयभावस्यानुपपत्तिः स्यात् । अतः अभावस्य पृथक् प्रमाणत्वं अङ्गीकार्यमेवेति । प्रतियोगिप्रत्यक्षाभावः करणम् । अनुमितिः अवान्तरव्यापारः । अभावज्ञानं फलम् । अर्थापत्तौ च

---

1. प्रतिपत्तेरपारोक्ष्यात् इन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ।। [न्या. कु. ३-२०]

2. अस्ति चेदुपलभ्येतेत्यस्य कोऽर्थो विचार्यताम् ।
घटावन्योऽत्र सर्वोऽपि ज्ञानहेतुरभूदिति ।।
संस्कारो हि स्मृतौ हेतुः स चाज्ञातोऽवबोधकः ।
अज्ञातकरणाप्येवं स्मृतिर्नाध्यक्षतां गता ।।
न खल्विन्द्रियदोषः स्यात् अभावभ्रमकारणम् ।
योग्यता भ्रम एवात्र तत्कारणमितीरितम् ।।
अपि चेन्द्रियसम्बन्धयोग्यतैव हि वस्तुनः ।
प्रत्यक्षत्वं उपाधिः स्यात् व्याप्त्यसिद्धास्ततोऽखिलाः ।। [मा. मे. १३८-४१]

उपपाद्यज्ञानं करणम् । अनुपपत्तिज्ञानं अवान्तरव्यापारः । उपपादकज्ञाने फलमिति अर्थापत्त्यनुपलब्ध्योरस्ति सुमहान् भेद इति भाट्टमते षट् प्रमाणानीति (भा. चि. ४६-४७) । एवमुक्त्वा पुनः यथार्थतः अर्थापत्त्यनुपलब्ध्योः परस्परभेदं अनुमानप्रमाणात् तयोः भेदं च नावगच्छाम इति सहृदयनिहितं तात्पर्यमन्ते चाविष्करोति गागाभट्टः[1] ।

इदमत्र साधकानुमानं - अभावः स्वानुरूपेण प्रमाणेन गृह्यते । प्रमेयत्वात् भाववत् इति । उक्तं चैवमेव वार्तिककारेण कुमारिलभट्टेन[2] । अतः अस्ति षष्ठं प्रमाणं अनुपलब्धिरिति । अधिकारेऽस्मिन् अभावपदं प्रमाणपरतया अनुपलब्ध्या सह प्रायोजि । प्रमेयपरतया च प्रयुक्तमिति वेदितव्यम् ॥

## ६–३ प्राभाकरमतेन अभावविमर्शः

प्राभाकरमते पदार्थेषु नाभावः परिगणितः । अभावप्रामाण्यं ते नाभ्युपगच्छन्ति । अभावस्य अधिकरणात्मकत्वं तैरंगयकारि । अतः भावातिरिक्तस्य अभावरूपस्य प्रमेयस्यैवाभावात् तन्निरूपणार्थं अनुपलब्धेः प्रमाणान्तरत्वमपि नाङ्गीकरणीयमिति तेषामाशयः [प्र. प. २८२] ।

---

1. वस्तुतस्तु अर्थापत्त्यनुपलब्ध्योः अन्योन्यभेदं अनुमानाच्च भेदं नाकलयामः [भा. चि. ४७.]

2. भावात्मके यथा मेये नाभावस्य प्रमाणता ।
तथाभावप्रमेयेऽपि न भावस्य प्रमाणता ॥ [श्लो. वा. ८७४]

ननु सर्वजनीनोऽयमनुभवः यत् - लोके सर्वं प्रमाणं किमपि प्रमेयं विना न भवतीति । तर्हि अभावाख्यस्य प्रमाणस्य किं वा प्रमेयमस्तीति? उच्यते । अस्ति प्रमेयमभावस्यापि । तत्पुनः न प्रमाणान्तरेण बोध्यते । प्रमाणस्य हि एष स्वभावः यत् स्वमहिम्नैव स्वप्रमेयस्योपस्थापनं नाम । अपि नाम प्रत्यक्षस्य प्रमेयं प्रमाणान्तरव्यवस्थाप्यम् ? स्वप्रतीतिबलसिद्धमेव । अतः अभावरूपं प्रमाणमपि स्वमहिम्नैव प्रमेयमुपस्थापयितुं क्षमम् । तथा हि अस्ति काचन प्रतीतिः इह भूतले घटो नास्तीति । सा च न भूतलमात्रविषया । घटे सत्यपि तथा आपत्तिप्रसङ्गात् । यदि केवलभूतलविषयेत्युच्यते चेत् - किमत्र कैवल्यम् ? यदि भूतलस्वरूपमुच्यते - सत्यपि घटे तस्यानपायात् नास्ति घट इति बुध्युत्पादः । इन्द्रियव्यापारं विना प्रतीयमानत्वात् नेदं प्रत्यक्षप्रमेयमिति वक्तुं शक्यते । अतः इह भूतले घटो नास्तीति प्रतीतिबलात् विलक्षणप्रमेयस्य अङ्गीकार्यतया प्रमाणमपि अभावाख्यं विलक्षणमङ्गीकार्यमिति चेत् -

उच्यते [प्र. प. २८६-२९२] । अधिकरणस्वरूपातिरिक्तः अभावः अस्मन्मते नाभ्युपगम्यते । द्विधा हि भावानां अवगतिः सम्पद्यते । एका भावान्तरसंसृष्टविषया । तदेकविषया च द्वितीया । या च तदेकविषया बुद्धिः साऽपि पुनर्द्विविधा । प्रतियोगिनि दृश्ये अदृश्ये च । एवञ्च दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः सा तस्य प्रतियोगिनः अभाव इत्युच्यते । यथा - 'भूतले घटाभाव' इति ।

एवञ्च भूतले घटो नास्तीत्युक्ते घटे दृश्ये भूतलमात्रस्यैव बोध इति फलति। प्रतियोगिनि दृश्यत्वं नाम अन्यत्र प्रमितस्य अन्यत्र प्रसक्तिः। सैव दृश्यता प्राभाकरैः ज्ञानविशेषतया अङ्गीकृतेति धर्मिकल्पनापेक्षया धर्मकल्पना लाघवमेव। अतः अधिकरणस्वरूप एवाभावः अङ्गीक्रियते गुरुमतानुयायिभिः न तद्विलक्षण इति[1]।

## ६-४-अनुपलब्धेः प्रत्यक्षादिगतार्थत्वम्

भाट्टैस्तावत् अनुपलब्धेः पृथक् प्रमाणत्वं महता आग्रहेण अभ्युपगम्यते। ते च कथयन्ति अभावाख्यः कश्चन पदार्थः अस्तीति अवश्यमभ्युपगन्तव्यः। स च न पूर्वोक्तप्रमाणगम्यः, केवलमनुपलब्धिगम्य एवेति। प्राभाकरास्तु अभावस्य पदार्थत्वमेव नाङ्गीकुर्वन्ति। नैयायिकाः पुनः अभावः पदार्थ एव, सत्यम्। किन्तु तद्ग्रहणार्थं प्रमाणान्तरमनुपलब्धिरूपमनावश्यकमिति मन्यन्ते।

तथाहि - प्रत्यक्षादिभिः गृह्यमाणतया अभावाख्यं प्रमेयं आत्मपरिच्छित्तये न प्रमाणान्तरमपेक्षत इति तेषामभिसन्धिः। तथा हि - इह घटो नास्तीति एकमेव ज्ञानम्। "इह कुण्डे दधीति" ज्ञानवत्। नच तत्र भूप्रदेशमात्र एव नाग्रनं ज्ञानम्, इतरत्र तु प्रमाणान्तरजन्यमिति वाच्यम्। अव्यवधानेनैव भूप्रदेशवत् घटनास्तिताया अपि विना विच्छेदं अनुभूयमानत्वात्।

---

1. अभावाख्यप्रमाणं ये षष्ठमाहुर्मनीषिणः।
तेषां प्राभाकरैरेवं प्रत्यादेशोऽयमुच्यते ॥ [प्र. प. १०६-१११]

अत्र अपरिम्लाननयनव्यापार एव पुरुषः घटाभावं पश्यतीति अभावज्ञानं चाक्षुषमेव, तद्भावभावित्वविधानात् ।

नच तर्हि सम्बद्धस्यैव हि चक्षुषा ग्रहणमिति, असम्बद्धस्यापि चाक्षुषत्वे भवतु नाम विभीषणादेरपि चाक्षुषत्वप्रसङ्ग इति वाच्यम् । भावपदार्थेषु खल्वयं नियमः यत्-सम्बद्धस्यैव चक्षुषा ग्रहणम्, न त्वसम्बद्धस्येति । अभावस्तु असम्बद्धोऽपि चक्षुषा ग्राह्य एव । सन्निकर्षेषु षट्प्रकाराभिवर्णनमपि भावपदार्थाभिप्रायेणैव । सम्बद्धं यद्यद् वस्तु गृह्यते तदवश्यं पूर्वोक्तसन्निकर्षान्यतमेनैव ग्राह्यमिति । एवमेवेन्द्रियाणां प्राप्यकारित्वमपि वस्त्वभिप्रायकतयैवोक्तम् । अभावस्तु न वस्तु ।

अतः तेन सन्निकर्षमन्तरापि चक्षुस्तदवगमयति । नच तर्हि विना सम्बन्धमेवाभावः गृह्यते चेत् देशान्तरस्थितसर्वाभावग्रहणमपि प्रसज्येतेति वाच्यम् । आश्रयग्रहणसापेक्षा हि नाम अभावप्रतीतिः । स चाश्रयः सन्निहित एव प्रत्यक्षयोग्यः भवति । अथवा संयुक्तविशेषणभावाभिधसन्निकर्षद्वारा चक्षुरेव अभावं गृह्णातीत्यपि वक्तुं शक्यते । अयमेव विशेषणविशेष्यभावाख्यः सन्निकर्षः कथ्यते । एवञ्च प्रत्यक्षगम्य एवाभावः नानुपलब्धिगम्य इति नैयायिकानां पन्थाः (न्या. म. ५१-५३) ।

वैशेषिकास्तु नैयायिकेभ्यः अत्र भिद्यन्ते । अभावस्यानुमान एवान्तर्भाव इति तेषामाशयः । प्रशस्तपादः स्वपदार्थधर्मसंग्रहे अभावस्य अनुमान एवान्तर्भाव इति सुष्टु प्रत्यपीपदत्[1] ।

---

1. अभावोऽप्यनुमानमेव । यथोत्पन्नकार्यं कारणसद्भावे लिङ्गं, एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम् [प्र. भा. १११]

उपस्कारकारः शङ्करमिश्रस्तु अभावस्य क्वचित् प्रत्यक्षे क्वचिच्चानुमाने अन्तर्भावमभिदधे[1]। न चेन्द्रियमधिकरणग्रहण एवोपक्षीणमिति वाच्यम्। अभाव-ग्रहणावधि तद्व्यापारस्य वर्तमानत्वात् अभावस्यानुमानेऽन्तर्भावता नैयायिकानामपि न विरुद्धा। असन्निहितदेशवर्तिनः अभावस्य अनुमेयत्वात्। यथा - सन्तमसे बहुलमभिवर्षति देवे मेघवायुसंयोगाभावः अनुमीयते। तथैवार्थापत्तौ गृहभावेन चैत्रस्य बहिरभावकल्पनं इत्युदाहृतम्[2]।

ननु अनुरूपेण प्रमाणेन प्रमेयं प्रतीयत इति लोकानुभवः। अतः अभावरूपप्रमेयस्य तदनुरूपेण प्रमाणेन ग्रहणमेव वक्तव्यमिति चेत् - न। अप्रयोजकत्वात्[3]। इदमत्र तत्वं यत् - भाट्टैः अभावः पदार्थः सः अनुपलब्धिप्रमाणगम्यः इत्यभ्युपगतम्। प्राभाकरैस्तावत् अभावस्य पदार्थत्वमेव नाङ्गीकृतम्। अतः अनुपलब्धिगम्यत्वमपि तस्य मृग्यमेव तेषां मते। नैयायिकास्तावत् अभावस्य पदार्थतामभ्युपगम्य तस्य प्रत्यक्षादिगम्यत्व-

---

1. तत् क्वचित्प्रत्यक्षे क्वचिच्चानुमनेऽन्तर्भूतं, चक्षुरादिनैवाभावग्रहात्
[वै. उप. २२८]

2. आगमादप्यभावस्य क्वचिद् भवति निश्चयः।
चौरादिनास्तितां ज्ञानमध्वगानामिवाप्ततः॥ [न्या. म. ६४]

3. अभावः पटलादीनां प्रत्यक्षं प्रतिपद्यते।
विपक्षे वृत्यभावश्च लिङ्गस्य सहकारिताम्॥
पुरुषोक्तिषु दोषाणामभावश्चोपयुज्यते।
सामग्र्यन्तर्गतात् तस्मादभावादपि भावधीः॥
अभावश्च क्वचिल्लिङ्ग मिष्यते भावसंविदः।
वृष्ट्यभावोऽपि वाय्वभ्रसंयोगस्यानुमापकः॥
तस्माद्युक्तमभावस्य नाभावेनैव वेदनम्।
न नाम यादृशो यक्षः बलिरप्यस्य तादृशः॥ [तत्रैव ५४]

मुपगच्छन्ति । अत एव ते अनुपलब्धेः प्रमाणत्वं न प्रतिपादयन्ति । इयमेवानुपलब्धिः अनुपलम्भः इत्यपि व्यह्रियते दार्शनिकैः ।

भाट्टैः अभावस्य प्रत्येकपदार्थताभ्युपगमे नैयायिकमतमेव अनुसृतम् । किन्तु न्यायविरुद्धतया अनुपलब्धिं अभावग्राहिणीं ते अङ्गीकुर्वन्ति । प्राभाकरास्तु अभावमेव नाङ्गीकुर्वन्ति इति नैयायिकानां तेषां चात्र भूयान् भेदः[1] । अयं चाभावः गौतम-वात्स्यायन-उद्योतकरादिभिः सम्यक् निरूपितः । जयन्तभट्टेन सुस्पष्टं प्रत्यपादि तत्स्वरूपम् । अत्रैवं विचारे क्रियमाणे अस्त्यभावः, किन्तु स क्वचित् प्रत्यक्षगम्यः, क्वचिदनुमानग्राह्य इति निरूपयतां नैयायिकानां पक्ष एव साधुरिति सुव्यक्तम् ।

६-५ सम्भवादिप्रमाणान्तरविचारः

अथ न केवलं प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, अर्थापत्त्यनुपलब्धिसंभवैतिह्यचेष्टालोकप्रसिद्धिप्रतिभाह्रस्वदीर्घादीनां प्रमाणानां सत्वात्[2] । तथा हि - अर्थापत्त्यनुपलब्धी पुनः पञ्चमषष्ठाध्याययोः उपन्यस्ते । शिष्टानि प्रमाणान्यधिकृत्यात्र किञ्चित् प्रस्तूयते ।

पौराणिकैस्तावत् सम्भवाख्यप्रमाणं उक्तपूर्वविलक्षणमङ्गीक्रियते । तेषां मतमिदम्-शतं सहस्रे संभवतीति संभवाख्य-

---

1. See JHA; Krishṇamādhava, "Abhāvavicārah" *PAIOC* 14. 4, 1948, 4-6.

2. न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् [न्या. द. २-२-१]

प्रमाणात् सहस्रेण शतज्ञानमिति[1] । नैतदुपपद्यते । अस्यानुमान एवान्तर्भावात् । तथा चायं प्रयोगः - इदं शतसंख्यावत् , सहस्र-संख्यावत्वात्, शतसंख्याव्याप्यपञ्चाशत्संख्यायुक्तफलसमूहवत् इति । अतः नेदमनुमानाद्भिद्यते । तत्रैवान्तर्भवति[2] ।

केचिदैतिह्यं प्रमाणान्तरमित्यभिप्रयन्ति । 'इति ह' इति निपातसमूहः उपदेशपरम्परायां प्रयुज्यते । अत्र स्वार्थे यप्रत्यये[3] ऐतिह्यमिति रूपं सिध्यति। ऐतिह्यं नाम अविदितकर्तृकं वाक्य-मित्यर्थः । अत एवोच्यते 'इति होचुर्वृद्धाः' इत्यैतिह्यम् । यथा 'इह वटे यक्षः तिष्ठति' इति । अस्य च शब्देऽन्तर्भावः[4] ।

केचित् कराकुञ्जनादिरूपस्याभिनयस्य आह्वानादि-प्रतीतिजनकतया चेष्टां प्रमाणान्तरत्वेन परिगणयन्ति । व्या-प्त्या परिगृहीतः अभिनयः येन स प्रसिद्धाभिनयः गृहीतसङ्केत विशेषः । तस्य चेष्टया शारीरकव्यापारेण प्रतीतेरनुभूयमानतया

---

1. सम्भवोऽप्यविनाभावित्वात् अनुमानमेव [प्र. भा. १११]
सम्भवो नाम अविनाभाविनोऽर्थस्य सत्ताग्रहणात् अन्यस्य सत्ताग्रहणम् ।
यथा - द्रोणस्य सत्ताग्रहणात् आढकस्य सत्ताग्रहणम् । आढकस्य ग्रहणात् प्रस्थस्येति [न्या. भा. १६९]

2. शब्द ऐतिह्यानर्थान्तरभावात् अनुमाने अर्थापत्तिसम्भवाभावानर्थान्तरभा-वाच्चाप्रतिषेधः [न्या. द. २-२-२]
इह भवति शतादौ सम्भवाद्यासहस्रात्
मतिरवियुतभावात् साऽनुमानादभिन्ना । [श्लो. वा. ४९२]

3. अनन्तावसथेतिहभेषजात् यः

4. तथैवेतिह्यमप्यवितथमाप्तोपदेश एवेति [प्र. भा. ११२]
जगति न बहु तथ्यं नित्यमैतिह्यमर्थं
भवति तु यदि सत्यं नागमात् भिद्यते तत् । [श्लो. वा. ४९२]

सा च अनुमानेऽन्तर्भवति । अन्ये चास्याः प्रामाण्यमेव नाभ्युपगच्छन्ति[1] । विश्वनाथस्तु चेष्टायाः शब्देऽप्यन्तर्भावमिच्छति । सङ्केतग्राहकशब्दस्मारकतया लिप्यादिसमानयोगक्षेमत्वात्[2] ।

एवं लोकप्रसिद्धमित्युच्यमानं लोकप्रसिद्धिरिति पृथक् प्रमाणमिति केचिदभिप्रयन्ति । किन्तु प्रत्यक्षादिष्वेव साऽप्यन्तर्भवतीति न तस्याः पृथक् प्रमाणत्वं वक्तुं शक्यम्[3] । अस्याः पुनः लोक इत्यपि व्यवहारः ।

केचित्तु प्रातिभं ज्ञानमपि प्रमाणमिति वदन्ति । स च विद्यातपस्समाधिजः प्रकृष्टधर्मः । कणादेन आर्षं ज्ञानं न पृथक् लक्षितम् । किन्तु योगिप्रत्यक्ष एवान्तर्भावितम् । तच्च प्रातिभं ज्ञानमार्षमित्युच्यते । तच्च धर्मादिवत् अतीतादिविषयेषु प्रमाणमिति । यथा - "श्वस्ते भ्राता आगमिष्यति" "सोमयाजी पुत्रोऽस्य भविष्यति" इत्यादि । एवमेव लौकिकवाक्यान्यपि यथा कन्यका ब्रवीति - श्वो मे भ्राता आगमिष्यतीति (वै. उ. २२९) । नेदं प्रमाणमेव भवितुमर्हति । अर्थनिश्चयसामर्थ्याभावात् । इदं हि ज्ञानं न लिङ्गजन्यम् । किन्तु लिङ्गाभासजन्यम् । अतः नेदं प्रमाणं भवितुमर्हतीति[4] ।

---

1. प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव । [प्र. भ. १०९]
2. चेष्टापि न प्रमाणान्तरम्, तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वात् शब्द एवान्तर्भावात् । [मुक्ता. ८६]
3. लोकोऽपि प्रत्यक्षादिप्रमाणव्यतिरिक्तः कश्चिन्नोपलक्ष्यते । [प्र. प. २९३]
लोकप्रसिद्धिः प्रत्यक्षान्तर्गतैव । [भा. चि. ४७]
4. प्रतिभाऽपि नार्थनिश्चयसमर्थेति, न प्रमाणतां, प्रतिपत्तुमर्हतीति । [प्र. प. २९३]

अथ केचित् ह्रस्वदीर्घयोरपि प्रमाणान्तरत्वमभिमन्यन्ते। तथा हि दीर्घदर्शनात् इन्द्रियपथाधिवर्तिनि ह्रस्वज्ञानं, नेदं उक्तपूर्वप्रमाणेष्वन्तर्भवतीति पृथगिदं प्रमाणं वक्तव्यमिति ।

एतच्च नोपपद्यते । परिमाणविशेषरूपत्वात् दीर्घत्वह्रस्वत्वादीनाम् । परिमाणं च प्रत्यक्षद्रव्यवर्तीति प्रत्यक्षमेव भवितुमर्हति । अतः नेदं पृथक् प्रमाणपदवीमारोढुमर्हति । एवं बहुभिः प्रमाणाभासाः, अथवा पूर्वोक्तप्रमाणान्तर्भावार्हाणि प्रमाणानि च बहुधा प्रतिपादितानि । न तेषां तत्वमङ्गीकर्तुं शक्य इति चत्वार्येव प्रमाणानि इति नैयायिकानां पञ्च प्राभाकराणां षट् भाट्टानां इति संक्षेपः ।

| सिद्धान्तभेदप्रदर्शिनी - अनुपलब्ध्यधिकारे | | |
|---|---|---|
| न्यायसिद्धान्ते | भाट्टसिद्धान्ते | प्राभाकरसिद्धान्ते |
| १ अभावस्तु पदार्थ इत्यङ्गीक्रियते, न तस्य प्रमाणत्वम् | अभावस्य पदार्थत्वं प्रमाणत्वं च | अभाव एव नास्ति |
| २ अनुपलब्धिः प्रत्यक्षादिगम्या | अनुपलब्धिः स्वतन्त्रं प्रमाणम् | नास्त्येव |

# उपसंहार:

अथेदानीं षडध्यायात्मके विस्तरोपोद्घातविभासुरेऽस्मिन् शोधप्रबन्धे समुपस्थापितेषु विभिन्नदार्शनिकपक्ष-प्रतिपक्षरूपेषु विषयेषु निर्गलिता इमे सिद्धान्ताः यथाक्रममत्र प्रतिपाद्यन्ते—

१. ज्ञानस्वरूपनिरूपण-विभागादिविषये भाट्ट-प्राभाकर-मतापेक्षया युक्तिसहः नैयायिकानां पन्थाः । स्मृतेर्विद्यापरपर्याये यथार्थज्ञाने अन्तर्भावः वैशेषिकोक्तोऽपि नोपादेयः ।

२. ज्ञानविभागावसरे भाट्टैः सर्वांशेन, प्राभाकरैरेक-देशेन च नैयायिकानां मार्ग एवानुसृतः । प्रभाकराणां आख्याति-वादः लोकानुभवादिविरुद्धतया न परिग्राह्यः । मीमांसकापेक्षया अन्यूनानतिरिक्तं निर्दुष्टं प्रमालक्षणं नैयायिकैरभ्यधायि ।

३. अन्यथाख्यातिवादः भाट्टाभ्युपगत एव नैयायिकाना-मप्यभिमतः । तत्रापि दोष एव कारणम् नेन्द्रियसंयोगः इति प्रतिपादयतां भाट्टानां, तदभ्युपगच्छतां नव्यनैयायिकानां च सरणिरेव मनोरमा ।

४. प्रमाकरणं प्रमाणम् इति प्रमाणलक्षणं नैयायिकोक्तं अन्वकारि मीमांसकैः । प्रमास्वरूपविषये तु परस्परं भेदः । अयथार्थानुभवस्य अनपलपनीयतया, अज्ञातपदघटितप्रमा-लक्षणस्य भाट्टोक्तस्य निरस्ततया नैयायिकोक्तं प्रमालक्षणं सर्वानवद्यमित्युपादेयम् ।

५. प्रत्यक्षशब्दश्च चाक्षुषज्ञानवाची चेत् अव्ययीभाव-समासेन इतरेन्द्रियजन्यज्ञानवाची चेत् तत्पुरुषसमासेन चावसेयः। नैयायिकोक्तं प्रत्यक्षलक्षणं भाट्टैस्सर्वथा अनुस्रियते। प्राभाकरोक्तं तु नन्दीश्वरपरिष्कृतं उपादेयमत्र। मणिकारोक्तं लक्षणमपि उदयनाचार्योपज्ञमिति शोधप्रबन्धेऽस्मिन् न्यरूपि।

६. प्रत्यक्षविभागे नैयायिकमतमेव मीमांसकैरन्वसारि। प्रत्यक्षसूत्र एव विभागस्समसूचीति वाचस्पतिमिश्रपक्षः तावत् युक्तिसहः। प्राभाकरोपज्ञं त्रिपुटीप्रत्यक्षं अनुभवविरोधीति नोपादेयम्।

७. इन्द्रियविभागावसरे नैयायिकमार्ग एव मीमांसकैरनुसृतः। नैयायिकप्राभाकरविरुद्धतया भाट्टाभ्युपगतं श्रोत्रस्य दिगात्मकत्वं न युक्तिसहम्। श्रोत्रमाकाशात्मकमिति सिद्धम्।

८. नीतितत्वाविर्भाव-मानमेयोदयावन्तरा न कुत्रापि मनसः वैभवं मीमांसकग्रन्थेषु प्रतिपादितम्। नैयायिकैः प्राभाकरैः पूर्वोक्तग्रन्थावपहाय अन्यैः भाट्टैश्च तस्य अविभुत्वं अथवा अणुत्वमेव प्रत्यपादि। तदेव युक्तिसहम्। अत्रापि नैयायिक-मार्ग एव मीमांसकैरङ्गीकृतः।

९. प्रत्यक्षोत्पत्तिप्रकाराभिवर्णने भाट्टमतं, तदनुकुर्वतां नव्यनैयायिकानां च मतमेव समीचीनम्।

१०. नैयायिकोक्तः लौकिकालौकिकसन्निकर्षविभागः युक्तिसह इति उपादेयः। अन्योक्तस्तु अपरिपूर्ण इति अनु-

पादेयः । भाट्टैः समवायानभ्युपगमात् तत्स्थाने तादात्म्य-पदप्रयोगः क्रियते ।

११. अनुमाननिरूपणे भाट्टेभ्यः प्राभाकरेभ्यश्च नैयायिकानां सरणिः विशदा वरीवर्ति । अनुमितिकरणं कीदृश-मित्यत्र मीमांसकैः स्पष्टतया न किमप्यभाणि ।

१२. अनुमानस्य स्वार्थ-परार्थविभागः प्रशस्तपादोपज्ञः । नव्यैः भाट्टैः, नव्यैः प्राभाकरैश्च स एव मार्गः समादृतः ।

१३. व्याप्तिरिति पदं न्यायवार्तिककारोपज्ञम् । तेनेदं कथाप्रसङ्गेषु कदाचित् बौद्धेभ्यः परिगृहीतं स्याद्वेति विचार-णीयम् । भूयोदर्शनगम्या नैयायिकैः सुपरिष्कृतेयं व्याप्तिः नन्दीश्वरमन्तरा अन्येषां मीमांसकानामिष्टैव । प्राभाकरैः तस्याः विशेषसम्बन्धत्वं अभ्युपगतम् ।

१४. भाट्टोपन्यस्तं तर्काङ्गपञ्चकं, तर्कस्य सर्वप्रमाणानु-ग्राहकत्वं च नैयायिकैः स्वीकृतम । प्राभाकरमते साक्षात् तर्कस्य अप्रतिपादनेऽपि शङ्कानिवर्तकतया तेषां तर्कः इष्ट एव ।

१५. यद्यपि प्राभाकरैः पक्षतायाः कुत्राप्यनुमानाङ्गत्वं नाभ्युपगामि । तथापि पक्षताश्रयत्वस्यैव पक्षलक्षणत्वे या काचित् पक्षता अनुमानाङ्गतया तैरवश्यमभ्युपगन्तव्या ।

१६. परामर्श इति पारिभाषिकपदमिदं ऐदम्प्राथम्येन उपायोजि वार्तिककारेण भारद्वाजोद्योतकरेण । क्वचिदेव

मीमांसकाः परामर्शस्य अनुमितिकारणतामभ्युपगच्छन्ति । अत्र नैयायिकमतमेव युक्तिसहम् ।

१७. लिङ्गविभागस्य व्याप्तिनिबन्धनतया त्रिविधं लिङ्गमङ्गीकार्यमेवेति नैयायिकमतमुचिततरम् ।

१८. हेत्वाभासविभागे च नैयायिकानां पन्था एवोचितः । प्राभाकरैः हेत्वाभासस्थाने हेतुदूषणं, क्वचित् हेतुरिति च व्यवह्रियते । अपि च तैः बाधोऽङ्गीकृतः । नैयायिकसिद्धान्तानुरोध पञ्चधा हेत्वाभासविभाग एव साधीयान् ।

१९. मीमांसकोक्तं अप्रसिद्धेन प्रसिद्धस्य साधर्म्यरूपं उपमानं नोपादेयम् । न्यायपन्था एवात्र समीचीनः ।

२०. सति बाहिरसाम्ये सादृश्यमिति व्यवहारः । सत्यसति वा बाहिरसाम्ये आन्तरसाम्ये विद्यमाने साधर्म्यपदप्रयोगः । यत्रोभयं तत्र सामान्यमिति व्यवहारः । भाट्ट-नैयायिकभिन्नतया सादृश्यस्यातिरिक्तपदार्थत्वं यत् प्राभाकरैरभ्युपगतं तदेवोचितमिति प्रतिभाति ।

२१. शास्त्ररूपस्य वैदिकशब्दस्यैव प्रामाण्यमिति वदतां मीमांसकानामपेक्षया, ऋष्यार्यम्लेच्छसमानतया शब्दस्याप्तोपदेशरूपस्य प्रामाण्याभ्युपगन्तृ नैयायिकमतमेव साधीयः । इद नव्यमीमांसकानामपि अभिमतम् ।

२२. शाब्दकारणान्यतमायाः आसत्त्याः पर्यायतया आसत्ति-पदं च भाट्टैः प्रयुज्यते। तत्र सन्निधिपदमेव प्राभाकरैः प्रायोजि। नैयायिकैः भाट्टैश्च तात्पर्यस्यापि शाब्दकारणता अङ्गीकृता। प्राभाकरैर्नोपगता। भाट्टैः नैयायिकमतमेवात्र सर्वथा अनुसृतम्।

२३. शब्दार्थयोः अभिधानाभिधेयनियमरूपं नैयायिकोक्तं अनित्यं सम्बन्धं सन्त्यज्य, मीमांसकैः प्रत्याय्य-प्रत्यायकभाव-रूपः अपौरुषेयः सम्बन्धः समकल्पि। नव्यनैयायिकोक्तः इच्छा-मात्रभूतः सङ्केताख्यः शब्दार्थसम्बन्ध एव उपादेयः। न तु नित्यः प्रत्याय्य-प्रत्यायकभावरूपः मीमांसकोदितः।

२४. भाट्टमते लक्षितलक्षणा नास्तीति व्यवह्रियते। तथापि तेषां लक्षितलक्षणा इष्टैवेति पार्थसारथिमिश्रवाक्यानु-रोधं अवधार्यते। नास्ति गौण्याः वृत्तित्वम्। वेदापौरुषेयत्व-प्रतिपादनौपयिकतया मीमांसकाः प्राचीननैयायिकवत् अन्वया-नुपपत्तिं लक्षणाबीजमिति वदन्ति। किन्तु नव्यनैयायिकोक्त-प्रकारेण तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति निश्चप्रचम्।

२५. भाट्टोक्तः अभिहितान्वयवादः, प्राभाकरोक्तः अन्वि-ताभिधानवादश्च नैयायिकैः नाङ्गीकृतौ। नैयायिकोक्तः तात्प-र्यशक्तिवादः समीचीन इति प्रबन्धेऽस्मिन् उदपादि। अस्य जातिविशिष्टशक्तिवाद इति व्यवहारः। अन्विताभिधानवाद इति नैयायिकमते व्यवहारः न युज्यते।

२६. भावनामुख्यविशेष्यकबोधः मीमांसकैरभ्युपगतः। प्रथमान्तार्थमुख्यविशेष्यकबोध एव प्राचुर्येण सर्वजनानुभवसाक्षिकः नैयायिकसिद्धान्तः।

२७. व्याप्तिनिबन्धनत्वं लिङ्गस्योच्यते। अन्वयव्याप्तिनिबन्धनं केवलान्वयिलिङ्गमभ्युपगम्य केवलव्यतिरेकव्याप्तिनिबन्धनस्य केवलव्यतिरेकिलिङ्गस्यानभ्युपगमे, तत्स्थाने अर्थापत्तेरभिषेके च विनिगमकं औचित्यं च न स्तः। अर्थापत्तेः प्रसिद्धानुव्यवसायस्य अभावात् न सा प्रमाणतया समुपादेया। नैयायिकमतमत्र मीमांसकैः परित्यक्तम्।

२८. अभावः पदार्थ एव। किन्तु न तस्य पृथक् प्रमाणत्वम्। अत्र त्रयाणां सिद्धान्तानां भूयान् भेदः। प्रत्यक्षेणानुमानेन वा अभावस्य गतार्थतेति नैयायिकपक्षः शोधप्रबन्धेऽस्मिन् प्रत्यपादि।



# BIBLIOGRAPHY AND ABBREVIATIONS

## अध्येयग्रन्थसूची

### सङ्केतसहिता

### (क) संस्कृतग्रन्थाः


अद्वैततत्त्वशुद्धिः (अ. त. शु.)
अनन्तकृष्णशास्त्री, मद्रास्, १९५८

अभिधर्मकोशः (अ. को)
स्वामी द्वारिकादासशास्त्री, वाराणसी, १९७०

अष्टाध्यायी (अष्टा.)
चन्द्रशेखरशास्त्री, तिरिच्चिनापल्ली, १९१०

कारिकावली (कारि.)
सूर्यनारायणशुक्लः, काशी,

कारिकावली (कारि.)
सि. शङ्कररामशास्त्री, मद्रास्, १९२३

काशिका
के. साम्बशिवशास्त्री, त्रिवेन्द्रम्, १९२६

किरणावली (किर.)
जे. एस्. जटली, बरोडा, १९७२

कुमारिलमतोपन्यासः (कु. म.)
एस्. के. पिल्लै, त्रिवेन्द्रम्, १९५४

गादाधरी (गादा.)
विन्ध्येश्वरीप्रसादद्विवेदी, वाराणसी, १९७०

गुरुसम्मतपदार्थाः (गु. स. प.)
एस्. के. पिल्लै, त्रिवेन्द्रम्, १९५४

तत्त्वचिन्तामणिः (प्रत्यक्षखण्ड.) (त. चि. प्र.)
एन्. एस्. रामानुजताताचार्यः, तिरुपति, १९७३

तत्त्वचिन्तामणिः (अनुमानखण्डः) (त. चि. अ.)
विन्ध्येश्वरीप्रसादद्विवेदी, वाराणसी, १९७०

तत्त्वचिन्तामणिः (अनुमानखण्डः) (त. चि. अ.)
बदरीनाथशुक्लः, वाराणसी, १९७६

तत्त्वचिन्तामणिः (शब्दखण्डः) (त. चि. श.)
पि. बि. अनन्ताचार्यः काञ्ची, १९०४

तत्त्वचिन्तामणेः प्रत्यक्षखण्डस्य नवीनं संस्करणं तुलनात्मकमध्ययनञ्च
एन्. एस्. रामानुजताताचार्यः १९७३

तत्त्वप्रदीपिका (त. प्र.)
स्वामी योगीन्द्रानन्दः, काशी, १९५६

तत्त्वबिन्दुः (त. बि.)
वि. ए. रामस्वामिशास्त्री, अन्नामलै, १९३६

तन्त्ररहस्यम् (त. र.)
के. एस्. रामस्वामिशास्त्री, बरोडा, १९५६

तन्त्रवार्तिकम् (त. वा.)
सुब्बाशास्त्री, पूना, १९२३
तन्त्रसिद्धान्तरत्नावली (त. सि. र.)
पि. एन्. पट्टाभिरामशास्त्री, बेनारस्, १९४४
तर्ककौमुदी (त. कौ.)
लक्ष्मणशास्त्री पणशीकरः, मुम्बई, १९२८
तर्कताण्डवम् (त. ता.)
डि. श्रीनिवासाचार, मैसूर, १९३५
तर्कप्रकरणम् (त. प्र.)
(विवृति.) वामाचरणभट्टाचार्यः, वाराणसी, १९४४
तर्कभाषा (त. भा.)
डि. आर, भण्डारकरः, मुम्बई, १९३७
तर्कभाषाप्रकाशिका (त. भा. प्र.)
डि. आर्. भण्डारकरः, मुम्बई, १९३७
तर्कशास्त्रनिरूपणम् (त. नि.)
पि. बि. अण्णङ्गराचार्यः, श्रीपेरुम्बूदूर, १९३८
तर्कसङ्ग्रहः (त. स.)
ए. डि. पुसल्कर, मुम्बई, १९६३
तर्कामृतम् (तर्का.)
महेशचन्द्रः, कलिकाता, १८८०
तात्पर्यटीका (ता. टी.)
अनन्तलालठक्कुरः, दर्भाङ्गा, १९६७

तैत्तिरीयब्राह्मणम् (तै. ब्रा.)
गाड्बोले, पूना, १८९८
त्रिवेणिका (त्रिवे.)
बटुकनाथशर्मा, वेनारस्, १९२५
दर्शनोदयः (दर्श.)
श्रीनिवासाचार्यः, मैसूर १९३३
दिनकरी (दिन.)
सि. शङ्कररामशास्त्री, मद्रास्, १९२३
दीधितिः
विन्ध्येश्वरीप्रसादद्विवेदी, वाराणसी, १९७०
दीपिका
ए. डि. पुसल्कर, मुम्बई, १९६३
नयविवेकः (न. वि.)
एस्. के रामनाथशास्त्री, मद्रास्, १९३७
नीतितत्त्वाविर्भावः (नीति.)
पि. के. एन्. पिल्लै, त्रिवेन्द्रम्, १९५३
नीलकण्ठप्रकाशिका (नी. प्र.)
सत्कारिशर्मा, वारणसी, १९६९
न्यायकन्दली (न्या. कं.)
दुर्गाधरझाशर्मा, वाराणसी, १९६३
न्यायकलिका (न्या. क.)
गङ्गानाथझा, बेनारस्, १९२५

न्यायकुसुमाञ्जलिः (न्या. कु.)
महाप्रभु लालगोस्वामी, दर्भङ्गा, १९७२
न्यायकुसुमाञ्जलिः (न्या. कु.)
पि. लक्ष्मीनारायणशास्त्री, मद्रास्, १९३९
न्यायतात्पर्यटीका (न्या. ता. टी.)
सतीशचन्द्रविद्याभूषणः, कालिकाता, १९१०
न्यायदर्शनम् (न्या. द.)
अनन्तलालठक्कुरः, दर्भङ्गा, १९६७
न्यायदर्शनबिन्दुः (न्या. द. बि.)
कालीपदतर्काचार्यः वाराणसी, १९६४
न्यायपरिशुद्धिः (न्या. प.)
पि. बि. अण्णङ्गराचार्यः, काञ्चीपुरम्, १९४०
न्यायबोधिनी (न्या. बो.)
ए. डि. पुसलकर्, मुम्बई, १९६३
न्यायमञ्जरी (न्या. म.)
गङ्गाधरशास्त्री तैलङ्गः बेनारस्, १८९५
न्यायमञ्जरी (न्या. म.)
सूर्यनारायणशुक्लः, वाराणसी, १९७१
न्यायमुक्तावली (न्या. मु.)
एस्. सुब्रह्मण्यशास्त्री, मद्रास्, १९६१
न्यायरत्नमाला (न्या. र. मा.)
ए. सुब्रह्मण्यशास्त्री, डिल्ली, १९७२

न्यायवार्तिकम् (न्या. वा.)
अनन्तलाल ठक्कुरः, दर्भङ्गा, १९६७
न्यायसारः (न्या. सा.)
एस्. सुब्रह्मण्यशास्त्री, मद्रास्. १९६१
न्यायसारः (न्याय.)
(महादेवविरचितः) नागेश्वरपन्त् काशी, १९६२
न्यायसिद्धान्तदीपः (न्या. सि. दी.)
विन्ध्येश्वरीप्रसादद्विवेदी, बेनारस्, १९२४
न्यायसिद्धिः (न्या. सि.)
ए. सुब्रह्मण्यशास्त्री, बेनरस्, १९६१
न्यायसूत्रवृत्तिः (न्या. सू. वृ.)
विन्ध्येश्वरीप्रसादद्विवेदी, बेनारस्, १९२०
पदवाक्यरत्नाकरः (प. वा. र.)
नन्दिनाथमिश्रः वाराणसी, १९६०
पदार्थतत्वनिरूपणम् (प. त. नि.)
विन्ध्येश्वरीप्रसादद्विवेदी, बेनारस्, १९१९
पदार्थतत्वनिरूपणम् (प. त. नि.)
कर्ल हेच् पाटर्, हार्वर्ड
पदार्थरत्नमाला (प. र. मा.)
नागेश्वरपन्त्, काशी, १९०६
परिशुद्धिः (परि.)
अनन्तलालठक्कुरः, दर्भङ्गा, १९६७

परिष्कारदर्पणम् (प. द.)
राजनारायणशुक्लः, बेनारस्, १९३४
प्रकरणपञ्चिका (प्र. प.)
ए. सुब्रह्मण्यशास्त्री, काशी, १९६१
प्रभाकरविजयः (प्र. वि.)
अनन्तकृष्णशास्त्री, कलिकाता, १९२९
प्रमाणमञ्जरी (प्र. म.)
मङ्गेशशर्मा मुम्बई, १९३७
प्रमाणान्तर्भावः (प्रमा.)
स. च. विद्याभूषणः, कलिकाता, १९६९
प्रशस्तपादभाष्यम् (प्र. भा.)
ढुण्ढिराजशास्त्री, काशी, १९२३
ब्रह्मसूत्राणि (ब्र. सू.)
पि. बि. अण्णङ्गराचार्यः, काञ्ची, १९३९
बृहती
एस् के. रामनाथशास्त्री, मद्रास्, १९३४
बृहतीपञ्चिका (बृ. प.)
एस्. के रामनाथशास्त्री, मद्रास्, १९३४
भाट्टचिन्तामणिः (भा. चि.)
सूर्यनारायणशुक्लः, बेनारस्, १९३४
भाट्टरहस्यम् (भा. र.)
पि. बि. अनन्ताचार्यः, काञ्ची, १९००
भाट्टसारः (भा. सा.)
श्रीकृष्णताताचार्यः, श्रीरङ्गम्, १९१२

भामती
अनन्तकृष्णशास्त्री, मुम्बई १९१७
मणिकण: (म. क.)
ई. आर् श्रीकृष्णशर्मा, मद्रास्, १९६०
मणिदर्पण: (म. द.)
टि. गणपतिशास्त्री, त्रिवेन्द्रम्, १९१३
मानमेयरहस्यश्लोकवार्तिकम् (मा. र. वा.)
एल्. श्रीनिवासाचार्यः, मैसूर्, १९२५
मानमेयोदय: (मा. मे.)
सि. कुन्हन्राजः, मद्रास् १९२३
मीमांसाभ्युदय: (मी. अ.)
डि. टि. ताताचार्यः, कुम्भघोणम्, १९२५
मुक्तावली (मुक्ता.)
सूर्यनारायणशुक्लः, काशी, १९३३
मुक्तावलीव्याख्या प्रभा [मुक्ता. प्र.]
सि. शङ्कररामशास्त्री, मद्रास्, १९२३
योगदर्शनम् [यो. द.]
बालरामोदासीनः, बेनारस्, १९११
लक्षणावली (लक्ष.)
विन्ध्येश्वरीप्रसादः, बेनारस्, १८९७
वाक्यपदीयम् (वाक्य.)
पि. सूर्यनारायणशास्त्री, हैदराबाद, १९७४
विभ्रमविवेक: (वि. वि.)
एस्. कुप्पुस्वामिशास्त्री, मद्रास्, १९३२

विवेकतत्त्वम् (वि. त.)
एस्. के. रामनाथशास्त्री, मद्रास्, १९३७
वेदान्तपरिभाषा (वे. प.)
त्र्यम्बकरामशास्त्री, बनारस्, १९५४
वैयाकरणसिद्धान्तकौमुदी (वै. सि. कौ.)
गोपालशास्त्रिनेने, वाराणसी, १९६३
वैयाकरणसिद्धान्तलघुमञ्जूषा (वै. ल. म.)
माधवशास्त्री भण्डारी, बेनारस्, १९२७
वैशेषिकदर्शनम् (वै. द.)
ढुण्ढिराजशास्त्री, काशी, १९२३
वैशेषिकरसायनम् (वै. र.)
टि. वीरराघवाचार्यः, मद्रास्, १९५८
वैशेषिकोपस्कारः (वै. उ.)
ढुण्ढिराजशास्त्री, काशी, १९२३
व्युत्पत्तिवादः (व्यु. वा.)
राजनारायणशुक्लः, बेनारस्, १९३५
शक्तिवादः (श. वा.)
दामोदरशास्त्री, बेनारस्, १९२९
शाबरभाष्यम् (शा. भा.)
एस् के. रामनाथशास्त्री, मद्रास्, १९३४
शाब्दतरङ्गिणी (शा. त.)
वि. सुब्रह्मण्यशास्त्री, मद्रास्, १९६९
शास्त्रदीपिका (शा. दी.)
धर्मदत्तसूरिः, मुम्बई, १९१५

श्रीमद्रामायणम् (श्री. रा.)
के. एस्. वरदाचार्यः, मैसूर्, १९५९
श्लोकवार्तिकम् (श्लो. वा.)
के. सुब्बाशास्त्री, पूना, १९२९
सप्तपदार्थी (स. प.)
जे. एस्. जेट्ली, अमदाबाद्, १९६३
सर्वदर्शनकौमुदी (स. कौ.)
के. साम्बशिवशास्त्री, त्रिवेन्द्रम्, १९३८
सर्वदर्शनसङ्ग्रहः (स. स.)
काशीनाथवासुदेव अभ्यङ्करः, पूना, १९५१
सांख्यतत्त्वकौमुदी (सा. त. कौ.)
तारानाथतर्कवाचस्पतिः, कलिकाता, १८७१
सिद्धान्तचन्द्रिका (सि. च.)
धर्मदत्तसूरिः, मुम्बई, १९१५
सिन्द्धान्तलक्षणम् (सि. ल.)
विन्ध्येश्वरप्रसादद्विवेदी, वाराणसी, १९००

**कोशाः**

अमरकोशः (अम. को.)
शिवदत्तः, मुम्बई, १९४४
न्यायकोशः (न्या. को.)
भीमाचार्यझल्कीकर, पूना.
मीमांसाकोशः (मी. को.)
केवलानन्दसरस्वती, पूना, १९५३
सांख्ययोगकोशः (सा. को.)
केदारनाथत्रिपाठी, वाराणसी, १९७४

(ख) संस्कृतशोधपत्राणि

किशोरनाथ झा, 'नैयायिकाचार्यशङ्करमतालोचनम्"
J. G. J. K. S. V. Vol. XXVIII, 1972, पृ. १८७ - ९५

.........., 'विरोधप्रतीतौ विरोधाप्रतीतिः"
J. G. J. K S. V. Vol. XXIX, 1973, पृ ११ - १८

कोधिया डि. एन. 'भारतीय दर्शनों में प्रमाणभेद को महत्त्वपूर्ण चर्चा' Anekānta XXII. (1), 1969 पृ. ११ १३

केदारनाथत्रिपाठी, "न्यायमीमांसयोः प्रमाणविचारः",
सरस्वतीसुषमा, २२ (३ ४) पृ. ३२१ - ३६

........................, "प्रमाणेषु शब्दस्य स्थानम्"
सरस्वतीसुषमा, २८ (१) पृ. ७५ - ८१

कृष्णमाचार्य, वि. "कार्यकारणभाव.",
S.V.U.O.J Vol.IV, 1961

कृष्णमाधवझा, "अभावविचारः"
P.A I.O.C., 14-4, 1948, पृ ४ - ६

दास् आर्. "मीमांसाभिमतं देवतातत्त्वम्",
सागरिका १९६९, पृ. ४१ - ४७

भागीरथप्रसाद त्रिपाठी वागीशः शास्त्री,
धारणपोषणार्थकः धा (डुधाञ) अर्थविज्ञानम्" J.G.J.K.S.V.,
Vol. XXIX, parts, 1-4, 1973 पृ. १९ - २४

मधुसूदनन्यायाचार्यः "प्रत्यक्षप्रमाणविमर्शः 27th AIOC,
SP: Kurukshetra, 1974, पृ. ३४६ - ४७

मोहनधडफले, बौद्धन्यायवैशेषिकदृष्ट्या शब्दानां समानार्थकता
J.G.J.K.S.V., Vol XXIX, 1973 पृ. २५ - ३४

रघुनाथाचार्यः, एस्. बि. 'अन्नम्भट्टः'
J. G. J. K. S. V. Vol. XXVIII, 1972, पृ. २०३-२०८

.........................., दिङ्नागोक्तहेत्वाभासविमर्शः" श्रीवेङ्कटेश्वर
प्राच्यविद्यापरिशोधनालयपत्रिका, १९७७

………………, "वात्स्यायनः" सं २, सं १४२-१५२, सुधर्मा मैसूर, १९७२

रामप्रसादत्रिपाठी, "प्रमाणभेद-तत्त्वाध्यचर्चा", श्री चारुदेव-शास्त्र्यभिनन्दनग्रन्थः, दिल्ली, १९७३, पृ. १६८ - १७१

रामानुजताताचार्यः, एन्. एस्. "ख्यातिसमीक्षा" विमर्शः. रा. सं. संस्थानम् Vol. II (l), 1974

………………, "निर्विकल्पकज्ञानविचारः", श्री चारुदेव-शास्त्र्यभिनन्दनग्रन्थः, दिल्ली, १९७३, पृ. १५० - १६०

………………, "वचननिर्णयः," विमर्शः Vol. १ K. S. V. Tirupati, 1972, पृ. २१ - २६

वरदाचार्यः, वे. "न्यायविशिष्टाद्वैतमतयोः प्रमाणविचारः", सरस्वतीसुषमा २२ (३-४) पृ. ३०६ - ३२९

श्यामसुन्दर शर्मा, "मीमांसकतार्किकाभिमतोपमास्वरूपविचारः सरस्वतीसुषमा १७ (३-४) पृ. २९७ - ३०३

श्रीरामपाण्डेयः, "प्रत्यक्षज्ञानमीमांसा", सरस्वतीसुषमा, १९ (४) पृ. १४५ - ५४, २० (२) पृ.७९ - ९४, २१ (१) ३८ - ५३

सुब्रह्मण्यशास्त्री, वे. "न्यायनिबन्धेषु शाब्दिकप्रक्रियाभेदः" श्रीचारुदेवशास्त्र्यभिनन्दग्रन्थः, दिल्ली, १९७३, पृ. १०४-११२

सुब्रह्मण्यशास्त्री, एस्. "पूर्वमीमांसान्यायानां वेदान्तार्थनिर्णयोपयोगः" सरस्वतीसुषमा, २५ (२) पृ. १३३ - ४०

………………, "मीमांसकमते मोक्षविचारः" *J.G.J.K.S.V.* Vol. XXIX, 1973, पृ. ६४ - ६६

हरिरामशुक्लः, "तर्कस्वरूपविमर्शः", सरस्वतीसुषमा, १७ (३-४) पृ. ३७८–९२

# SELECT BIBLIOGRAPHY

## (A) Modern Works


Bijalwan, C. D., Indian theory of knowledge based on Jayanta's Nyāya-mañjari; (=ITK) New Delhi, 1977.

Bhatt, Govardhan P., Epistemoloy of the Bhāṭṭa School of Pūrvamīmāṁsā, (=EBP), Vāraṇasi, 1962.

Bāṭṭāchārya, D., Hirtory of Navyanyāya in Mithila (=HNM), Darbhanga, 1958.

Bhaṭṭāchārya, T., The Nature of Vyāpti according to the Navyanyāya, (=NVN) Calcutta, 1970.

Bodas, M. R., Tarkasaṃgraha, (=TS), Bombay Sanskrit Series, No. LV, Poona, 1963.

Bosanquet, B., The Essentials of Logic, being ten Lecturers on Judgement and Inference, (=EL), LONDON, 1906.

Dāsgupta, S., History of Indian Philosophy, (=HIP) Vol. 1, Cambridge, 1922.

Dattā, D. M., The six ways of knowledge, (=SK), Calcutta, 1960.

Hob house, L. T., Tne The Theory of knowledge (=TK), LONDON, 1896.

Ingalls, Daniel H.H. Materials for the study of Navyanyāya Logic, (=MNL), H.O.S. Vol.40, Haryard, 1951

Jha, Gangānatha., Pūrvamīmāṁsā in its Sources, (=PMS), Banaras Hindu University Banaras, 1964.

......... ............., The Prābhākara School of Pūrv mīmāṁsā (=PSP), Allahabad, 1911.

Jwālāprasād., Indian Epistemology, (=IE), Lahore, 19'9.

Keith A.B., Indian Logic and Atomism, (=ILA), OXFORD, 1921.

Misra, Umesa., History of Indian Philosophy (=HIP).

Maxmuller, Fr., The six system of Indian Philosophy (=SSIP). New Delhi, 197?.

Matilāl, B K., The Navva-Nyāya Doctrine of Negation (=NDN), Harvard University, 1968.

Potter, K., Padārthatattvanirūpaṇam (=PTN) Harvard University, 1957.

Rādhākrishṇan, S., History of Philosophy Eastern and Western, (=HPEW), London, 1952.

Rāja., K.K. Indian Theories of Meaning (=ITM), Madras, 1963.

Rubed, W., Die Nyāya-Sūtrās text, Ubersetzung, Erlauterungund Glossar, (=NS), Leiqzig. 1928.

Śarma, E.R.S., Indian Philosophical systems, (=IPS) Karnataka University, Dharwar, 1973.

Ui, H. The Vaiśeṣika Philosophy according to Daśapadārtha Śāstra, (=VPD), London, 1917

Vidyābhūshaṇa, S C., A History of Indian Logic, (=HIL), Delhi 1971.

Wittgenstein, L., Tractatus Logico-Philosophicus (=TLP), London, 1951.

(B) Research Journals

Āchārya, B, "The Tarkapāda", *Journal of of the University of Gauhati'* (=*JUG*, *1953*.

Bhaṭṭ G K, "Scope of Lakṣaṇā", *Journal of Gangānātha Jha Kendrīya 'Sanskrit Vidyāpeetha* (=JGJ), Vol. XXIX, Allahabad, 1973, PP. 117-32.

Bhaṭṭāchārya, B K., "The Anomaly of Vyatireki Inference" *All India Oriental Conference* (=*AIOC*) XHV, SP: 1969, PP. 236-38.

Bhaṭṭāchārya, Gopikāmohan., "Import of Sentence" (Anvibhidhānavāda), *'Our Heritage'* (=OH), 1953, PP. 77-84.

Bhaṭṭāchārya. Vibhūtibhūṣan., and ArabindaBasu, "Later Nyāya Vaiśeṣika" *History of Philosophy Eastern and Western*, (=HPEW), Vol I, Lodon, 1952, PP. 231-241.

Bijalwan, C D, "A Critique of Kumārila's Theory of Srutārthāpatti", *J G.J K S.V. Vol. XXIX* Allahabad, 1973, PP. 159-.72,

………………………, "Bhaṭṭajayanta's Theory of the test of the Truth of Knowledge,"

*J. G. J. K. S. V.* Vol. XXVIII Parts 3-4, Allahabad, 1972, Pp. 149-158.

Chaterjee, Satīśhchandra, "Early Nyāya-Vaiśeṣika, *HPEW* Vol. 1, pp.219-230.

......................, "Nyāya Doctrine of Pramāṇa", *Journal of the Department of letters*, University of Calcutta, (=JD UC) *16*, 1920, Pp. 1-62.

Devasthali, G.V. "Sābara and the Nyāya-Vaiśeṣika Darśanās" *Journal of Oriental Research*, (=JOR), *18*, 1948-49, Madras, Pp. 16-24.

Dhruva, A.B. "Trividhaṃ Anumānaṃ", *PS, of the First Oriental* Conference, (=PS. O. C.), Poona-1919.

Dixit, Srīnivās, "The Redundance of the Vyatireka Vyāpti of the Nyāya system", *Philosophical Quarterly*. (=P Q.), 123, Amalner, 1950, pp. 13-16.

Frauwallner, E., "Materialien Zur Altesten Erkennthislehre der Karmamīmāmsā", *O.A. der Wissenchaften* 1968.

Gangopādhyāy, M.K., "Jagadīśa on the Independence of the Sabda Pramāṇa", *A.I.O.C. XXVI, SP*: Ujjain, 1972, Pp. 246.

Guha, D.C., "Upamānaṃ or the special source of the Valid knowledge called Upamiti", *Prabhuddha Bhārata*, (=PB), 48, 1943, P. 367 fl.

Gupta, B., "Pramāṇasāmagrīvāda of Jayanta Bhaṭṭa" *A.I.O.C*.

XXV, 1969, SP: Pp. 287–88

Harrison, C., "Hindu Logic", *Contemporary Review*, (=CR); CCXV (1245), London, 1969, Pp. 189-92.

Jacobi, Hermann, "Mîmâmsâ and Vaiśeṣika", *Indian Studies in Honour of Charles Rock WellLanman*- (=IHCL), Harvard University, 1929, Pp. 145–165.

.........................; "Vīta and Avīta", *Aus Indiens kultur, Festgabe Richard von garbe*, Erlangen, 1927, Pp. 8—16.

Jwālāprasād., "Discussion of the Buddhist doctrines of Momentariness and subjective Idealism in the Nyāya Sūtras", *J.R.A.S* 1930.

Pant, A.S.V., "Epistemology in the Nyâya—Vaiśeṣika system with special reference to Sabda", *A.I O.C.*- XXV, SP: 1969, P. 228.

.........................; "Epistemology-Pratyakṣa", XXVI, *AIOC*, Ujjain, SP: 1972, P. 265.

Raghunāthāchārya, S.B., "A Note on the word Pretya-Bhāva", paper read in the Indo Aryan Linguistic section of the sixth All India Confe-rence of Linguists, 1976.

.........................; "Pillai Lokācārya on forms of God" *Prof. Subbureddiyar felicitation volume*, (=SFV), 1977.

Râmaswâmi Iyer, V.A., "The Pūrvamīmāṁsā", *HPEW* Vol. I, London, 1952, Pp. 258-271.

Sarma E R S., 'Syntactical Meaning - Two Theories", Adayar Library bulletin. (= ALB), Pp 41-62.

..............., "The Mahâvidyā Syllogism", ALB 28, 1964, Pp. 212-20.

Śhāstri, H.P. "An Examination of the Nyāya Sūtras", JASB 1905.

Tripāthi, Choṭalal., "The Idialistic Theory of Inference ABORI, Vol LI, 1970. Pp. 175.88.

Tucci, "Buddhist Logic before Diṅnāga" JRAS, 1929.

Varadāchāri, V., "A Note on Nirvikalpa and Savikalpa perceptions in Indian Philosophy' PS: of International Congress of Orientalists, (=ICO), IIi(.) Pp 498-503.

..............., "Anaikânta fallacy in the Nyāya - Vaiśeṣika Schools", Sri Venkateśwara Oriental Journal, (=SVOJ), Vol. IV, 1961 pp.1-4.

..............., "Conditions for the rise of Perceptual Cognition", Prof. Sūryakumār Bhūyān Commemoration Volume.



..............., "Requistes of a good Hetu", Annalas, B O R.I. Vol. XLVI, 19 5, Pp. 143-49.

..............., "Scope and Basis of lakṣaṇā in the Nyāya Vaiśeṣika Schools", ṚTAM I (1) 1969, Pp. 143-49.

Yamakāmi, Shodo, "Bhāsarvajñā's reputation to Naiyāyikās Upamāna", Journal of Indian and Buddhist Studies, University of Tokyo, Japan, Vol. XVII (2), 1969, Pp. 888.

वस्तुवृत्त्या तदप्येतदवस्तु यदि वर्ण्यते ।
अनुमानं कथं वस्तु तद्बलेनोपकल्पितम् ॥ ७५८ ॥
विश्वभेदमृषात्वस्य यतस्तस्माद्व्यवस्थितिः ।
न ह्यवस्तुवशात्किञ्चिन्मेयं शक्यनिरूपणम् ॥ ७५९ ॥
तत एवान्यथा विश्वभेदयाथात्म्यनिर्णयात् ।
कुतश्चित्तन्मृषावादः क्वास्पदं प्रतिपद्यताम् ? ॥७६०॥
अवस्तु न हि नामेह त्वयैव सुलभं भुवि ।
तत्कृता तत्त्वनिर्णीतिर्यत्त्वैवेति कल्प्यताम् ॥ ७६१ ॥

तस्माद्वस्त्वेवानुमानम् अन्यथा ततोऽन्ययोगव्यवच्छेदेन साध्यव्यवस्थापनानुपपत्तेः । [1]अंतस्तत्सत्यत्वनिदर्शनं मरणादिकमपि वस्त्वेवेत्युपपन्नस्तेन व्यभिचारः साधनस्य ।

विद्याऽविद्याभेदेन च। न हि विद्याविद्ययोरभेदः । न च विद्याविद्ययोरियमियञ्चेत्यादिः प्रत्येकमनुगमो नास्ति मृषात्वाभावेऽपि इति । [2]तद्भेदस्यापि मृषात्वमेवेति चेत् ; कुत इदानीं संसारः ? तन्निबन्धनस्य पृथगविद्यारूपस्याभावात् ? कल्पितादिति चेत् ; कुतस्तत्[3]कल्पनम् ? प्राच्यादेव [4]तद्रूपादिति चेत् ; न; तस्यापि वस्तुतो विद्यापृथग्भूतस्याभावात् । तदपि कल्पितमेवेति चेत् ; न; 'कुतः' इत्यादेः प्रसङ्गादनवस्थानात् । नायं दोषः, अनादित्वात्[5]तत्प्रबन्धस्येति चेत् ; तस्य तर्हि वस्तुत एव विद्यापृथग्भावे तदवस्थं व्यभिचारित्वम् । अपृथग्भावे तु स एव प्रसङ्गः 'कुत इदानीं संसारः' इत्यादि । पुनरपि 'कल्पितात्' इत्यादिवचने 'कुतस्तत्कल्पनम्' इत्यादिप्रसङ्ग आवर्त्तमानो महान्तमनवस्थादोषमुपनिपातयेत् । तस्मादतिदूरमभिलप्यापि [6]तस्य [7]तत्पृथग्भावस्तात्त्विक एव वक्तव्यः । कथमन्यथा अयमाम्नायः–

"विद्यां चाविद्याञ्च यस्तद्वेदोभयं सह" ॥ [ईशा०श्लो० ११] इति ।

"[9]विद्योविद्ये न्ये ( द्वे ) अप्युपायोपेयभावात् सहिते" [ब्रह्मसि० व्या० पृ० १३] इति च तद्विवरणं [10]मण्डनं (नस्य); निरवकाशत्वात् । तथा हि–

यदि विद्यापृथग्भावो वस्तुनः कल्पितस्य वा ।
[11]तत्प्रबन्धस्य नास्त्येव क्व प्रतिष्ठा [12]सह श्रुतेः ॥ ७६२ ॥
सत्येव यत्पृथग्भावे [13]तत्प्रयोगस्य दर्शनम् ।
[14]सह चैत्रेण मैत्रोऽयं स्थूल इत्यादिषु स्फुटम् ॥ ७६३ ॥

---

१ अतस्तत्त्वनि–आ०, ब०, प० । २ विद्याऽविद्याभेदस्यापि । ३ अविद्यारूपकल्पनम् । ४ अविद्यारूपात् । ५ अविद्यासन्तानस्य । ६ अविद्यारूपस्य । ७ विद्यापृथग्भावः । ८ मैत्रा० ७।९ । भवसन्त० ३।१ । ९ विद्यावि- द्येत्वे प० । विद्याविद्येन्वे आ०, ब० । १० मण्डनस्तुनि–आ०, ब०, प० । 'मण्डनम्' इति पाठे 'मण्डनकृतम्' इत्यर्थो ग्राह्यः । ११ अविद्याप्रबन्धस्य । १२ 'यस्तद्वेदोभयं सह' इत्यत्रोक्तस्य सहशब्दस्य । १३ सहशब्दप्रयोगस्य । १४ समाचै–स० ।

उपायोपेयभावश्च (श्चाऽ) पृथग्भावे कथं भवेत् ? ।
तद्विद्याविद्ययोर्येन [2]सुमण्डं मण्डनोदितम् ॥ ७६४ ॥

स्यान्मतम्—न तस्यै [3]विद्यापेक्षं पृथक्त्वं नाप्यपृथक्त्वम्, अवस्तुत्वात् । वस्तुन एव हि कस्यचित्कुतश्चित्पृथक्त्वापृथक्त्वाभ्यां व्यपदेशो नावस्तुनः । तदयं ताभ्यामनिर्वचनीयै[4] एवेति; तदपि न सङ्गतम्; यस्मात्—

अयमेव च विद्यायाः स्वभावो यदि कल्प्यते ।
साप्यविद्यैव विद्याया वार्त्तापि क्वोपलभ्यताम् ? ॥ ७६५ ॥
विद्यायाश्चेत्स्वभावोऽन्यो वास्तवः [5]परिपठ्यते ।
अविद्यातः पृथग्भावः कथमेवं निषिध्यताम् ?॥७६६॥
स्वभावभेद एवायं पृथग्भावः प्रसिद्धिमान् ।
भावेषु यस्मात्तन्नेयं चर्चितार्था वचोगतिः ॥७६७॥
कथं चैवं पृथग्भावस्तस्याविद्यान्तरादपि ।
[6]तदपेक्ष्यापि यत्तस्या वस्तुत्वं तदवस्थितम् ॥७६८॥

मा भूदिति चेत्; कथमिदानीं तस्याम्नायोपजनितात्मैकत्वादिज्ञानलक्षणस्य प्रपञ्चरूपमृत्युं प्रति प्रत्यनीकतया तन्निस्तरणत्वम् ? यतँ इदं स्वाम्नातं भवेत्—

"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" [ईशा० श्लो० ११] इति ।

सत्येव मिथः पृथग्भावे विषादेर्विषान्तरोपशमनादेरुपलम्भात् । अवस्तुसतोऽपि अविद्यान्तरात्पृथग्भावे तद्वदेव विद्यातोऽपि भवेत् अविशेषादित्युपपन्नो व्यभिचारः साधनस्य, विद्याविद्याभेदस्यामृषात्वेऽपि तद्भावात् । ततो मण्डनादिभिरपि व्यभिचारदोषमजानानैरेव प्रकृतमनुमानमुपदर्शितमित्यावेदयति **'विप्लुताक्षा'** इत्यादिना ।

विविधं प्लुतं प्लवनं तरङ्गादिषु यस्य स विप्लुतो जलचन्द्रादिः, तमक्ष्णोति विषयत्वेन व्याप्नोतीति **विप्लुताक्षा बुद्धिः यथा** येन तद्विषयस्याभेदानुविद्धत्वादिना प्रकारेण **वितथप्रतिभासिनी** मृषाचन्द्रादिभेदोपदर्शिनी, तथा तेनैव प्रकारेण **सर्वत्र** बुद्धिः **किन्नेति जडाः** ब्रह्मविदः **सम्प्रतिपेदिरे** । जाड्यं तु तेषां व्यभिचारदोषापरिज्ञानात् अविद्यापरिकल्पितात्मत्वाद्वा प्रतिपत्तव्यम् ।

यत्पुनरेतत् कामिन्यादिबुद्धिवत् तरङ्गचन्द्रादिवच्चेति निदर्शनम्—तत्रापि वितथप्रति-

१ –वश्चेत् पृ–स० । २ सुष्ठु मण्डनं समर्थनं यस्य तत् सुमण्डम् । ३ अविद्याप्रबन्धस्य । ४ "नाविद्या ब्रह्मणः स्वभावः, नार्थान्तरम्, नात्यन्तमसती, नापि सती, एवमेवेयमविद्या माया मिथ्या प्रतिभास इत्युच्यते । स्वभावश्चेत् कस्यचित्, अन्योऽनन्यो वा परमार्थ एवेति नाविद्या; अत्यन्तासत्त्वे खपुष्पसदृशी, न व्यवहाराङ्गं तस्मादनिर्वचनीया"–ब्रह्मसि० पृ० ९ । ५ परिपथ्यते ता० । ६ तदपेक्षायत्तस्य प० । तदपेक्षापि यत्तस्य आ०, ब० । ३ इदं साम्नातं आ०, ब०, प० ।

